चोरयित्वा, चुचोरयिषित्वा;
प्रचोर्य, प्रचुचोरयिष्य ;
चोरम् २ } चुचोरयिषम् २; }
चोरयित्वा २ } चुचोरयिषित्वा २. }

(547) " **चुल समुच्छ्राये** " (X-चुरादिः-1602. सक. सेट्. उभ.)

चोलकः-लिका, चुचोलयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-चोरयतिवत् (546) ज्ञेयानि। सञ्चोलितम्[A] । क्विपि चोल्-चोलौ-चोलः; इति रूपाणीति, चोलना इति स्त्रियां युचि रूपमिति च विशेषः ।

(548) " **चुल्ल भावकरणे** " (I-भ्वादिः 531. अक. सेट्. पर.)

**भावकरणम्**=अभिप्रायाविष्कारः ।

चुल्लकः-ल्लिका, चुल्लकः-ल्लिका, चुचुल्लिषकः-षिका, चोचुल्लकः-ल्लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचिल्लतिवत् (528) ज्ञेयानि । [B]चुल्लन्-न्ती, इति शतरि रूपम् ।

(549) " **चूरी दाहे** " (IV-दिवादिः-1158. सक. सेट्. आत्म.)

चूरकः-रिका, चूरकः-रिका, चुचूरिषकः-षिका, चोचूरकः-रिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकगूर्यतिवत् (419) बोध्यानि । चूरणम्[C] ।

(550) " **चूर्ण प्रेरणे** " (X-चुरादिः-1552. सक. सेट्. उभ.)

'**पेषणे**' इति **चन्द्रः** ।

अस्य धातोः क्षोदनमप्यर्थ इति **धातुकाव्यव्याख्याने** (3-15) ।

---

A. 'सन्दोलयन्नधिकपोलितमद्रिराजं **सञ्चोलितं** सुबहुमूलितशाखिवृन्दैः ॥' धा. का. 3. 21.

B. 'मूलं फलं वाऽप्यदताम**चुल्लतां** प्रफुल्लभक्त्युन्नतिचिल्लचेतसाम् ॥' धा. का. 1. 68. **अचुल्लताम्**=अनाविष्कृताशयानामित्यर्थः ।

C. 'गूर्णेऽस्मिन् बहुजन्तुघूरिणि खले जूर्णैः शशंसे नृभिः
शौरिः शूरकगर्व**चूरण**परः सन्तप्यमानः सताम् ।' धा. का. 2. 60.



चूर्णक-र्णिका, चूर्णयिता-त्री, इत्यादिकानि रूपाणि भ्रमणार्थक—(474) भौवादिकघूर्णधातोर्ण्यन्तरूपाणीव बोध्यानि। ल्युटि[A]-चूर्णनम् । ण्यन्तात् सनि तु इमानि रूपाणीति विशेषः ।

चुचूर्णयिषकः-षिका, चुचूर्णयिषिता-त्री, चुचूर्णयिषन्-न्ती ;
चुचूर्णयिषिष्यन्-न्ती-ती, चुचूर्णयिषमाणः, चुचूर्णयिषिष्यमाणः ;
चुचूर्णयिट्-चुचूर्णयिषौ-चुचूर्णयिषः, चुचूर्णयिषितः-तवान् ;
चुचूर्णयिषुः, चुचूर्णयिषितव्यम्, चुचूर्णयिषणीयम्, चुचूर्णयिष्यम् ;
ईषच्चुचूर्णयिषः-दुश्चुचूर्णयिषः-सुचुचूर्णयिषः ;
चुचूर्णयिष्यमाणः, चुचूर्णयिषः, चुचूर्णयिषितुम्, चुचूर्णयिषा ;
चुचूर्णयिषणम्, चुचूर्णयिषित्वा, प्रचुचूर्णयिष्य, चुचूर्णयिषम् २ ; }
चुचूर्णयिषित्वा २. }

(551) " **चूर्ण सङ्कोचने** " (X-चुरादिः-1642. सक. सेट्. उभ)

'चूण सङ्कोचने' इति **क्षीरस्वामी** पपाठ ।

चूर्णकः-र्णिका, चुचूर्णयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-चूर्णयतिवत् (550) बोद्धव्यानि । स्त्रियाम्-चूर्णना[B] ।

(552) " **चूष पाने** " (I-भ्वादिः-673. सक. सेट् पर.)

चूषकः-षिका, चूषकः-षिका, चुचूषिषकः-षिका, चोचूषकः-षिका ;
चूषिता-त्री, चूषयिता-त्री, चुचूषिषिता-त्री, चोचूषिता-त्री ;
चूषन्-न्ती, चूषयन्-न्ती, चुचूषिषन्-न्ती ; —
चूषिष्यन्-न्ती-ती, चूषयिष्यन्-न्ती-ती, चुचूषिषिष्यन्-न्ती-ती ;
— चूषयमाणः, चूषयिष्यमाणः, — चोचूष्यमाणः, चोचूषिष्यमाणः ;
[1]चूट्-चूड्-चूषौ-चूषः; — — —

---

1. 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वेन डकारः ।

A. 'संपश्य तन्निजदशैवमवर्णि लोकैरेषोऽजनिष्ट किल दुष्ट**विचूर्णनार्थम्** ।' धा. का. 3. 15.

B. 'सौधे विटङ्कजुषि पश्यति भूसितोऽयं
राजारिकीटबल**चूर्णनया**ऽतिपूज्यः ।' धा. का. 3. 27.

[A]चूषितम्-तः, चूषितः, चुचूषिषितः, चोचूषितः-तवान् ;
चूषः, चूषः चुचूषिषुः, चोचूषः ;
चूषितव्यम्, चूषयितव्यम्, चुचूषिषितव्यम्, चोचूषितव्यम् ;
चूषणीयम्, चूषणीयम्, चुचूषिषणीयम्, चोचूषणीयम् ;
चूष्यम्-[1]चोष्यम्, चूष्यम्, चुचूषिष्यम्, चोचूष्यम् ;
ईषच्चूषः-दुश्चूषः-सुचूषः ; — —
चूष्यमाणः चूष्यमाणः, चुचूषिष्यमाणः, चोचूष्यमाणः ;
चूषः, चूषः, चुचूषिषः चोचूषः ;
चूषितुम्, चूषयितुम्, चुचूषिषितुम्, चोचूषितुम् ;
चूषा, चूषणा, चुचूषिषा, चोचूषा ;
चूषणम्, चूषणम्, चुचूषिषणम्, चोचूषणम् ;
चूषित्वा, चूषयित्वा, चुचुषिषित्वा, चोचूषित्वा ;
प्रचूष्य प्रचूष्य, प्रचुचूषिष्य, प्रचोचूष्य ;
चूषम् २, } चूषम् २, } चुचूषिषम् २, } चोचूषम् २ ; }
चूषित्वा २, } चूषयित्वा २, } चुचूषिषित्वा २, } चोचूषित्वा २. }

(553) **"चृती हिंसाग्रन्थनयोः"** (VI-तुदादिः-1324. सक. सेट्. पर.)

**'—श्रन्थनयोः'** इति **सिद्धान्तकौमुदी**पाठः । **श्रन्थनम्**=विस्रंसनम् ।

[2]चर्तकः-र्तिका, चर्तकः-र्तिका, [3]चिचर्तिषकः-षिका, चिचृत्सकः-त्सिका,
[4]चरीचृतकः-तिका ;

---

1. पृषोदरादित्वेन (6-3-109) गुणे **चोष्य**मित्यपि साधुः ।
2. 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणः । एवं क्विङ्भिन्ने सर्वत्र लघूपधगुणो बोध्यः । एवं ण्यन्ते सर्वत्र गुणो ज्ञेयः ।
3. 'सेऽसिचि कृतचृतछृदतृदनृतः' (7-2-57) इति सन इड्विकल्पः । इट्पक्षे, लघूपधगुणे **चिचर्तिषकः** इति रूपम् । इडभावपक्षे, 'हलन्ताच्च' (1-2-10) इति सनः कित्वात् न गुणः । एवं सन्नन्ते सर्वत्र रूपद्वयं ज्ञेयम् ।
4. 'रीगृदुपधस्य च' (7-4-90) इति यङन्तेऽभ्यासस्य रीगागमः । एवं यङन्ते सर्वत्र रीगागमो बोध्यः । यकाराकारयोः, 'यस्य हलः' (6-4-49) इति लोपेनापहारः ।

A. 'सूक्ष्यं त्वदीक्षा चिरकाङ्क्षिता नो वाङ्क्षाम्यमाङ्क्षयान्न तु नीचलोकान् ।
द्राक्षां जनो वाञ्छति, नो फलानि ध्राङ्क्षद्बहुध्वाङ्क्ष **विचूषितानि** ॥'
धा. का. 1-85.



चर्तिता-त्री, चर्तयिता-त्री, चिचर्तिषिता-चिचृत्सिता-त्री, चरीचृतिता-त्री ;
[1]चृतन्-न्ती-ती, चर्तयन्-न्ती, चिचर्तिषन्-चिचृत्सन्-न्ती ; —
[2]चर्तिष्यन्-चर्त्स्यन्-न्ती-ती, चर्तयिष्यन्-न्ती-ती, चिचर्तिषिष्यन्-
चिचृत्सिष्यन्-न्ती-ती ; —
— चर्तयमानः, चर्तयिष्यमाणः, — चरीचृत्यमानः, चरीचृतिष्यमाणः ;
चृत्-चृतौ-चृतः ; — — —
[3]चृत्तम्[A]-चृत्तः-चृत्तवान्, चर्तितः, चिचर्तिषितः-चिचृत्सितः,
चरीचृतितः-तवान् ;
[4]चृतः, चर्तः, चिचर्तिषुः-चिचृत्सुः, चरीचृतः ;
चर्तितव्यम्, चर्तयितव्यम्, चिचर्तिषितव्यम्-चिचृत्सितव्यम्,
चरीचृतितव्यम् ;
चर्तनीयम्, चर्तनीयम्, चिचर्तिषणीयम्-चिचृत्सनीयम्, चरीचृतनीयम् ;
[5]चर्त्यम्, चर्त्यम्, चिचर्तिष्यम्-चिचृत्स्यम्, चरीचृत्यम् ;
ईषच्चर्तः-दुश्चर्तः-सुचर्तः ; — —

---

1. 'तुदादिभ्यः—' (3-1-77) इति शः । तस्य ङिद्वद्भावादङ्गस्य गुणो न । त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः ।
2. 'सेऽसिचि कृतचृत—' (7-2-57) इति इड्विकल्पः । तेन रूपद्वयम् ।
3. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधः । यद्यपि सकारादावार्धधातुके, 'सेऽसिचि कृतचृत—' (7-2-57) इत्यनेन इड्विकल्पनात्, 'यस्य विभाषा' (7-2-15) इत्यनेन निष्ठायामिण्णिषेधः सिद्धः; तथापि, धातोरीदित्करणेन, 'यस्य विभाषा' (7-2-15) इति प्राप्तस्येण्णिषेधस्यानित्यत्वं बोध्यते । तेन, **धावितम्, पतितः** इत्यादिषु निष्ठायाम् इड्घटितरूपसिद्धिः । आद्ये, **'धावु'** धातोरुदित्त्वेन, क्त्वायां विकल्पितेट्कत्वेन निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधेन भाव्यम् । अन्त्ये, 'तनि**पति**दरिद्रातिभ्यः सनो वा इड् वक्तव्यः' (वा. 7-4-54) इति **पत**धातोस्सनि विकल्पितेट्कत्वात्, निष्ठायां इण्णिषेधो न्याय्यः । अनित्यत्वेन समाधेयम् । 'द्वितीयाश्रितातीत**पतित**गतात्यस्तप्राप्तापन्नैः' (2-1-24) इत्यत्र **पतित** इति निपातनमप्यस्यैवानुकूलम् ।
4. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः ।
5. 'ऋदुपधाच्चाकॢपिचृतेः' (3-1-110) इत्यत्र **'अचृतेः'** इति पर्युदासात् 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यति **'चर्त्यम्'** इति भवति ।

A. 'पीयूषोभितहेमकुम्भविभ्रमद्वक्षोजशुम्भत्तमा
दृब्धस्रग्धर**चृत्त**कैरवविधितां शोभां जुडन्त्योऽजुनन् ।' धा. का. 2-75.

चृत्यमानः, चर्त्यमानः, चिचर्तिष्यमाणः-चिचृत्स्यमानः, चरीचृत्यमानः ;
चर्तः, चर्तः, चिचर्तिषः-चिचृत्सः, चरीचृतः ;
चर्तितुम्, चर्तयितुम्, चिचर्तिषितुम्-चिचृत्सितुम्, चरीचृतितुम् ;
चृत्तिः, चर्तना, चिचर्तिषा-चिचृत्सा, चरीचृता ;
चर्तनम्, चर्तनम्, चिचर्तिषणम्-चिचृत्सनम्, चरीचृतनम् ;
चर्तित्वा, चर्तयित्वा, चिचर्तिषित्वा-चिचृत्सित्वा, चरीचृतित्वा ;
प्रचृत्य, प्रचर्त्य, प्रचिचर्तिष्य-प्रचिचृत्स्य, प्रचरीचृत्य ;
चर्तम् २, चर्तित्वा २, } चर्तम् २, चर्तयित्वा २, } चिचर्तिषम् २-चिचृत्सम् २, चिचर्तिषित्वा २-चिचृत्सित्वा २, } चरीचृतम् २ ; चरीचृतित्वा २. }

## (554) "चृप सन्दीपने"

(X-चुरादिः-1821. सक. सेट्. उभ. आधृषीयः।)

'छृदी' इत्यस्य पाठान्तरमिदम्।

चर्पकः-र्पिका, चिचर्पयिषकः-षिका, [1]चर्पकः-र्पिका, चिचर्पिषकः-षिका, [2]चरीचृपकः-पिका ;
[3]चर्पयिता-त्री, चिचर्पयिषिता-त्री, चर्पिता-त्री, चिचर्पिषिता-त्री, चरीचृपिता-त्री ;
चर्पयन्-न्ती, चिचर्पयिषन्-न्ती, चर्पन्-न्ती, चिचर्पिषन्-न्ती ; —
चर्पिष्यन्-न्ती-ती, चिचर्पयिषिष्यन्-न्ती-ती, चर्पिष्यन्-न्ती-ती, चिचर्पिषिष्यन्-न्ती-ती ; —
चर्पयमाणः, चिचर्पयिषमाणः, चर्पमाणः, चरीचृप्यमाणः ;

1. 'आ धृषाद्वा' (ग. सू. चुरादौ) इति णिज्विकल्पः। णिजभावपक्षे शुद्धाद्धातो रूपाणि लिखितानि। एवं णिजभावपक्षे, सन्नन्तात्, यङन्तादपि रूपाणि प्रदर्शितानि।
2. 'णिजभावपक्षे, यङन्तेऽभ्यासस्य, 'रीगृदुपधस्य च' (7-4-90) इति रीगागमः। एवं णिजभावपक्षे यङन्ते सर्वत्र रीगागमो ज्ञेयः।
3. 'णेरनिटि' (6-4-51) इत्यत्र 'अनिटि' इत्युक्तत्वात्, इडादौ प्रत्यये परतः णेरयादेशः। एवं तव्यदादिष्वपि ज्ञेयम्।



चर्पयिष्यमाणः, चिचर्पयिषिष्यमाणः; चर्पिष्यमाणः, चरीचृपिष्यमाणः ;
[1]चर्प्-चर्पौ-चर्पः ; — —
चर्पितम्-तः, चिचर्पयिषितः, चर्पितः, चिचर्पिषितः, चरीचृपितः-तवान् ;
चर्पः, चिचर्पयिषुः, चर्पः, चिचर्पिषुः, चरीचृपः ;
चर्पयितव्यम्, चिचर्पयिषितव्यम्, चर्पितव्यम्, चिचर्पिषितव्यम्, चरीचृपितव्यम् ;
चर्पणीयम्, चिचर्पयिषणीयम्, चर्पणीयम्, चिचर्पिषणीयम्, चरीचृपणीयम् ;
चर्प्यम्, चिचर्पयिष्यम्, [2]चृप्यम्, चिचर्पिष्यम्, चरीचृप्यम् ;
ईषच्चर्पः - दुश्चर्पः - सुचर्पः ; — —
चर्प्यमाणः, चिचर्पयिष्यमाणः, चृप्यमाणः, चिचर्पिष्यमाणः, चरीचृप्यमाणः ;
चर्पः, चिचर्पयिषः, चर्पः, चिचर्पिषः, चरीचृपः ;
चर्पयितुम्, चिचर्पयिषितुम्, चर्पितुम्, चिचर्पिषितुम्, चरीचृपितुम् ;
चर्पणा, चिचर्पयिषा, चृप्तिः, चिचर्पिषा, चरीचृपा ;
चर्पणम्, चिचर्पयिषणम् चर्पणम्, चिचर्पिषणम्, चरीचृपणम् ;
चर्पयित्वा, चिचर्पयिषित्वा, [3]चर्पित्वा, चिचर्पिषित्वा, चरीचृपित्वा ;
प्रचर्प्य, प्रचिचर्पयिष्य, प्रचृप्य, प्रचिचर्पिष्य, प्रचरीचृप्य ;
चर्पम् २, चर्पयित्वा २, } चिचर्पयिषम् २, चिचर्पयिषित्वा २, } चर्पम् २, चर्पित्वा २, } चिचर्पिषम् २, चिचर्पिषित्वा २, } चरीचृपम् २, चरीचृपित्वा २. }

## (555) "चेलृ चलने" (I-भ्वादिः-536. अक. सेट्. पर.)

चेलकः-लिका, चेलकः-लिका, चिचेलिषकः-षिका, चेचेलकः-लिका ;

1. 'रात् सस्य' (8-2-24) इति नियमात् पकारस्य संयोगान्तलोपो न।
2. णिजभावपक्षे केवलाद्धातोः, 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यपि रूपम्।
3. णिजभावपक्षे धातोः सेट्त्वात्, 'न क्त्वा सेट्' (1-2-18) इति सेटः क्त्वायाः कित्त्वनिषेधात् गुणे रूपम्।

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेलतिवत् (262) ज्ञेयानि। पचादिषु (3-1-134) 'चेलट्' इति टित्करणेन पाठात् [A]चेलः। स्त्रियाम् ङीप्-चेली। कुत्सिता ब्राह्मणी-[1]ब्राह्मणचेली।

(556) "चेष्ट चेष्टायाम्" (I-भ्वादिः-256. अक. सेट्. आत्म.)

चेष्टा–ईहा।

चेष्टकः-ष्टिका, चेष्टकः-ष्टिका, चिचेष्टिषकः-षिका, चेचेष्टकः-ष्टिका; इत्यादीनि सर्वाणि रूपाणि भौवादिकगोष्टतिवत् (434) ज्ञेयानि। निष्ठायाम् चेष्टितम्। युचि-[B]चेष्टनम्।

(557) "च्यु सहने" (X-चुरादिः-1747. सक. सेट्. उभ.)

'—हसने' इत्येके। 'च्युस—' इत्यन्ये।

| | | |
|---|---|---|
| च्यावकः-विका, | चुच्यावयिषकः-षिका, | च्यावयिता-त्री; |
| चुच्यावयिषिता-त्री, | च्यावयन्-न्ती, | चुच्यावयिषन्-न्ती; |
| च्यावयिष्यन्-न्ती-ती, | चुच्यावयिषिष्यन्-न्ती-ती, | च्यावयमानः; |
| चुच्यावयिषमाणः, | च्यावयिष्यमाणः, | चुच्यावयिषिष्यमाणः; |
| [2]च्यौः-च्यावौ-च्यावः, | च्यावितम्-तः-तवान्; | — |
| चुच्यावयिषितः-तवान्, | च्यावः, | चुच्यावयिषुः; |
| च्यावयितव्यम्, | चुच्यावयिषितव्यम्, | च्यावनीयम्; |
| चुच्यावयिषणीयम्, | च्याव्यम्, | चुच्यावयिष्यम्; |
| ईषच्च्यावः-दुश्च्यावः-सुच्यावः; | | — |
| च्याव्यमानः, | चुच्यावयिष्यमाणः, | च्यावः; |
| चुच्यावयिषः, | च्यावयितुम्, | चुच्यावयिषितुम्; |
| च्यावना, | चुच्यावयिषा, | च्यावनम्; |

1. 'कुत्सितानि कुत्सनैः' (2-1-53) इति समासे, 'घरूपकल्पचेलड्—' (6-3-43) इत्यादिना पूर्वपदस्य ह्रस्वः।

2. ण्यन्तात् क्विपि, वृद्ध्यावादेशयोः सतोर्णेर्लोपे, वकारस्य, 'च्छ्वोः शूडनुनासिके च' (6-4-19) इत्यूठि, 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धौ च रूपम्।

A. 'अवेलितानां प्रतिचेलधारिणामकेलिलोले हृदि बद्धखेलनम्।' धा. का. 1-69.

B. 'अथोपशरदेऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः।' भ. का. 7. 14.



| | | |
|---|---|---|
| चुच्यावयिषणम्, | च्यावयित्वा, | चुच्यावयिषित्वा; |
| प्रच्याव्य, प्रचुच्यावयिष्य, | च्यावम् २, च्यावयित्वा २, | चुच्यावयिषम् २; चुच्यावयिषित्वा २. |

(558) "च्युङ् गतौ" (I-भ्वादिः-955. सक. अनि. आत्म.)

च्यावकः-विका, च्यावकः-विका, [1]चुच्यूषकः-षिका, [2]चोच्यूयकः-यिका, [3]चुच्यावयिषकः-चिच्यावयिषकः-षिका;

च्योता-त्री, च्यावयिता-त्री, चुच्यूषिता-त्री, चोच्यूयिता-त्री, चुच्यावयिषिता-चिच्यावयिषिता-त्री;

— च्यावयन्-न्ती, — चुच्यावयिषन्-चिच्यावयिषन्-न्ती;

— च्यावयिष्यन्, — चुच्यावयिषिष्यन्-चिच्यावयिषिष्यन्-न्ती-ती;

च्यवमानः, च्यावयमानः, चुच्यूषमाणः, चोच्यूयमानः, चुच्यावयिषमाणः-चिच्यावयिषमाणः;

च्योष्यमाणः, च्यावयिष्यमाणः, चुच्यूषिष्यमाणः, चोच्यूयिष्यमाणः, चुच्यावयिषिष्यमाणः-चिच्यावयिषिष्यमाणः;

[4]प्रच्युत्-प्रच्युतौ-प्रच्युतः; — — —

च्युतम्-[A]तः-तवान्, च्यावितम्-तः, चुच्यूषितः, चोच्यूयितः, चुच्यावयिषितः-चिच्यावयिषितः-तवान्;

1. 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'इको झल्' (1-2-9) इति सनः कित्त्वेन, 'क्ङिति' (1-1-5) इति गुणनिषेधः। एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या।

2. यङन्तात्, द्वित्वे, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणे, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। एवं यङन्ते सर्वत्र प्रक्रिया ज्ञेया।

3. ण्यन्तात् सनि, 'सन्यङोः' (6-1-9) इति द्वित्वे, वृद्ध्यावादेशयोः अवर्णपरयात्वक्षरपरकत्वादभ्यासघटकोकारस्य, 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' (7-4-81) इति पाक्षिके इकारे, रूपद्वयम्। एवं सर्वत्र ण्यन्तात् सनि प्रक्रिया बोध्या। 'स्रवति—' (7-4-81) इति सूत्रसार्थक्यायैव, ण्यन्तात् सनि धातोरस्य सर्वाणि रूपाणि प्रदर्शितानि।

4. 'ह्रस्वस्य—' (6-1-71) इति तुक्। एवं ल्यप्यपि ज्ञेयम्।

A. 'स्तोत्रावमानैर्द्रुतवेणुवीणैश्च्युताशुभैर्योमचरैर्युतं ते।' धा. का. 2-36.

[1]च्यवः, [2]च्यवनः, च्यावः, चुच्यूषुः, [3]चोच्युवः, चुच्यावयिषुः-चिच्यावयिषुः ;

च्योतव्यम्, च्यावयितव्यम्, चुच्यूषितव्यम्, चोच्यूयितव्यम्, चुच्यावयिषितव्यम्-चिच्यावयिषितव्यम् ;

च्यवनीयम्, च्यावनीयम्, चुच्यूषणीयम्, चोच्यूयनीयम्, चुच्यावयिषणीयम्-चिच्यावयिषणीयम् ;

[4]च्यव्यम्-[5]अवश्यच्याव्यम्, च्याव्यम्, चुच्यूष्यम्, चोच्यूय्यम्, चुच्यावयिष्यम्-चिच्यावयिष्यम् ;

ईषच्च्यवः-दुश्च्यव-सुच्यवः ; — — —

[6]च्यूयमानः, च्याव्यमानः, चुच्यूष्यमाणः, चोच्यूय्यमानः, चुच्यावयिष्यमाणः-चिच्यावयिष्यमाणः ;

[7]च्यवः, च्यावः, चुच्यूषः, चोच्यूयः, चुच्यावयिषः-चिच्यावयिषः ;

च्योतुम्, च्यावयितुम्, चुच्यूषितुम्, चोच्यूयितुम्, चुच्यावयिषितुम्-चिच्यावयिषितुम् ;

च्युतिः, च्यावना, चुच्यूषा, चोच्यूया, चुच्यावयिषा-चिच्यावयिषा ;

[A]च्यवनम्, च्यावनम्, चुच्यूषणम्, चोच्यूयनम्, चुच्यावयिषणम्-चिच्यावयिषणम् ;

च्युत्वा, च्यावयित्वा, चुच्यूषित्वा, चोच्यूयित्वा, चुच्यावयिषित्वा-चिच्यावयिषित्वा ;

---

1. पचादित्वेन (3-1-134) अचि, गुणावादेशौ ।
2. चलनार्थकत्वेन, 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिको युच् । अनादेशः ।
3. यङन्तात् पचाद्यचि (3-1-134) 'यङोऽचि च' (2-4-74) इति, अचो लुकि, 'न धातुलोप—' (1-1-4) इति गुणनिषेधे, उवङ् ।
4. 'अचो यत्' (3-1-97) इति यति, गुणावादेशौ ।
5. 'ओरावश्यके' (3-1-125) इति ण्यत् ।
6. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
7. 'ऋदोरप्' (3-3-57) इति भावे घञपवादोऽप्प्रत्ययः ।

A. 'अत्तुं महेन्द्रियं मागमैति **दुश्च्यवनो**ऽधुना ॥' भ. का. 5-11.



प्रच्युत्य, प्रच्याव्य, प्रचुच्यूष्य, प्रचोच्यूय्य, प्रचुच्यावयिष्य-प्रचिच्यावयिष्य ;

च्यावम् २, च्युत्वा २, } च्यावम् २, च्यावयित्वा २, } चुच्यूषम् २, चुच्यूषित्वा २, } चोच्यूयम् २, चोच्यूयित्वा २, }
चुच्यावयिषम् २ -चिच्यावयिषम् २ ; चुच्यावयिषित्वा २-चिच्यावयिषित्वा २. }

## (559) "च्युतिर् आसेचने" (I-भ्वादिः-40. सक. सेट्. पर.)

आसेचनम्=ईषत्सेकः, आ=समन्तात् सेको वा ।

च्योतकः-तिका, च्योतकः-तिका, चुच्योतिषकः-चुच्युतिषकः-षिका, चोच्युतकः-तिका ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककोचतिवत् (200) ज्ञेयानि । शतरि-च्योतन्[A]-न्ती । धातोरस्येरित्त्वेऽपि, इरित्त्वप्रयुक्तकार्यस्य कृदन्तेष्वभावात् रूपसाम्यं भवत्येव ।

## (560) "च्युस सहने" (X-चुरादिः-1747. सक. सेट्. उभ.)

'च्यु सहने' इत्यस्य पाठभेदोऽयम् ।

| | |
|---|---|
| च्योसकः-सिका, | चुच्योसयिषकः-षिका ; |
| च्योसयिता-त्री, | चुच्योसयिषिता-त्री ; |
| च्योसयन्-न्ती, | चुच्योसयिषन्-न्ती ; |
| च्योसयिष्यन्-न्ती-ती, | चुच्योसयिषिष्यन्-न्ती-ती ; |
| च्योसयमानः, | चुच्योसयिषमाणः ; |
| च्योसयिष्यमाणः, | चुच्योसयिषिष्यमाणः ; |
| [1]सुच्यूः-सुच्युसौ-सुच्युसः ; | — |
| च्योसितः-तम्, | चुच्योसयिषितः-तवान् ; |
| च्योसः, | चुच्योसयिषुः ; |

---

1. सकारस्य, 'ससजुषो रुः' (8-2-66) इति रुत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इत्युपधाया दीर्घः । तदनन्तरं विसर्गः ।

A. 'अतेन्मुरारिर्मम चिन्मयोऽन्तिके **च्योतन्** दिशः प्रश्च्युतितैः स्मितामृतैः ॥' धा. का. 1-6,

च्योसयितव्यम् , चुच्योसयिषितव्यम् ;
च्योसनीयम् , चुच्योसयिषणीयम् ;
च्योस्यम् , चुच्योसयिष्यम् ;
ईषच्च्योसः-दुश्च्योसः-सुच्योसः ; —
च्योस्यमानः, चुच्योसयिष्यमाणः ;
च्योसः, चुच्योसयिषः ;
च्योसयितुम् , चुच्योसयिषितुम् ;
च्योसना, चुच्योसयिषा ;
च्योसनम् , चुच्योसयिषणम् ;
च्योसयित्वा, चुच्योसयिषित्वा ;
प्रच्योस्य, प्रचुच्योसयिष्य ;
च्योसम् २, } चुच्योसयिषम् २ }
च्योसयित्वा २, } चुच्योसयिषित्वा २ }.

(561) " **छजि कृच्छ्रजीवने** " (X-चुरादिः-1622. सक. सेट्. उभ.)

'**क्षजि**' इति **धातुकाव्ये** (3-24) पाठः ।

इदित्करणात् णिचो वैकल्पिकत्वम् । छञ्जकः-ञ्जिका, चिच्छञ्जयिषकः-षिका, छञ्जकः-ञ्जिका, चिच्छञ्जिषकः-षिका, चाच्छञ्जकः-ञ्जिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चम्पयति**वत् (499) ज्ञेयानि ।

(562) " **छद अपवारणे** " (X-चुरादिः-1834. सक. सेट्. उभ.)

**आधृषीयः** । [अ]

[अ] '**छदिरूर्जने**' (ग. सू.) इति भ्वादिषु पठ्यते। तत्र **छदि**रिति इका निर्देशः । **ऊर्जनम्**=बलनम् प्राणनं वा । चुरादिषु पठितस्य **छद**धातोराधृषीयत्वेन णिज्विकल्पनात् स्वार्थे णिजभावपक्षे मित्त्वार्थोऽयमनुवादः । धातूनामनेकार्थत्वा-दूर्जने वृत्तिः । छदन्तं प्रयुङ्क्ते **छदयति**=बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । यदा तु **छादयती**ति स्वार्थे ण्यन्तः, तदा बलीभवति, प्राणीभवति, अपवारयतीति वाऽर्थः । तदा, 'नान्ये मितोऽहेतौ' (ग. सू. चुरादौ) इति वचनात् मित्त्वं न । '**छदिरर्जने**' इति कुत्रचिद् दृष्टः पाठो न साम्प्रदायिकः । '**छेद अपवारणे**' इति चुरादावेवोत्तरत्र विद्यमानस्य धातोरपि '**छद**' इत्येव **क्षीरस्वामि**सम्मतः पाठोऽप्यनार्ष इति ज्ञायते। **देवपुरुषकारा**वप्यस्मदुक्तार्थोपष्टम्भकावेव । '**छादे**र्घेऽद्व्युपसर्गस्य' (6-4-96) इत्यादिसूत्राण्येवास्य धातोः भ्वादिषु पाठाभावे गमकानीत्यपि ज्ञेयम् ।



'यौ वा णौ—अपवारणे छदत इत्येकम्, द्वितीयं छदेत् , (छदन् ) अन्यत् छादयति, छदेदिति पुनः स्यादूर्जनेऽर्थे मितः ।
यत्तु च्छन्दयतीति णौ नुमि पदं—तत संवृताविष्यते'—(श्लो. 113) इति **देवः** ।

[1]छादकः-दिका, [2]चिच्छादयिषकः-षिका, [3]छादकः-दिका, चिच्छदिषकः-षिका, [4]चाच्छदकः-दिका, [5]छदकः-दिका ;

छादयिता-त्री, चिच्छादयिषिता-त्री, छदिता-त्री, चिच्छदिषिता-त्री, चाच्छदिता-त्री, छदयिता-त्री ;

छादयन्-न्ती, चिच्छादयिषन्-न्ती, [A]छदन्-न्ती, चिच्छदिषन्-न्ती, — छदयन्-न्ती ;

छादयिष्यन्-न्ती-ती, चिच्छादयिषिष्यन्-न्ती-ती, छदिष्यन्-न्ती-ती, चिच्छदिषिष्यन्-न्ती-ती, — छदयिषिष्यन्-न्ती-ती ;

छादयमानः, चिच्छादयिषमाणः, [6]छदमानः, चिच्छदिषमाणः, चाच्छद्यमानः, छदयमानः ;

छादयिष्यमाणः, चिच्छादयिषिष्यमाणः, छदिष्यमाणः, चिच्छदिषिष्यमाणः, चाच्छदिष्यमाणः, छदयिषिष्यमाणः ;

1. स्वार्थे णिचि, 'अत उपधायाः' (7-2-116) इति वृद्धौ रूपम् ।
2. ण्यन्तात् सनि, अभ्यासात् परतः, 'छे च' (6-1-73) इति तुक् । 'स्तोः श्चुना श्चुः' (8-4-40) इति श्चुत्वेन चकारः । एवं सन्नन्ते यङन्ते च बोध्यम् ।
3. 'आधृषाद्वा' (गणसूत्रं चुरादौ) इति णिचो वैकल्पिकत्वम् । तेन, णिजभावपक्षे शुद्धाद्धातोर्ण्वुलि रूपम् । ण्यन्तप्रकृतिकण्वुलन्तस्य, अस्य चार्थभेदो नास्ति ।
4. णिजभावपक्षे, यङन्ते, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घे, 'दीर्घात्' (6-1-75) इति तुकि, तस्य श्चुत्वेन चकारे रूपम् । एवमुत्तरत्रापि रूपनिष्पत्तिर्ज्ञेया।
5. '**छदिरूर्जने**' (गणसूत्रम्-भ्वादौ) इति घटादिषु पाठेनास्य मित्त्वात्, अस्मात्, हेतुमण्णिचि परतः, उपधावृद्धौ, 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वे, '**छदकः-दिका**' इत्यादीनि, ऊर्जनार्थे विद्यमानस्यास्य धातोर्णौ बोध्यानि ।
6. धातोः स्वरितेत्त्वेन, शुद्धात्, 'स्वरितञितः कर्त्रभिप्राये क्रियाफले (1-3-72) इति आत्मनेपदम् । परगामिनि क्रियाफले तु, 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदमपि भवति ।

A. 'मल्लोऽर्थः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः
तावत् स्वं बल**मच्छदन्** जुषितवान् मुष्ट्या हली मुष्टिकम् ॥' धा. का. 3-50.

[1]तनुच्छत्-तनुच्छदौ-तनुच्छदः ; — —

[2]छन्नम्-[A]छन्नः-छादितः-[B]तम्, चिच्छादयिषितः, छदितः-तम्, चिच्छदिषितः, चाच्छदितः, [3]छदितः-तवान् ;

छादः, चिच्छादयिषुः, छदः, चिच्छदिषुः, चाच्छदः, छदः ;

छादयितव्यम्, चिच्छादयिषितव्यम्, छदितव्यम्, चिच्छदिषितव्यम्, चाच्छदितव्यम्, छदयितव्यम् ;

छादनीयम्, चिच्छादयिषणीयम्, छदनीयम्, चिच्छदिषणीयम्, चाच्छदनीयम्, छदनीयम् ;

छ द्यम्, चिच्छादयिष्यम्, छाद्यम्, चिच्छदिष्यम्, चाछद्यम्, छद्यम् ;

ईषच्छादः-दुश्छादः-सुच्छादः ; — — [छद्यमानः ;

छाद्यमानः-चिच्छादयिष्यमाणः, छद्यमानः, चिच्छदिष्यमाणः, चाच्छद्यमानः,

छादः, [4]प्रच्छदः-उरश्छदः-दन्तच्छदः, समुपच्छादः, [5]समुपातिच्छादः, चिच्छादयिषः, छादः, चिच्छदिषः, चाच्छदः, छदः ;

छादयितुम्, चिच्छादयिषितुम्, छदितुम्, चिच्छदिषितुम्, चाच्छदितुम्, छदयितुम् ;

छादना, चिच्छादयिषा, छत्तिः, चिच्छदिषा, चाच्छदा, छदना ;

छादनम्, चिच्छादयिषणम्, छदनम्, चिच्छदिषणम्, चाच्छदनम्, छदनम् ;

---

1. 'क्विप् च' (3-2-76) इति क्विपि, 'इस्मन्त्रन्क्विषु च' (6-4-97) इति णौ, उपधायाः ह्रस्वः ।
2. 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' (7-2-27) इति ण्यन्तात्, निष्ठायाः इडभावः उपधाह्रस्वत्वं च निपात्यते । 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वम् । पक्षे **छादितः** इत्यपि भवति ।
3. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः ।
4. **छादेः** करणार्थे, **प्रच्छाद्यते**ऽनेनेत्यर्थे, 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति घप्रत्यये, '**छादेर्घे**ऽद्व्युपसर्गस्य' (6-4-96) इति उपधाह्रस्वः । एवं **दन्तच्छदः उरश्छदः** इत्यादिष्वपि ज्ञेयम् ।
5. 'अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्' (वा-6-4-96) इत्युक्तत्वात् द्विप्रभृतिषूपसर्गेषु सत्स्वपि ह्रस्वो न प्रवर्तते ।

A. '**प्रच्छन्न**स्तरुगहनैः स गुल्मजालैः लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥'
**किरातार्जुनीये** 12-54.

B. '**आच्छादिता**यतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालश्रृङ्गम् ।'
**शिशुपालवधे** 4-19.



छादयित्वा, चिच्छादयिषित्वा, छदित्वा, चिच्छदिषित्वा, चाच्छदित्वा, छदयित्वा ;

प्रच्छाद्य, प्रचिच्छादयिष्य, प्रच्छद्य, प्रचिच्छदिष्य, प्रचाच्छद्य, [1]प्रच्छदय्य ;

छादम् २, छादयित्वा २, } चिच्छादयिषम् २, चिच्छादयिषित्वा २, } छादम् २, छदित्वा २, } चिच्छदिषम् २. चिच्छदिषित्वा २; }

चाच्छदम् २, चाच्छदित्वा २, } [2]छदम् २-छादम् २. छदयित्वा २ ; }

[3]छदिः, [4]छत्त्रम्, [5]छद्म.

(563) "**छदि संवरणे**" (X-चुरादिः-1577. सक. सेट्. उभ.)

'यौ वा णौ अपचारणे छदत इत्येकम्, द्वितीयं छदेत् [छदन्]

अन्यत् छादयति, छदेदिति पुनः स्यादूर्जनेऽर्थे मितः ।

यत्तुच्छन्दयतीति णौ नुमि पदं, तत् संवृताविष्यते—' (श्लो-113) इति **देवः** । इदित्करणाण्णिचो वैकल्पिकत्वम् । छन्दकः-न्दिका, चिच्छन्दयिषकः-षिका, छन्दकः-न्दिका, चिच्छन्दिषकः-षिका, चाच्छन्दकः-न्दिका, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चिन्तयति**वत् (524) ज्ञेयानि । [A]छन्दन्-न्ती ।

(564) "**छमु अदने**" (I-भ्वादिः-470. सक. सेट्. पर.) **मित्** ।

---

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
2. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।
3. औणादिके [द. उ. 9. 30] इसिप्रत्यये **छदिः** इति भवति । 'इस्मन्त्रन्क्विषु च' (6-4-97) इति, उपधाया ह्रस्वः । छादयतीति **छदिः**=चर्म, आवरणं च ।
4. 'ष्ट्रन्' [द. उ. 8-79] ष्ट्रन् प्रत्यये, 'इस्मन्त्रन्क्विषु च' (6-4-97) इत्युपधाह्रस्वे रूपम् । छाद्यतेऽनेनेति **छत्त्रम्**=आतपत्रम् ।
5. 'मनिन्' [द. उ. 6-73] इति मनिनि प्रत्यये **छद्म**=कपटम् ।

A. '**छन्दन्** शुचं बरमशिश्रिणदाश्रितानां सन्ताडनैर्वृषभदैत्यमखाडयच्च ॥'
**धा. का.** 3-18.

[1]छमकः-मिका, [2]छमकः-मिका, [3]चिच्छमिषकः-षिका, [4]चञ्छमकः-चंछमकः-मिका ;

छमिता-त्री, छमयिता-त्री, चिच्छमिषिता-त्री, चञ्छमिता-त्री ;

छमन्-न्ती, [5]छमयन्-न्ती, चिच्छमिषन्-न्ती ; —

छमिष्यन्-न्ती-ती, छमयिष्यन्-न्ती-ती, चिच्छमिषिष्यन्-न्ती-ती ; —

— — चञ्छम्यमानः, चञ्छमिष्यमाणः ;

[6]प्रच्छान्-प्रच्छामौ-प्रच्छामः ; — — —

[7]छान्तम्[A]-छान्तः-छान्तवान्, छमितः, चिच्छमिषितः, चञ्छमितः-तवान् ;

छमः, छमः, चिच्छमिषुः, चञ्छमः ; —

छमितव्यम्, छमयितव्यम्, चिच्छमिषितव्यम्, चञ्छमितव्यम् ;

छमनीयम्, छमनीयम्, चिच्छमिषणीयम्, चञ्छमनीयम् ;

[8]छम्यम्, छम्यम्, चिच्छमिष्यम्, चञ्छम्यम् ;

ईषच्छमः-दुश्छमः-सुच्छमः ; — — —

छम्यमानः, छम्यमानः, चिच्छमिष्यमाणः, चञ्छम्यमानः ;

---

1. 'नोदात्तोपदेशस्य **मान्तस्या**नाचमेः' (7-3-34) इति, उपधावृद्धेर्निषेधः। एवम् घञि णमुल्यपि ज्ञेयम्।
2. णौ परतः, 'अत उपधायाः' (7-2-116) इति वृद्धौ सत्याम्, अमन्तत्वेन धातोः, 'जनीजॄष्क्नसुरञ्जोऽ**मन्ताश्च**' (ग. सू. भ्वादौ) इति मित्त्वेन, 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वः। एवं ण्यन्ते सर्वत्र प्रक्रिया बोध्या।
3. सनि, द्वित्वे, अभ्यासावयवस्य ह्रस्वस्य, 'छे च' (6-1-73) इति तुगागमः। एवं, सन्नन्ते सर्वत्र प्रक्रिया बोध्या।
4. यङि, द्वित्वे, अभ्यासस्य, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति नुगागमः। एवं यङन्ते सर्वत्र प्रक्रिया ज्ञेया। परसवर्णविकल्पनाद् रूपद्वयम्।
5. '**निगरण**चलनार्थेभ्यश्च' (1-3-87) इति ण्यन्ताच्छतैव, न तु शानच्।
6. क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इत्युपधादीर्घे, 'मो नो धातोः' (8-2-64) इति पदान्ते नत्वम्।
7. उदित्त्वेन, क्त्वायामिड्विकल्पनात्, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः। 'अनुनासिकस्य—' (6-4-15) इति दीर्घः। 'नश्चापदान्तस्य झलि' (8-3-24) इति अनुस्वारे, 'अनुस्वारस्य ययि परसवर्णः' (8-4-58) इति परसवर्णः।
8. 'पोरदुपधात्' (3-1-98) इति यत्।

A. 'चान्तामिषश्**छान्त**जलः फलावलीं जान्त्वा झमञ्जेननमक्रमीद्गुहाम्॥'
**धा. का. 1-60.**



छमः, छमः, चिच्छमिषः, चञ्छमः ;

छमितुम्, छमयितुम्, चिच्छमिषितुम्, चञ्छमितुम् ;

[1]छान्तिः, छमना, चिच्छमिषा, चञ्छमा ;

छमनम्, छमनम्, चिच्छमिषणम्, चञ्छमनम् ;

[2]छमित्वा-छान्त्वा, छमयित्वा, चिच्छमिषित्वा, चञ्छमित्वा ;

प्रच्छम्य, [3]प्रच्छमय्य, प्रचिच्छमिष्य, प्रचञ्छम्य ;

छमम् २, छमित्वा २, छान्त्वा २, } [4]छमम् २, छामम् २, छमयित्वा २, } चिच्छमिषम् २, चिच्छमिषित्वा २, } चञ्छमम् २ ; चञ्छमित्वा २. }

## (565) "छर्द वमने" (X-चुरादिः-1589. अक. सेट्. उभ.)

छर्दकः-र्दिका, चिच्छर्दयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कर्णयति**वत् (170) ज्ञेयानि। [5]प्रच्छर्दिका। [A]प्रच्छर्दितः।

## (566) "छष हिंसायाम्" (I-भ्वादिः-890. सक. सेट् उभ.)

छाषकः-षिका, छाषकः-षिका, चिच्छषिषकः-षिका, चाच्छषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकभक्षणार्थक**चषति**वत् (514) ज्ञेयानि। [B]छषितः।

---

1. 'तितुत्र—' (7-2-9) इतीण्णिषेधः। दीर्घे, अनुस्वारे, परसवर्णे च रूपम्।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। तेन रूपद्वयम्।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
4. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः।
5. 'रोगाख्यायां ण्वुल् बहुलम्' (3-3-108) इति स्त्रियां भावादौ ण्वुल्। 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' (7-3-44) इति इत्वम्। **प्रच्छर्दिका**= वमथुः। '**प्रच्छर्दिका** वमिश्च स्त्री पुमांस्तु वमथुः समाः।' **इत्यमरः**।

A. 'बर्हादिमण्डितसुमण्डितविग्रहोऽसौ
**प्रच्छर्दितः** किल बकेन च पुस्तितार्तिः।' **धा. का. 3-20.**

B, 'लाषेण चाषांश्**छषिता**ञ्झषित्वा प्रभ्लक्ष्य भक्षन्ति यदम्बु नीचाः।'
**धा. का. 2-28.**

(567) **"छिदिर् द्वैधीकरणे"** (VII-रुधादिः-1440. सक. अनि. उभ.)

[1]छेदकः-दिका, छेदकः-दिका, [2]चिच्छित्सकः-त्सिका, [3]चेच्छिदकः-दिका ;

छेत्ता-त्री, छेदयिता-त्री, चिच्छित्सिता-त्री, चेच्छिदिता-त्री ;

[4]छिन्दन्-ती, छेदयन्-न्ती, चिच्छित्सन्-न्ती ; —

[5]छेत्स्यन्-न्ती-ती, छेदयिष्यन्-न्ती-ती, चिच्छित्सिष्यन्-न्ती-ती ; —

छिन्दानः, छेदयमानः, चिच्छित्समानः, चेच्छिद्यमानः ;

छेत्स्यमानः, छेदयिष्यमाणः, चिच्छित्सिष्यमाणः, चेच्छिदिष्यमाणः ;

[6]रज्जुच्छित्-रज्जुच्छिदौ-रज्जुच्छिदः, [A]शोकच्छित् ; —

[7]छिन्नम्[B]-छिन्नः-छिन्नवान्, छेदितः, चिच्छित्सितः, चेच्छिदितः-तवान् ;

[8]छिदः, [9]छिदुरः[C], [10]चिच्छिद्वान्, छेदः, चिच्छित्सुः, चेच्छिदः ;

---

1. 'पुगन्तलघूपधस्य च' (7-3-86) इत्युपधायाः गुणः। एवं णिचि परतोऽपि सर्वत्र ज्ञेयम्। तव्यदादिष्वपि गुणो यथासम्भवमेवमूह्यः।
2. धातोरनुदात्तत्वात्, 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इत्यनेनेण्णिषेधः। अभ्यासस्य तुगागमः। उत्तरखण्डे दकारस्य चर्त्वम्। 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वान्न लघूपधगुणः। एवं सर्वत्र सनि बोध्यम्।
3. 'दीर्घात्' (6-1-75) इति अभ्यासस्य तुगागमः। एवं यङन्ते सर्वत्र ज्ञेयम्।
4. 'रुधादिभ्यः—' (3-1-78) इति श्नम् विकरणप्रत्ययः। 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपः। एवं **छिन्दानः** इत्यत्रापि प्रक्रिया ज्ञेया।
5. इडभावः, लघूपधगुणश्च। 'खरि च' (8-4-55) इति दकारस्य चर्त्वेन तकारः।
6. 'सत्सूद्विषद्रुहदुहयुजविदभिद**च्छिद्**जिनीराजामुपसर्गेऽपि क्विप्' (3-2-61) इति कर्मण्युपपदे क्विप्।
7. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वम्।
8. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः।
9. 'विदिभिदि**छिदेः** कुरच्' (3-2-162) इति ताच्छीलिकः कुरच् प्रत्ययः। प्रत्ययस्य कित्त्वान्न गुणः।
10. लिटः क्वसुः। द्विर्वचनम्। क्वसोः क्रादिनियमप्राप्त इडागमः, 'वस्वेकाजाद्घसाम्' (7-2-67) इति नियमान्न भवति।

A. 'एष **शोकच्छिदो** वीरान् प्रभो सम्प्रति वानरान्।' भ. का. 7-27.

B. 'रुन्धन् दिशो दिनमुखेऽथ जगन्ति भिन्दन्
**प्रच्छिन्न**संशयमतिर्मुदमाशु रिञ्चन्।' धा. का. 3-1.

C. 'पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न **छिदुरो**ऽपि हारः॥'
**रघुवंशे**—16.62.



छेत्तव्यम्, छेदयितव्यम्, चिच्छित्सितव्यम्, चेच्छिदितव्यम् ;

छेदनीयम्, छेदनीयम्, चिच्छित्सनीयम्, चेच्छिदनीयम् ;

छेद्यम्, [1]छिदेलिमः [जीर्णरज्जुः], छेद्यम्, चिच्छित्स्यम्, चेच्छिद्यम् ;

ईषच्छेदः-दुश्छेदः-सुच्छेदः ; — — —

[A]छिद्यमानः, छेद्यमानः, चिच्छित्स्यमानः, चेच्छिद्यमानः ;

छेदः, छेदः, चिच्छित्सः, चेच्छिदः ;

छेत्तुम्, छेदयितुम्, चिच्छित्सितुम्, चेच्छिदितुम् ;

विच्छित्तिः-[2]छिदा, छेदना, चिच्छित्सा, चेच्छिदा ;

छेदनम्, छेदनम्, चिच्छित्सनम्, चेच्छिदनम् ;

छित्त्वा, छेदयित्वा, चिच्छित्सित्वा, चेच्छिदित्वा ;

प्रच्छिद्य, प्रच्छेद्य, प्रचिच्छित्स्य, प्रचेच्छिद्य ;

छेदम् २, छित्त्वा २, } छेदम् २, छेदयित्वा २, } चिच्छित्सम् २, चिच्छित्सित्वा २, } चेच्छिदम् २ ; चेच्छिदित्वा २ ; }

[3]छिदिः, [4]छिदिरम्, [5]छिद्रम्.

(568) **"छिद्र कर्णभेदने"** (X-चुरादिः- 1924. सक. सेट्. उभ.)

छिद्रकः-द्रिका, चिच्छिद्रयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चित्रयति**वत् (525) ज्ञेयानि। [B]छिद्रितम्।

---

1. 'केलिमर उपसंख्यानम्' (वा. 3-1-96) इति केलिमर्प्रत्ययः। प्रत्ययस्य कित्त्वान्न गुणः।
2. '**छिदा** द्वैधीभावे' (गणसूत्रम् 3-3-104) इति वचनात् अङ्। अन्यत्र **विच्छित्तिः** इति क्तिन्नपि भवति।
3. 'इगुपधात् कित्' [द. उ. 1-48] इति इन् प्रत्ययः, किद्वद्भावश्च। छिनत्तीति **छिदिः**=परशुः।
4. 'इषिमदिमुदिखिदि**छिदि**—' [द. उ. 8-26] इति किरच्प्रत्ययः। **छिदिरम्**=शस्त्रम्।
5. औणादिके [द. उ. 8-31] रक्प्रत्यये रूपम्। छिद्यते तदिति **छिद्रम्**=विवरम्।

A. '**विच्छिद्यमाने**ऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या॥'
भ. का. 3-52.

B. 'यो **ह्यच्छिद्रित** एव वीर्यशतकृत् तस्मिन् पतत्यन्धयन्
पिष्टाङ्गः स ममार दण्डितखलस्येशस्य पादाङ्कितः।' धा. का. 3. 62.

(569) **" छुट छेदने "** (VI-तुदादिः-1378. सक. सेट्. पर. **कुटादिः ।**)

छोटकः-टिका, छोटकः-टिका, चुच्छुटिषकः-षिका, चोच्छुटकः-टिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि ।

(570) **" छुड संवरणे "** (VI-तुदादिः-1388. सक. सेट्. पर. **कुटादिः ।**)

छोडकः-डिका, छोडकः-डिका, चुच्छुडिषकः-षिका, चोच्छुडकः-डिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि । **'स्फुड संवरणे'** इत्यस्य पाठभेदोऽयम् ।

(571) **" छुप स्पर्शे "** (VI-तुदादिः-1418. सक. अनि. पर.)

छोपकः-पिका, छोपकः-पिका, चुच्छुप्सकः-प्सिका, [1]चोच्छुपकः-पिका; इत्यादीनि सर्वाण्यपि साधारणरूपाणि दैवादिक**क्षिप्यति**वत् (306) ज्ञेयानि । [2]छुपन्-न्ती-ती, इति शतरि रूपम् । [A]छुप्तम् ।

(572) **" छुर छेदने "** (VI-तुदादिः-1372. सक. सेट्. पर. **कुटादिः ।**)

छोरकः-रिका, छोरकः-रिका, चुच्छुरिषकः-षिका, चोच्छुरकः-रिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि । [3]छुरिका; [B]छुरितम् ।

---

1. 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः । न चात्र प्रथमतः तुकि अभ्यासस्येगन्तत्वाभावात् 'गुणो यङ्लुकोः' (7-4-82) इति गुणो न स्यादिति शङ्क्यम् । परत्वात् गुणे कृते, 'दीर्घात्' (6-1-75) इत्यनेन तुक्प्रवृत्तेः । एवमेवाशङ्क्य, परत्वेन गुणप्रवृत्तिः 'दीर्घोऽकितः' (7-4-83) इत्यत्र **भाष्ये** साधिता ।
2. 'तुदादिभ्यः—' (3-1-77) इति शः विकरणप्रत्ययः । तस्य ङिद्वद्भावादङ्गस्य गुणो न । स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः ।
3. 'संज्ञायाम्' (3-3-109) इति स्त्रियां भावादौ ण्वुल् ।

A. 'रोषरुच्छुप्तधियाऽथ रोद्धुमभितो योधान् द्विषद्देशकान्
आलिष्टानजितो जघान धनुषः खण्डेन मर्मस्पृशा ।' धा. का. 2. 84.

B 'सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुटन्
धनुस्त्रुटनतो मनाक् प्रतुटनाय शालामगात् ॥' धा. का. 2. 80.



(573) **" उ छृदिर् दीप्तिदेवनयोः "**

(VII-रुधादिः-1445. अक. **सेट्.** उभ.)

'छृदी सन्दीपने वा णौ छर्दयेच्छर्दतीत्युभे ।
छृन्ते छृणत्तीति पदे दीप्तिदेवनयोः श्नमि ॥' (श्लो. 115) इति **देवः ।**
**'देवनम्** = क्रीडाविजिगीषादि । दीप्ति**वमनयोः** इत्येके ।' इति **धातुकाव्यव्याख्याने** (3. 2.) ।

[1]छर्दकः-र्दिका, छर्दकः-र्दिका, [2]चिच्छर्दिषकः-षिका-चिच्छृत्सकः-त्सिका, [[3]चरीच्छृदकः-दिका;

छर्दिता-त्री, छर्दयिता-त्री, चिच्छर्दिषिता-चिच्छृत्सिता-त्री, चरीच्छृदिता-त्री;

[4]छृन्दन्-ती, छर्दयन्-न्ती, चिच्छर्दिषन्-चिच्छृत्सन्-न्ती; —

[5]छर्दिष्यन्-छर्त्स्यन्-न्ती-ती, छर्दयिष्यन्-न्ती-ती, चिच्छर्दिषिष्यन्- [चिच्छृत्सिष्यन्-न्ती-ती;

छृन्दानः, छर्दयमानः, चिच्छर्दिषमाणः-चिच्छृत्समानः, चरीच्छृद्यमानः;

छर्दिष्यमाणः-छर्त्स्यमानः, छर्दयिष्यमाणः, चिच्छर्दिषिष्यमाणः-चिच्छृत्सि- [ष्यमाणः, चरीच्छृदिष्यमाणः;

सुच्छृत्-सुच्छृद्-सुच्छृदौ-सुच्छृदः; — —

---

1. 'पुगन्तलघूपधस्य च' (7-3-86) इत्युपधाया गुणः । एवं णिजन्तेऽपि ज्ञेयम् ।
2. 'सेऽसिचि कृतचृतच्छृदतृदनृतः' (7-2-57) इति सकारादेरार्धधातुकस्येड्विकल्पः । इट्पक्षे, लघूपधगुणो भवति । इडभावपक्षे, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वाल्लघूपधगुणाभावः । धातुदकारस्य 'खरि च' (8-4-55) इति चर्त्वम् । एवं सन्नन्ते सर्वत्र रूपद्वयस्योपपत्तिर्ज्ञेया ।
3. 'रीगृदुपधस्य च' (7-4-90) इत्यभ्यासस्य रीगागमः । 'दीर्घात्' (6-1-75) इति तुक् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. 'रुधादिभ्यः—' (3-1-78) इति श्नम् । 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपः । एवं **छृन्दानः** इत्यत्रापि प्रक्रिया ज्ञेया ।
5. 'सेऽसिचि कृतचृतच्छृद—' (7-2-57) इति स्यप्रत्ययस्येड्विकल्पः । लघूपधगुणः । एवं शानजन्तेऽपि ज्ञेयम् ।

[1]छृण्णम्[A]-छृण्णः-छृण्णवान्, छर्दितः, चिच्छर्दिषितः-चिच्छृत्सितः, [चरीच्छृदितः-तवान्;
छृदः, छर्दः, चिच्छर्दिषुः-चिच्छृत्सुः, चरीच्छृदः;
छर्दितव्यम्, छर्दयितव्यम्, चिच्छर्दिषितव्यम्-चिच्छृत्सितव्यम्, [चरीच्छृदितव्यम्;
छर्दनीयम्, छर्दनीयम्, चिच्छर्दिषणीयम्-चिच्छृत्सनीयम्, चरीच्छृदनीयम्;
[2]छृद्यम्, छर्द्यम्, चिच्छर्दिष्यम्-चिच्छृत्स्यम्, चरीच्छृद्यम्;
ईषच्छर्दः-दुश्छर्दः-सुच्छर्दः; — —
छृद्यमानः, छर्द्यमानः, चिच्छर्दिष्यमाणः-चिच्छृत्स्यमानः, चरीच्छृद्यमानः;
छर्दः, छर्दः, चिच्छर्दिषः-चिच्छृत्सः, चरीच्छृदः;
छर्दितुम्, छर्दयितुम्, चिच्छर्दिषितुम्-चिच्छृत्सितुम्, चरीच्छृदितुम्;
छृत्तिः, [3]प्रच्छर्दिका, छर्दना, चिच्छर्दिषा-चिच्छृत्सा, चरीच्छृदा;
छर्दनम्, छर्दनम्, चिच्छर्दिषणम्-चिच्छृत्सनम्, चरीच्छृदनम्;
[4]छर्दित्वा-छृत्त्वा, छर्दयित्वा, चिच्छर्दिषित्वा-चिच्छृत्सित्वा, चरीच्छृदित्वा;
प्रच्छृद्य, प्रच्छर्द्य, प्रचिच्छर्दिष्य-प्रचिच्छृत्स्य, प्रचरीच्छृद्य;
छर्दम् २, छर्दित्वा २-छृत्त्वा २, } छर्दम् २, छर्दयित्वा २, } चिच्छर्दिषम् २-चिच्छृत्सम् २, चिच्छर्दिषित्वा २-चिच्छृत्सित्वा २, }

---

1. 'सेऽसिचि—' (7-2-57) इति सादेरार्धधातुकस्येड्विकल्पनेन, 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पनेन वा, 'यस्य विभाषा' (7-2-15) इति निष्ठाया इण्णिषेधः। निष्ठातकार-धातुदकारयोः 'रदाभ्याम्—' (8-2-42) इति नत्वम्। 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति धातुनकारस्य णत्वम्। 'ष्टुना ष्टुः' (8-4-41) इति निष्ठानकारस्य ष्टुत्वेन णकारः।
2. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यप्।
3. 'रोगाख्यायां ण्वुल् बहुलम्' (3-3-108) इति ण्वुलि, 'प्रत्ययस्थात्—' (7-3-44) इतीत्त्वे रूपम्। **प्रच्छर्दिका**=वमथुः रोगविशेषः।
4. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः। इडभावपक्षे धातुदकारस्य 'खरि च' (8-4-55) इति चर्त्वेन तकारः।

A. '**संच्छृण्ण**गात्रमथ शात्रवतर्दिनस्ते
चाणूरमुष्टिकमुखा वसनान्यकृन्तन्।' धा. का. 3. 2.



चरीच्छृदम् २; चरीच्छृदित्वा २; } [1]छर्दिः.

(574) "**छृदी सन्दीपने**" (X-चुरादिः-1821. सक. सेट्. उभ. आधृषीयः)

'छृद–' इति केचित् पठन्ति।

'छृदी सन्दीपने वा णौ छर्दयेच्छर्दतीत्युभे।
छृन्ते छृणत्तीति पदे दीप्तिदेवनयोः श्नमि॥' (श्लो. 115) इति **देवः**।

अस्य धातोः आधृषीयत्वेन णिज्विकल्पः। ण्यन्तात्, णिजभावपक्षे शुद्धात् शुद्धप्रकृतिकसन्नन्तात्-यङन्ताच्च छर्दकः-र्दिका, छर्दकः-र्दिका, [2]चिच्छर्दिषकः-षिका, चरीच्छृदकः-दिका; इत्यादीनि सर्वाण्यपि रूपाणि रौधादिकछर्दतिवत् (573) ज्ञेयानि। निष्ठायाम्-[A]छर्दितः। ण्यन्तात् सनि तु इमानि रूपाणीति विशेषः।

चिच्छर्दयिषकः-षिका, चिच्छर्दयिषिता-त्री, चिच्छर्दयिषन्-न्ती, चिच्छर्दयिषिष्यन्-न्ती-ती, चिच्छर्दयिषमाणः, चिच्छर्दयिषिष्यमाणः, [3]चिच्छर्दयिट्-यिषौ-यिषः, चिच्छर्दयिषितः-तवान्, चिच्छर्दयिषुः, चिच्छर्दयिषितव्यम्, चिच्छर्दयिषणीयम्, चिच्छर्दयिष्यम्, ईषच्चिच्छर्दयिषः-दुश्चिच्छर्दयिषः-सुचिच्छर्दयिषः, चिच्छर्दयिष्यमाणः, चिच्छर्दयिषितुम्, चिच्छर्दयिषा, चिच्छर्दयिषणम्, चिच्छर्दयिषित्वा, प्रचिच्छर्दयिष्य, चिच्छर्दयिषम् २, चिच्छर्दयिषित्वा २.

(575) "**छृप संदीपने**" (X-चुरादिः-1821. सक. सेट्. उभ. **आधृषीयः**।)

'**छृदी** सन्दीपने' इत्यस्य, **क्षीरस्वामि**संमतपाठ एवम्।

छर्पकः-र्पिका, चिच्छर्पयिषकः-षिका, छर्पकः-र्पिका, चिच्छर्पिषकः-षिका,

---

1. औणादिके [द. उ. 9-30] इसिप्रत्यये **छर्दिः**=वमिः। छर्दयतीति **छर्दिः**।
2. 'सेऽसिचि—' (7-2-57) इति इड्विकल्पः नास्य धातोर्भवति। तत्र रुधादिसाहचर्येण, '**उ छृदिर्**—' इति रौधादिकधातोरेव ग्रहणात्। अत एवात्र धातौ ईदित्करणं सार्थकम्। अन्यथा, णिजभावपक्षे, 'सेऽसिचि-' (7-2-57) इतीड्विकल्पनेन, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधे सिद्धे ईदित्करणं व्यर्थं स्यात्। प्रकृते तु णिजभावपक्षे शुद्धे 'श्वीदितः—' (7-2-14) इतीण्णिषेधः।
3. अतो लोपे जश्त्वचर्त्वयोः रूपम्।

A. 'प्रजहार हरिं रणेष्वतर्पन् सुहृदं **छर्दित**मन्युरप्रदर्भन्॥' धा. का. 3.49.

चरीच्छ्रपक:-पिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्पयति**वत् (554) ज्ञेयानि ।

## (576) "छेद द्वैधीकरणे"

(X चुरादि: 1934. सक. सेट्. उभ. **अदन्तः** ।)

छेदक:-दिका, चिच्छेदयिषक:-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-**केतयति**वत् (260) बोध्यानि । [A]प्रच्छेदितम् ।

## (577) "छो छेदने" (IV-दिवादि:-1146. सक. अनि. पर.)

[1]छायक:-यिका, [2]छायक:-यिका, [3]चिच्छासक:-यिका, [4]चाच्छायक:-यिका ;
छाता-त्री, छाययिता-त्री, चिच्छासिता-त्री, चाच्छायिता-त्री ;
[5]छ्यन्-न्ती, छाययन्-न्ती, चिच्छासन्-न्ती ; —
छास्यन्-न्ती-ती, छाययिष्यन्-न्ती-ती, चिच्छासिष्यन्-न्ती-ती ; —
— छाययमान:, छाययिष्यमाण:, — चाच्छायमान:, चाच्छायिष्यमाण: ;
[6]काष्ठच्छा:-काष्ठच्छौ-काष्ठच्छा: ; — —

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यात्वे, '**आतो** युक् चिण्कृतोः' (7-3-33) इति युगागम: । एवं णप्रत्यये, घञि, णमुलि च बोध्यम् ।
2. णौ परत: आत्वे, 'शा**च्छा**साह्वाव्यावेपां युक्' (7-3-37) इति पुगपवाद: युगागम: । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. सनि, 'सन्यङोः' (6-1-9) इति द्वित्वे, 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ति' (परिभाषा-68) इति वचनात् पूर्वं ह्रस्व: । अनन्तरं 'सन्यत:' (7-4-79) इतीत्वे, तुकि, श्चुत्वे **चिच्छासक:** इति रूपम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
4. अत्रापि, अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वमभ्यासह्रस्वे, 'दीर्घोऽकित:' (7-4-83) इति दीर्घे, 'दीर्घात्' (6-1-75) इति तुकि श्चुत्वे **चाच्छायक:** इति रूपम् । एवं यङन्ते सर्वत्र प्रक्रिया बोध्या ।
5. शतरि, आत्वाभावे, 'दिवादिभ्य:—' (3-1-69) इति विकरणप्रत्यये श्यनि, '**ओत:** श्यनि' (7-3-71) इति ओकारस्य लोपे रूपम् । स्त्रियाम्, 'शप्श्यनो-र्नित्यम्' (7-1-81) इति नित्यं नुम् ।
6. आत्वे, 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विपि रूपम् ।

A. 'नित्यं व्ययापितमलो हृदि रूदयंस्तं **प्रच्छेदित**प्रकृतिरच्छदितस्वरूपम् ।' धा. का. 3. 63.



[1]छितम्-छित:-छितवान् } छायित:, चिच्छासित:, चाच्छायित:-तवान् ;
छातम्-छात:-छातवान् }
[2]काष्ठच्छ:, [3]छाय:, [4]काष्ठप्रच्छाय:, [5]प्रच्छ:, छाय:, चिच्छासु:, [6]चाच्छ: ;
छातव्यम्, छाययितव्यम्, चिच्छासितव्यम्, चाच्छायितव्यम् ;
छानीयम्, छायनीयम्, चिच्छासनीयम्, चाच्छायनीयम् ;
[7]छेयम्, छाय्यम्, चिच्छास्यम्, चाच्छाय्यम् ;
[8]ईषच्छान:-दुश्छान:-सुच्छान: ; — —
छायमान:, छाय्यमान:, चिच्छास्यमान:, चाच्छाय्यमान: ;
छाय:, छाय:, चिच्छास:, चाच्छाय: ;
छातुम्, छाययितुम्, चिच्छासितुम्, चाच्छायितुम् ;
छाति:-छिति:, [9]आच्छा-छायना, चिच्छासा, चाच्छाया ;
छानम्, छायनम्, चिच्छासनम्, चाच्छायनम् ;
छात्वा-छित्वा, छाययित्वा, चिच्छासित्वा, चाच्छायित्वा ;
[10]प्रच्छाय, प्रच्छाय्य, प्रचिच्छास्य, प्रचाच्छाय्य ;

---

1. 'शा**च्छोर**न्यतरस्याम्' (7-4-41) इति तकारादौ किति प्रत्यये परत: इत्वविकल्प: । तेन रूपद्वयम् । एवं, क्तिनि, क्त्वाप्रत्यये च ज्ञेयम् ।
2. 'आतोऽनुपसर्गे क:' (3-2-3) इति कर्मण्युपपदे क: । '**आतो** लोप इटि च' (6-4-64) इत्याकारलोप: ।
3. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इति कर्तरि णप्रत्यये युगागम: ।
4. उपसर्गसमभिव्याहारात्, कप्रत्ययाभावे, 'कर्मण्यण्' (3-2-1) इत्यणि युगागमे रूपम् ।
5. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्यय: । आकारलोप: ।
6. यङन्तात् पचाद्यचि (3-1-134), 'न धातुलोप—' (1-1-4) इति सूत्रस्य प्रत्याख्यानपक्षे, अकारस्य पृथगल्लोपे 'यङोऽचि च' (2-4-74) इति यकारमात्रस्य लुकि, अकारलोपस्य स्थानिवद्भावेन, अजाद्यार्धधातुकङित्परकत्वात् 'आतो लोप इटि च' (6-4-64) इत्याकारलोपे रूपम् ।
7. 'अचो यत्' (3-1-97) इति यति, 'ईद्यति' (6-4-65) इति आकारस्य ईकारे गुण: ।
8. 'आतो युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच् ।
9. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियां भावादावङ् ।
10. 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परिभाषा-55) इति वचनात् पूर्वं ल्यबादेश: । तादिकित्प्रत्ययपरकत्वाभावात् वैकल्पिकमित्त्वं न प्रवर्तते ।

| | | | |
|---|---|---|---|
| छायम् २ छात्वा २, छित्वा २, | छायम् २, छाययित्वा २, | चिच्छासम् २, चिच्छासित्वा २, | चाच्छायम् २ ; चाच्छायित्वा २ ; |

[1]छाया, [2]छागः.

## (578) "जक्ष भक्षहसनयोः" (II-अदादिः-1071. सक. सेट्. पर.)

### जक्षित्यादिः।

| | | | |
|---|---|---|---|
| जक्षकः-क्षिका, | जक्षकः-क्षिका, | जिजक्षिषकः-षिका, | [3]जाजक्षकः-क्षिका ; |
| जक्षिता-त्री, | जक्षयिता-त्री, | जिजक्षिषिता-त्री, | जाजक्षिता-त्री ; |
| [4]जक्षत्[A]-ती, [5]जक्षन्ति-जक्षति[कुलानि], | [6]जक्षयन्-न्ती, | जिजक्षिषन्-न्ती ;— | |
| जक्षिष्यन्-न्ती-ती, | जक्षयिष्यन्-न्ती-ती, | जिजक्षिषिष्यन्-न्ती-ती ;— | |
| — | — | — जाजक्ष्यमाणः, | जाजक्षिष्यमाणः ; |
| [7]जट्-जड्-जक्षौ-जक्षः ; | — | — | — |
| [8]जक्षितम्-तः, | जक्षितः, | जिजक्षिषितः, | जाजक्षितः-तवान् ; |
| जक्षः, | जक्षः, | जिजक्षिषुः, | जाजक्षः ; |
| जक्षितव्यम्, | जक्षयितव्यम्, | जिजक्षिषितव्यम्, | जाजक्षितव्यम् ; |

---

1. 'माच्छाससिसूभ्यो यः' [द. उ. 8-12] इति यप्रत्ययः। छयति, छायते वा इति **छाया**=प्रतिरूपम्।
2. 'छापूञ्खडिभ्यो गक्' [द. उ. 3-69] इति गक्प्रत्ययः। छयति इति **छागः**=अजः।
3. यङि द्वित्वे, अभ्यासस्य 'दीर्घोऽकितः' (7-4-83) इति दीर्घः। एवं यङन्ते सर्वत्र ज्ञेयम्।
4. '**जक्षित्यादयः** षट्' (6-1-6) इत्यभ्यस्तसंज्ञायां, 'नाभ्यस्ताच्छतुः' (7-1-78) इति सर्वनामस्थाननिमित्तको नुम् न भवति।
5. नपुंसकलिङ्गे शत्रन्तात् जश्शसोः 'वा नपुंसकस्य' (7-1-79) इति नुमागमो विकल्पेन भवति।
6. '**निगरण**चलनार्थेभ्यश्च' (1-3-87) इति ण्यन्तात् शतैव। न तु शानच्।
7. 'क्विपि, पदान्ते, 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति ककारलोपे जश्त्वे चर्त्वे च रूपम्।
8. 'क्तोऽधिकरणे च ध्रौव्यगति**प्रत्यवसानार्थेभ्यः**—' (3-4-76) इति अधिकरणे, कर्मणि, कर्तरि च यथासम्भवं क्तप्रत्ययो भवति।

A. 'उदश्वसन् प्राणमिवाप्य काश्चिद् दृष्ट्वा सलीलं मृदु **जक्षतं** तम्॥' धा. का. 2. 51.



| | | | |
|---|---|---|---|
| जक्षणीयम्, | जक्षणीयम्, | जिजक्षिषणीयम्, | जाजक्षणीयम् ; |
| जक्ष्यम्, | जक्ष्यम्, | जिजक्षिष्यम्, | जाजक्ष्यम् ; |
| ईषज्जक्षः-दुर्जक्षः-सुजक्षः ; | — | — | — |
| जक्ष्यमाणः, | जक्ष्यमाणः, | जिजक्षिष्यमाणः, | जाजक्ष्यमाणः ; |
| जक्षः, | जक्षः, | जिजक्षिषः, | जाजक्षः, |
| जक्षितुम्, | जक्षयितुम्, | जिजक्षिषितुम्, | जाजक्षितुम् ; |
| [1]जक्षा, | जक्षणा, | जिजक्षिषा, | जाजक्षा ; |
| जक्षणम्, | जक्षणम्, | जिजक्षिषणम्, | जाजक्षणम् ; |
| जक्षित्वा, | जक्षयित्वा, | जिजक्षिषित्वा, | जाजक्षित्वा ; |
| प्रजक्ष्य, | प्रजक्ष्य, | प्रजिजक्षिष्य, | प्रजाजक्ष्य ; |
| जक्षम् २, जक्षित्वा २, | जक्षम् २, जक्षयित्वा २, | जिजक्षिषम् २, जिजक्षिषित्वा २, | जाजक्षम् २ ; जाजक्षित्वा २. |

## (579) "जज युद्धे" (I-भ्वादिः-242. सक. सेट्. पर.)

जाजकः-जिका, जाजकः-जिका, जिजजिषकः-षिका, जाजजकः-जिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**खदति**वत् (338) ज्ञेयानि। [A]जजनम्।

## (580) "जजि युद्धे" (I-भ्वादिः-243. सक. सेट्. पर.)

जञ्जकः-ञ्जिका, जञ्जकः-ञ्जिका, जिजञ्जिषकः-षिका, जाजञ्जकः-ञ्जिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि। [B]जञ्जा।

## (581) "जट सङ्घाते" (I-भ्वादिः-305. अक. सेट्. पर.)

जाटकः-टिका, जाटकः-टिका, जिजटिषकः-षिका, जाजटकः-टिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कठति**वत् (148) ज्ञेयानि। [2]जटः-

---

1. 'गुरोश्च हलः' (3-3-103) इति स्त्रियाम् अकारप्रत्ययः।
2. पचाद्यचि (3-1-134) स्त्रियां टाप्। **जटा** = केशपाशस्य संहननविशेषः।

A. 'लाजादिहोतृष्वपि लञ्जनप्रदा यस्मिन् विनेशुर्**जजनेषु** दानवाः॥' धा. का. 1.32.

B. 'जहर्ष **जञ्जा**तुजितस्थलैरसौ वृषैरतुञ्जैर्गजगञ्जिभिर्वृतम्।' धा. का. 1. 33.

[A]जटा । [1]जटी । [2]जटिलः-[3]जटालः ।

(582) **"जन जनने"** (III-जुहोत्यादिः-1105. अक. सेट्. पर.)

**छान्दसः ।**

[4]जनकः-निका, [5]जनकः-निका, जिजनिषकः-षिका, [6]जञ्जनकः-निका, जाजायकः-यिका ;

जनिता-त्री, जनयिता-त्री, जिजनिषिता-त्री, जञ्जनिता-त्री, जाजायिता-त्री ;

[7]जज्ञत्-ती, [8]जनयन्-न्ती, जिजनिषन्-न्ती ; —

जनिष्यन्-न्ती-ती, जनयिष्यन्-न्ती-ती, जिजनिषिष्यन्-न्ती-ती ; —

— जञ्जन्यमानः-जञ्जनिष्यमाणः, जाजायमानः, जाजायिष्यमाणः ;

[9]गोजाः-गोजौ-गोजाः ; — — —

1. जटा अस्यास्तीति **जटी** । अनदन्तत्वेऽपि **भाष्यकार**प्रयोगादिनिः—इति **माधवधातुवृत्तौ** ।
2. पिच्छादिषु (5-2-100) '**जटा**कलाघटाः क्षेपे' (गणसूत्रम् · 5-2-100) इति वचनात् क्षेपे गम्यमाने मत्वर्थीये इलच् प्रत्यये **जटिलः** ।
3. मत्वर्थीये 'सिध्मादिभ्यश्च' (5-2-97) इत्यत्र '**जटा**घटाकटाकालाः क्षेपे' (गणसूत्रम् 5-2-97) इति वचनात् क्षेपे गम्यमाने लप्रत्यये **जटालः** ।
4. ण्वुलि '**जनि**वध्योश्च' (7-3-35) इत्युपधाया वृद्धिनिषेधः । एवं घञि, णमुलि च ज्ञेयम् ।
5. '**जनी**जृष्—' (गणसूत्रम्-भ्वादौ) इति सूत्रे ईकारविशिष्टोपादानात्, अस्य **जन**-धातोर्न मित्त्वप्रयुक्तो ह्रस्वः । अपितु, '**जनि**वध्योश्च' (7-3-35) इत्येव णौ परतः वृद्धिनिषेधः ।
6. यङि द्वित्वे, 'ये विभाषा' (6-4-43) इति वैकल्पिकमात्त्वम् । आत्त्वाभावपक्षे, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुगागमे, **जञ्जनकः** इति, आत्त्वपक्षे **जाजायकः** इति च रूपम् । एवं यङन्ते सर्वत्र रूपद्वयस्योपपत्तिर्ज्ञेया ।
7. शतरि 'जुहोत्यादिभ्यः श्लुः' (2-4-75) इति श्लौ, 'श्लौ' (6-1-10) इति द्वित्वे, उत्तरखण्डे, 'गमहन**जन**खनघसां लोपः क्ङित्यनङि' (6-4-98) इत्युपधालोपे, 'स्तोः श्चुना श्चुः' (8-4-40) इति नकारस्य श्चुत्वे **जज्ञत्** इति रूपम् । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम् न भवति ।
8. 'बुधयुधनश**जने**ङ्प्रुद्रुस्रुभ्यो णेः' (1-3-86) इति ण्यन्तात् शत्रैव । न शानच् ।
9. '**जन**सनखनक्रमगमो विट्' (3-2-67) इति विट्प्रत्ययः । 'विड्वनोरनुनासिकस्यात्' (6-4-41) इत्यनुनासिकस्याकारे, आकारान्तं प्रातिपदिकम् । एवम्, **अब्जाः, अद्रिजाः, ऋतजाः** इत्यादिकं बोध्यम् ।

A. 'अशोटनीयैः सुधियामसेटकैर्युतान् **जटा**झाटधरैश्च कैश्चन ॥' धा. का. 1.40.



जनितम्-तः, जनितः, जिजनिषितः, जञ्जनितः-जाजायितः-तवान् ;

जनः, [1]जन्यः, जनः, जिजनिषुः, जञ्जनः-[2]जाजः ;

जनितव्यम्, जनयितव्यम्, जिजनिषितव्यम्, जञ्जनितव्यम्, जाजायितव्यम् ;

जननीयम्, जननीयम्, जिजनिषणीयम्, जञ्जननीयम्-जाजायनीयम् ;

[3]जन्यम्, जन्यम्, जिजनिष्यम्, जञ्जन्यम्-जाजाय्यम् ;

ईषज्जनः-दुर्जनः-सुजनः ; — —

जन्यमानः-जायमानः, जन्यमानः, जिजनिष्यमाणः, जञ्जन्यमानः-जाजाय्यमानः ;

जनः, जनः, जिजनिषः, जञ्जनः-जाजायः ;

जनितुम्, जनयितुम्, जिजनिषितुम्, जञ्जनितुम्-जाजायितुम् ;

[4]जातिः, जनना, जिजनिषा, जञ्जना-जाजाया ;

जननम्, जननम्, जिजनिषणम्, जञ्जननम्-जाजायनम् ;

जनित्वा, जनयित्वा, जिजनिषित्वा, जञ्जनित्वा-जाजायित्वा ;

प्रजन्य-प्रजाय, [5]प्रजनय्य, प्रजिजनिष्य, प्रजञ्जन्य-प्रजाजाय्य ;

जनम् २, जनित्वा २, } [6]जनम् २, जनयित्वा २, } जिजनिषम् २, जिजनिषित्वा २, } जञ्जनम् २-जाजायम् २ ; जञ्जनित्वा २-जाजायित्वा २. }

(583) **"जनी प्रादुर्भावे"** (IV-दिवादिः-1149. अक. सेट्. आत्म.)

**प्रादुर्भावः**=उत्पत्तिरभिव्यक्तिर्वा । अनुपूर्वकोऽयं धातुः सकर्मकः ।

1. 'भव्यगेयप्रवचनीयोपस्थानीय**जन्या**प्लाव्यापात्या वा' (3-4-68) इति कर्तरि भावे च यदन्तो निपातितः ।
2. यङन्तात् पचाद्यचि (3-1-134) आत्वपक्षे, अतो लोपे, यकारस्य लुकि, स्थानिवद्भावेन आकारलोपे, रूपम् ।
3. 'तकिशसि**जनि**भ्यो यद्वाच्यः' (वा. 3-1-97) इति यत् । ण्यदपवादः ।
4. '**जन**सनखनां सञ्झलोः' (6-4-42) इति आत्वे सवर्णदीर्घे रूपम् ।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
6. अस्य धातोर्मित्त्वाभावात्, णमुल्परके णिचि उपधायाः वैकल्पिकदीर्घो न ।

[1]जनक:-निका, [2]जनक:-निका, [3]जिजनिषक:-षिका, [4]जञ्जनक:-जन्जनक:-निका, जाजायक:-यिका ;
जनिता-त्री, जनयिता-त्री, जिजनिषिता-त्री, जञ्जनिता-जाजायिता-त्री ;
— [5]जनयन्-न्ती, जनयिष्यन्-न्ती-ती ; — —
[6]जायमान:, — जिजनिषमाण:, जञ्जन्यमान:-[A]जाजायमान: ;
जनिष्यमाण:, — जिजनिषिष्यमाण:, जञ्जनिष्यमाण:-जाजायिष्यमाण: ;
[7]प्रजा-प्रजानौ-प्रजान: ; — — — —
[8]जातम्-[B]जात:-जातवान्, जनित:, जिजनिषित:, जञ्जनित:-जाजायित:-तवान्;

---

1. '**जनिव**ध्योश्च' (7-3-35) इति निषेधात्, 'अत उपधाया:' (7-2-116) इति वृद्धिर्न भवति। एवं घञि, णमुल्यपि ज्ञेयम्।
2. णिचि, 'अत उपधाया:' (7-2-116) इति प्राप्ता वृद्धि:, '**जनिव**ध्योश्च' (7-3-35) इति निषिध्यते। न च वृद्धौ सत्यामपि, '**जनी**जृष्—' (गणसूत्रम्-भ्वादौ) इति वचनेन मित्त्वात्, 'मितां ह्रस्व:' (6-4-92) इति ह्रस्व: स्यादिति शङ्क्यम्; मित्त्वविधानस्य, चिण्णमुल्परकणौ दीर्घविकल्पविधानेन चारितार्थ्यात्। '**जनिव**ध्योश्च' (7-3-35) इति निषेधस्य जागरूकत्वाच्च। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
3. '**जन**सनखनां सञ्झलो:' (6-4-42) इति सूत्रेण आत्वं तु नात्र प्रवर्तते। झलादौ सनि तद्विधानात्। अत्र चेडागमप्रवृत्त्या सन: झलादित्वाभावात्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
4. 'ये विभाषा' (6-4-43) इत्यनेन आत्वविकल्प:। आत्वाभावपक्षे, द्वित्वे, अभ्यासस्य 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति नुगागम:। आत्वपक्षे 'दीर्घोऽकित:' (7-4-83) इति अभ्यासस्य दीर्घे **जाजायक:** इति रूपम्। एवं यङन्ते सर्वत्र रूपद्वयं बोध्यम्। नुक: 'पदान्तवद्वाच्य:' (वा. 7-4-85) इति वचनात् कदाचित् परसवर्णाभावरूपोऽपि साधुरेव।
5. 'बुधयुधनश**जने**ङ्प्रुद्रुस्रुभ्यो णे:' (1-3-86) इति ण्यन्तात् परस्मैपदमेव। न तु शानच्।
6. 'दिवादिभ्य:—' (3-1-69) इति श्यन्प्रत्यय:। 'ज्ञाजनोर्जा (7-3-79) इति प्रकृते: जादेश:।
7. क्विपि, 'अनुनासिकस्य क्विझलो: क्ङिति' (6-4-15) इति दीर्घ:। 'न लोप: प्रातिपदिकान्तस्य' (8-2-7) इति नकारलोप:।
8. ईदित्त्वेन, 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेध:। '**जन**सनखनां सञ्झलो:' (6-4-42) इति नकारस्याकार:। सवर्णदीर्घ:।

A. '**जाजायमानेन** भयेन नभ्राडतायताथो सहसोत्थितश्च।' वा. वि. 3.44.
B. 'असौ कुमारस्त**मजोऽनुजात**स्त्रिविष्टपस्येव पतिं जयन्त:।' **रघुवंशे** 6.78.



[A]जन:, [1]प्रजनिष्णु:,[B] [2]जज्ञि:, [3]विजावा-विजावानौ-विजावान:, विजावरी, [4]जन्य:, [5]मन्दुरज:, [6]प्रावृषिज:-शरदिज:-कालेज:-[C]दिविज:, [7]सरसिजम्-सरोजम्, [8]वर्षेज:-वर्षज:-क्षरेज:-क्षरज:-शरेज:-शरज:-वरेज:-वरज:, [9]संस्कारज:-अदृष्टज:, [10]प्रजा-अनुज:,[D] [11]बीजम्-

---

1. 'अलंकृञ्निराकृञ्प्र**जनो**त्पद—' (3-2-136) इत्यादिना तच्छीलादिषु कर्तृषु प्रोपसृष्टादस्मात् इष्णुच् प्रत्यय:।
2. 'भाषायां धाञ्कृसृगमि**जनि**नमिभ्य:—' (वा. 3-2-171) इति लिट: कि: किन् वा आदेश:। लिड्वद्भावात् 'लिटि धातोरनभ्यासस्य' (6-1-8) इति द्विर्वचनम्। ताच्छीलिकोऽयं प्रत्यय:। अभ्यासकार्यम्। 'गमहन**जन**खनघसां लोप: क्ङित्यनङि' (6-4-98) इत्युपधालोप:। 'स्तो: श्चुना श्चु:' (8-4-40) इति श्चुत्वम्।
3. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति वनिप्प्रत्यये, 'विड्वनोरनुनासिकस्यात्' (6-4-41) इत्यात्वे, सवर्णदीर्घे, 'नलोप: प्रातिपदिकान्तस्य' (8-2-7) इति नकारलोपे, रूपम्। नकारान्तोऽयं शब्द:। स्त्रियाम्, 'वनो र च' (4-1-7) इति ङीब्रेफौ भवत:।
4. 'भव्यगेयप्रवचनीयोपस्थानीय**जन्या**प्लाव्यापात्या वा' (3-4-68) इति कर्तरि यत्प्रत्ययान्तो निपातित:। पक्षे भावेऽप्ययं प्रत्यय:।
5. 'सप्तम्यां **जने**र्ड:' (3-2-97) इति डप्रत्यय:। 'ङ्यापो: संज्ञाच्छन्दसोर्बहुलम्' (6-3-63) इति पूर्वपदस्य ह्रस्व:।
6. 'प्रावृट्शरत्कालदिवां **जे**' (6-3-15) इति सप्तम्या अलुक्।
7. 'तत्पुरुषे कृति बहुलम्' (6-3-14) इति वा सप्तम्या अलुक्।
8. 'विभाषा वर्षक्षरशरवरात्' (6-3-16) इति विभाषया सप्तम्या अलुक्।
9. 'पञ्चम्यामजातौ' (3-2-98) इति डप्रत्यय:।
10. 'उपसर्गे च संज्ञायाम्' (3-2-99) इति डप्रत्यय:।
11. विशेषेण जायते इति **बीजम्**। 'उपसर्गे च संज्ञायाम्' (3-2-99) इति डप्रत्यय:। 'कृञो द्वितीयतृतीयशम्ब**बीजात्** कृषौ' (5-4-58) इत्यत्र, '**बीज**' इति निर्देशात्, पृषोदरादित्वेन (6-3-109) '**वि**' इत्युपसर्गस्य दीर्घ:, वकारस्य बकारादेश:।

A. 'ताव**ज्जनित्वा** प्रजनाथपत्न्या मनो **जनस्या**भिनिविश्य देव्या।' वा. वि. 3.39.
B. 'तर्पणं **प्रजनिष्णूनां** सस्यानाममलं पय:।' भ. का. 7. 2.
C. 'अवश्यलाव्या **दिविजा** ममाद्य ये खेचरीं वाचमुदैरिरंस्ताम्।
नूनं गृहेशूर इतीमके मां क्षिपन्ति **वर्षेज**जलानिवार्यम्॥' वा. वि. 2.18.
D. 'मन्ये **किञ्ज**महं घ्नन्तं त्वाम**क्षत्रियजे** रणे।
**लक्ष्मणाधिज** दुर्वृत्तं प्रयुक्त**मनुजेन** न:॥' भ. का. 6.136.

[1]पुमनुजा-रामानुजः, [2]पुंसाऽनुजः, [3]अजः-द्विजः,[A] ब्राह्मणजः, क्षत्रियजः-नगजः[B]-[C]वनजः, कौसल्याजः,[D] अभिजः-परिजः [केशः], जनः, जिजनिषुः, जञ्जनः- [4]जाजः ;

जनितव्यम् , जनयितव्यम् , जिजनिषितव्यम् , जञ्जनितव्यम्-जाजायितव्यम् ;

जननीयम् , जननीयम् , जिजनिषणीयम् , जञ्जननीयम्-जाजायनीयम् ;

[5]जन्यम् ,[E] जन्यम् , जिजनिष्यम् , जञ्जन्यम्-जाजाय्यम् ;

ईषज्जनः-दुर्जनः-सुजनः ; — — —

जन्यमानः-जायमानः, जन्यमानः, जिजनिष्यमाणः, जञ्जन्यमानः-जाजाय्यमानः ;

---

1. 'अनौ कर्मणि' (3-2-100) इति डप्रत्ययः।
2. 'पुंसाऽनुजो जनुषाऽन्ध इति वक्तव्यम्' (वा. 6-3-3) इति तृतीयाया अलुक्।
3. 'अन्येष्वपि दृश्यते' (3-2-101) इति डप्रत्ययः। "—'सप्तम्याम्—' (3-2-97) इत्युक्तम्; असप्तम्यामपि दृश्यते—न जायते इत्यजः। द्विर्जाताः द्विजाः। 'पञ्चम्यामजातौ' (3-2-98) इत्युक्तम्; जातावपि दृश्यते—ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम्। 'उपसर्गे च संज्ञायाम्' (3-2-99) इत्युक्तम्; असंज्ञायामपि दृश्यते—अभिजाः, परिजाः केशाः। 'अनौ कर्मणि' (3-2-100) इत्युक्तम्; अकर्मण्यपि दृश्यते—अनुजातः=अनुजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, कारकान्तरेऽपि—परितः खाता=परिखा, आखा।" इति काशिका (3-2-101) अत्रानुसन्धेया।
4. यङन्तात् पचाद्यचि (3-1-134) यङ्लोपे, अकारस्य स्थानिवद्भावात् उत्तरखण्डाकारस्य लोपः।
5. 'तकिशसिचतिजनिभ्यो यद्वाच्यः' (वा. 3-1-97) इति ण्यदपवादो यत्।

A. 'वेदिवत् सपरिग्राह्या यज्ञियैः संस्कृता द्विजैः।' भ. का. 7-45.

B. 'न गजा नगजा दयिता दयिता विगतं विगतं वलितम् वलितम्।
प्रमदाप्रमदा महता महतामरणं मरणं समयात् समयात्॥' भ. का. 10.9.

C. 'घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना।
जनमता ददृशे जनकात्मजा तरुमृगेण तरुस्थलशायिनी॥' भ. का. 10. 15.

D. 'पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः।
कौसल्याज शशादीनां तेषां नैकोऽप्यहं कपिः॥' भ. का. 6.134.

E. 'स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यम्।' भ. का. 3.27.



प्रजनः, जनः, जिजनिषः, जञ्जनः-जाजायः ;

जनितुम् , जनयितुम् , जिजनिषितुम् , जञ्जनितुम्-जाजायितुम् ;

[1]जातिः, [2]अजननिः,[A] जनना, जिजनिषा, जञ्जना-जाजाया ;

जननम् , जननम् , जिजनिषणम् , जञ्जननम्-जाजायनम् ;

जनित्वा , जनयित्वा, जिजनिषित्वा, जञ्जनित्वा-जाजायित्वा ;

प्रजन्य-प्रजाय, [3]प्रजनय्य, प्रजिजनिष्य, प्रजञ्जन्य-प्रजाजाय्य ;

जनम् २, जनित्वा २, } [4]जनम् २-जानम् २, जनयित्वा २, } जिजनिषम् २, जिजनिषित्वा २, }

जञ्जनम् २-जाजायम् २; जञ्जनित्वा २-जाजायित्वा २; }

[5]जन्तुः, [6]जनयित्नुः, [7]जनकः, [8]जन्म, [9]जाया, [10]जठरम् , [11]जनुः.

---

1. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, 'जनसनखनां सञ्झलोः' (6-4-42) इति आत्वे, सवर्णदीर्घे रूपम्।
2. स्त्रियां भावे 'आक्रोशे नञ्यनिः' (3-3-112) इत्यनिप्रत्ययः।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
4. 'जनीजृष्—' (गणसूत्रम्—भ्वादौ) इति वचनेन मित्त्वात्, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः। मित्त्वस्येदमेवासाधारणं प्रयोजनम्।
5. 'कमिमनिजनि—' [द. उ. 1-125] इत्यादिना तुप्रत्ययः। जायते, जजन्ति इति वा जन्तुः=प्राणी।
6. ण्यन्तादस्मात् औणादिके [द. उ. 1-140] इत्नुच्प्रत्यये जनयित्नुः=पिता। 'अयामन्ताल्वाय्येत्न्विष्णुषु च' (6-4 55) इति णेरयादेशः।
7. जनयतीति जनकः=पिता। 'क्वुन् शिल्पिसंज्ञयोः' [द. उ. 3-5] इति क्वुन्प्रत्ययः।
8. 'मनिन्' [द. उ. 6-73] इति मनिनि रूपम्। जायते, जन्यते इति वा जन्म
9. 'जनेर्यक्' [द. उ. 8-13] इति यक्प्रत्ययः। जायते, जन्यते वाऽस्यापत्यमिति जाया=भार्या। 'ये विभाषा' (6-4-43) इत्यात्वे, सवर्णदीर्घे च रूपम्।
10. 'जनेरर ठः' [द. उ. 8-98] इति अरप्रत्यये, धातोश्च ठकारेऽन्तादेशे रूपम्। जायन्तेऽस्मिन् अतिशयेन वातादिवैषम्यात् व्याधय इति जठरम्=उदरम्।
11. 'जनेरुसिः' [द. उ. 9-37] इत्युसिप्रत्ययः। जायते इति जनुः=जन्म।

A. 'तस्याजननिरेवास्तु जननीक्लेशकारिणः॥' शिशुपालवधे 24.5.

## (584) "जप व्यक्तायां वाचि" (I-भ्वादि:-397. सक. सेट्. पर.)

'जप मानसे च' मनोनिर्वर्त्ये वचने—इत्यर्थः ।

जापकः-पिका, जापकः-पिका, जिजपिषकः-षिका, [1]जञ्जपकः-जन्जपकः-पिका ;

जपिता-त्री, जापयिता-त्री, जिजपिषिता-त्री, जञ्जपिता-जन्जपिता-त्री ;

[A]जपन्-न्ती, [2]व्यतिजपन्-न्ती, जापयन्-न्ती, जिजपिषन्-न्ती ; —

जपिष्यन्-न्ती-ती, जापयिष्यन्-न्ती-ती, जिजपिषिष्यन्-न्ती-ती ; —

— जापयमानः, — जञ्जप्यमानः-जन्जप्यमानः ;

— जापयिष्यमाणः, — जञ्जपिष्यमाणः-जन्जपिष्यमाणः ;

जप्-जब्-जपौ-जपः ; — — —

जपितम्-तः, [3]जप्तम्, जापितः, जिजपिषितः, जञ्जपितः-जन्जपितः-तवान् ;

जपः, [4]कर्णेजपः,[B] जापः, जिजपिषुः, जञ्जपः-जन्जपः, [5]जञ्जपूकः ;[C]

---

1. 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' (3-1-24) इति सूत्रेण गर्हितं जपतीत्यर्थे यङ् । द्विर्वचनम्, अभ्यासस्य, 'जपजभदहदशभञ्जपशां च, (7-4-86) इत्यनेन नुगागमे, तस्य 'पदान्तवद्वाच्यः, (वा. 7-4-85) इति पदान्तवद्भावेन 'वा पदान्तस्य' (8-4-59) इति पाक्षिके परसवर्णे रूपद्वयम् । एवं यङन्ते सर्वत्र रूपद्वयं ज्ञेयम् ।
2. 'प्रतिषेधे हसादीनामुपसंख्यानम्' (वा. 1-3-15) इति वचनात् कर्मव्यतीहारेऽपि न शानच् ।
3. 'सेटोऽप्यस्य धातोः क्वचिदिडभावेनापि प्रयोगो दृश्यते । तस्य साधुत्वकल्पनाय 'आदितश्च' (7-2-16) इति सूत्रे, काशिकायां 'चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः । वान्तः ।' इत्युदाहरणं दत्तम् ।' तदिहानुसन्धेयम् । 'वमजप्व्याश्वसो निष्ठाया इड् वा' इति केचित् । जपितः जप्तः, इति प्रक्रियाकौमुदी ।
4. 'स्तम्बकर्णयो रमिजपोः' (3-2-13) इति सुबन्ते उपपदे अच्प्रत्ययः । 'तत्पुरुषे कृति बहुलम्' (6-3-14) इति सप्तम्या अलुक् । 'हस्तिसूचकयोरिति वक्तव्यम्' (वा. 3-2-13) इति वचनात् कर्णेजपः इति सूचके एव साधुः ।
5. 'यजजपदशां यङः' (3-2-166) इति तच्छीलादिषु कर्तृषु यङन्तादूकप्रत्यये, 'यस्य हलः' (6-4-49) इति यकारलोपे, अभ्यासस्य नुगागमे च रूपम् ।

A. 'आ तिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।' भ. का. 4.14.
B. 'कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना ।' भ. का. 3.7.
C. 'जन्मधामनि निजे नियमस्थं जञ्जपूकमभिसृत्य जघान ॥' यादवाभ्युदये 21.40.



जपितव्यम्, जापयितव्यम्, जिजपिषितव्यम्, जञ्जपितव्यम्-जन्जपितव्यम् ;

जपनीयम्, जापनीयम्, जिजपिषणीयम्, जञ्जपनीयम्-जन्जपनीयम् ;

[1]जप्यम्,[A] जाप्यम्, जिजपिष्यम्, जञ्जप्यम्-जन्जप्यम् ;

ईषज्जपः-दुर्जपः-सुजपः ; — — —

जप्यमानः, जाप्यमानः, जिजपिष्यमाणः, जञ्जप्यमानः-जन्जप्यमानः ;

[2]जपः,[B] उपजापः, जापः, जिजपिषुः, जञ्जपः-जन्जपः ;

जपितुम्, जापयितुम्, जिजपिषितुम्, जञ्जपितुम्-जन्जपितुम् ;

जप्तिः, जापना, जिजपिषा, जञ्जपा-जन्जपा ;

जपनम्, जापनम्, जिजपिषणम्, जञ्जपनम्-जन्जपनम् ;

जपित्वा, जापयित्वा, जिजपिषित्वा, जञ्जपित्वा-जन्जपित्वा ;

सञ्जप्य, प्रजाप्य, प्रजिजपिष्य, प्रजञ्जप्य-प्रजन्जप्य ;

| | | | |
|---|---|---|---|
| जापम् २, | जापम् २, | जिजपिषम् २, | जञ्जपम् २-जन्जपम् २ ; |
| जपित्वा २, | जापयित्वा, | जिजपिषित्वा २, | जञ्जपित्वा २-जन्जपित्वा २. |

## (585) "जभि नाशने" (X-चुरादि:- 1717. सक. सेट्. उभ.)

[अ] 'जृम्भणे जम्भते, यामे जम्भेत, नाशे तु जम्भयेत् ॥'

(श्लो. 145) इति देवः ।

जम्भकः-म्भिका, जिजम्भयिषकः-षिका, जम्भकः-म्भिका, जिजम्भिषकः-षिका, जाजम्भकः-म्भिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचम्पयतिवत् (199) ज्ञेयानि । इदित्करणात् णिचो वैकल्पिकत्वम् । जिजम्भिषुः[C] णिजभावपक्षे केवलाद्धातोः सन्नन्तादुकारः प्रत्ययः ।

---

1. 'पोरदुपधात्' (3-1-98) इति यत् । ण्यदपवादः ।
2. 'व्यधजपोरनुपसर्गे' (3-3-61) इति भावे, अप्प्रत्ययः । उपसृष्टात्तु घञेव । उपजापः ।

A. 'मत्वा सहिष्णूनपरोपजप्यान् स्वकानधिष्ठाय जलान्तदुर्गान् ।' भ. का. 12.32.
B. 'गोपायतां धर्ममधूपितात्मनां जल्पान् विमुच्याभवदुद्यमो जपे ॥' धा. का. 1.51.
C. 'मल्लो जिजम्भिषुरसूदितवीर्यमीशं
मुष्ट्या जजास बहु पाशितवांश्च दोष्णा ॥' धा. का. 3.38.

[अ] दैवश्लोकस्य प्रवृत्तिस्तु—'जभ मैथुने' इति पाठमवलम्ब्य । 'रभिश्च भान्तेष्वथ मैथुने यभिः' (काशिका 7-2-10) इति वृत्तिग्रन्थपरामर्शे तु स पाठः न प्रामाणिक इति गम्यते ।

## (586) "जभी गात्रविनामे" (I-भ्वादिः-388. अक. सेट्. आत्म.)

'जृम्भणे जम्भते, यामे जम्भेत्, नाशे तु जम्भयेत्॥'

(श्लो. 145) इति **देवः** ।

[1]जम्भकः-म्भिका, जम्भकः-म्भिका, जिजम्भिषकः-षिका, [2]जञ्जभकः-जन्जभकः-भिका ;

जम्भिता-त्री, जम्भयिता-त्री, जिजम्भिषिता-त्री, जञ्जभिता-त्री ;

— जम्भयन्-न्ती, जम्भयिष्यन्-न्ती-ती ; —

जम्भमानः, जम्भयमानः, जिजम्भिषमाणः, जञ्जभ्यमानः ;

जम्भिष्यमाणः, जम्भयिष्यमाणः, जिजम्भिषिष्यमाणः, जञ्जभिष्यमाणः ;

[3]झप्-झब्-जभौ-जभः ; — —

[4]जब्धम्-जब्धः-जब्धवान्, जभितः, जिजम्भिषितः, जञ्जभितः-तवान् ;

जम्भः, [5]साधुजम्भी, जम्भः, जिजम्भिषुः, जञ्जभः ;

जम्भितव्यम्, जम्भयितव्यम्, जिजम्भिषितव्यम्, जञ्जभितव्यम् ;

जम्भनीयम्, जम्भनीयम्, जिजम्भिषणीयम्, जञ्जभनीयम् ;

[6]जभ्यम्, जम्भ्यम्, जिजम्भिष्यम्, जञ्जभ्यम् ;

जभ्यमानः, जम्भ्यमानः, जिजम्भिष्यमाणः, जञ्जभ्यमानः ;

जम्भः, जम्भः, जिजम्भिषः, जञ्जभः ;

जम्भितुम्, जम्भयितुम्, जिजम्भिषितुम्, जञ्जभितुम् ;

1. '**रधिजभोरचि**' (7-1-61) इति अजादिप्रत्ययेषु परेषु नुमागमः ।
2. 'लुपसदचरजप**जभ**दहदशगॄभ्यो भावगर्हायाम्' (3-1-24) इति भावगर्हायां यङ् । 'जप**जभ**दहदशभञ्जपशां च' (7-4-86) इत्यभ्यासस्य नुगागमः। 'स च पदान्तवद्वाच्यः' (वा. 7-4-85) इति वचनात् पक्षे, 'वा पदान्तस्य' (8-4-59) इति परसवर्णः । यद्यपि यङोऽकारलोपस्य स्थानिवद्भावेनाजादिप्रत्ययपरकत्वात् सर्वत्राजादिप्रत्ययेषु परेषु नुमागमो भवति । तथापि 'अनिदिताम्—' (6-4-24) इति नकारस्य लोपो भवति ।
3. क्विपि, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति भष्भावे चर्त्वविकल्पः ।
4. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधः। 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वम् ।
5. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः ।
6. 'पोरदुपधात्' (3-1-98) इति यत्प्रत्ययः ।



जब्धिः, जम्भना, जिजम्भिषा, जञ्जभा ;

[A]जम्भनम्, जम्भनम्, जिजम्भिषणम्, जञ्जभनम् ;

जम्भित्वा, जम्भयित्वा, जिजम्भिषित्वा, जञ्जभित्वा ;

प्रजभ्य, प्रजम्भ्य, प्रजिजम्भिष्य, प्रजञ्जभ्य ;

जम्भम् २, जम्भित्वा २, } जम्भम् २, जम्भयित्वा २; } जिजम्भिषम् २, जिजम्भिषित्वा २, } जञ्जभम् २ ; जञ्जभित्वा २. }

## (587) "जमु अदने" (I-भ्वादिः-471. सक. सेट्. पर. **मित्संज्ञकः**)

जामकः-मिका, जमकः-मिका, जिजमिषकः-षिका, जञ्जमकः-मिका ; जमिता-त्री, जमयिता-त्री, जिजमिषिता-त्री, जञ्जमिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकछमुधातुवत् (564) बोध्यानि । जान्त्वा[B] ।

## (588) "जर्ज परिभाषणहिंसातर्जनेषु"

(I-भ्वादिः-716. सक. सेट्. पर.)

जर्जकः-र्जिका, जर्जकः-र्जिका, जिजर्जिषकः-षिका, जाजर्जकः-र्जिका ; जर्जिता-त्री, जर्जयिता-त्री, जिजर्जिषिता-त्री, जाजर्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **चर्च**धातुवत् (505) ज्ञेयानि ।

## (589) "जर्ज परिभाषणतर्जनयोः"

(VI-तुदादिः-1298. सक. सेट्. पर.)

'परिभाषणसन्तर्जनयोः' इति **मा. धा. वृत्तिपाठः** ।

जर्जकः-र्जिकाः, जर्जकः-र्जिका, जिजर्जिषकः-षिका, जाजर्जकः-र्जिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चर्च**धातुवत् (505) ज्ञेयानि । शत्रन्तात् स्त्रियां ङीपि तु 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पो भवति । यथा जर्जती[C]-जर्जन्ती इति ॥

A. 'अस्कम्भिताः प्राप्य शिशून् **सजम्भना**नुज्जृम्भहर्षा लिलिहुः सशल्भनम् ॥' धा. का. 1.50.

B. 'चान्तामिषश्छान्तजलः फलावली **जान्त्वा** झमज्जेमनमक्रमीद् गुहाम् ॥' धा. का. 1.60.

C. 'वृक्णव्याचरसोञ्छती फलगणानव्युञ्छितायां निशि स्नान्ती नर्च्छति मिच्छिता सुजनता यस्मिन् हितं **जर्जती** ।' धा. का. 2.73.

**(590) "जल घातने"** (I-भ्वादि:-833. अक. सेट्. पर.) ज्वलादि: ।(अ)

**घातनं=तैक्ष्ण्यम् इति सि. कौमुदी ।**

जालक:-लिका, जालक:-लिका, जिजलिषक:-षिका, जाजलक:-लिका ;
जलिता-त्री, जालयिता-त्री, जिजलिषिता-त्री, जाजलिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि **चल**धातुवत् (510) बोध्यानि । मित्संज्ञा तु नास्य धातो: भवति । अत:, जालयिता इत्यादौ उपधाह्रस्वो न । ज्वलादिपाठात् 'ज्वलितिकसन्तेभ्यो ण: ' (3-1-40) इति णप्रत्यय: विकल्पेन भवति । जल:-प्रजल: जाल:=आनाय: इति । लडयोरभेदात् [A]जड: इति **माधवीयधातुवृत्तौ** ।

**(591) " जल अपवारणे "** (X-चुरादि:-1543. सक. सेट्. उभ.)

**'लज' इत्येके इति सि. कौमुदी ।**

जालक:-लिका, जिजालयिषक:-षिका ; जालयिता-त्री, जिजालयिषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिकचट**धातुवत् (488) ज्ञेयानि । कर्मणि क्तप्रत्यये जालित:[B] इति रूपम् ।

**(592) " जल्प व्यक्तायां वाचि "** (I-भ्वादि:-398. सक. सेट्. पर.)

जल्पक:-ल्पिका, जल्पक:-ल्पिका, जिजल्पिषक:-षिका, जाजल्पक:-ल्पिका ;
जल्पिता-त्री, जल्पयिता-त्री, जिजल्पिषिता-त्री, जाजल्पिता-त्री ;
जल्पन्-[1]व्यतिजल्पन्-न्ती, जल्पयन्-न्ती, जिजल्पिषन्-न्ती ; —
जल्पिष्यन्-व्यतिजल्पिष्यन्-न्ती-ती, जल्पयिष्यन्-न्ती-ती, जिजल्पिषिष्यन्-न्ती-ती ; —

1. 'प्रतिषेधे हसादीनामुपसंख्यानम्' (वा. 1-3-15) इति कर्मव्यतीहारेऽपि आत्मनेपदं न । तेन शतैव ।

[अ] 'जल घान्ये' इति **क्षीरतरङ्गिण्यां धातुकाव्ये** च पाठ: । घान्यं=अतैक्ष्ण्यमित्यर्थ: ।

A. 'ज्वालेन तापेन चला **जडाङ्गी**रटालशोकद्वलितप्रतापा: ॥' धा. का. 2.21.

B. 'ओलण्डिताद्रिरपि **जालित**दिव्यधामा
निष्पीडितारिरनुनाटितमर्त्यभाव: ।' धा. का 3.14.



— जल्पयमान:, जल्पयिष्यमाण:, — जाजल्पयमान:, जाजल्पिष्यमाण: ;
[1]प्रजल्-प्रजल्पौ-प्रजल्प: ; — — —
जल्पितम्-त:, जल्पित:, जिजल्पिषित: जाजल्पित:-तवान् ;
जल्प:, [2]जल्पाक:-[A]जल्पाकी, जल्प:, जिजल्पिषु:, जाजल्प: ;
जल्पितव्यम्, जल्पयितव्यम्, जिजल्पिषितव्यम्, जाजल्पितव्यम् ;
जल्पनीयम्, जल्पनीयम्, जिजल्पिषणीयम्, जाजल्पनीयम् ;
जल्प्यम्, जल्प्यम्, जिजल्पिष्यम्, जाजल्प्यम् ;
ईषज्जल्प:-दुर्जल्प:-सुजल्प: ; — —
जल्प्यमान:, जल्प्यमान:, जिजल्पिष्यमाण:, जाजल्प्यमान: ;
[B]जल्प:, जल्प:, जिजल्पिष:, जाजल्प: ;
जल्पितुम्, जल्पयितुम्, जिजल्पिषितुम्, जाजल्पितुम् ;
[3]जल्पा, जल्पना, जिजल्पिषा, जाजल्पा ;
जल्पनम्, जल्पनम्, जिजल्पिषणम्, जाजल्पनम् ;
जल्पित्वा, जल्पयित्वा, जिजल्पिषित्वा, जाजल्पित्वा ;
प्रजल्प्य, प्रजल्प्य, प्रजिजल्पिष्य, प्रजाजल्प्य ;
जल्पम् २, जल्पित्वा २, } जल्पम् २, जल्पयित्वा २, } जिजल्पिषम् २, जिजल्पिषित्वा २, } जाजल्पम् २ ; जाजल्पित्वा २. }

**(593) " जष हिंसार्थ: "** (I-भ्वादि:-688. सक. सेट्. पर.)

जाषक:-षिका, जाषक:-षिका, जिजषिषक:-षिका, जाजषक:-षिका ;
जषिता-त्री, जाषयिता-त्री, जिजषिषिता-त्री, जाजषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि **खष**धातुवत् (346) बोध्यानि । जषन्[C] ।

1. 'संयोगान्तस्य—' (8-2-23) इति पकारस्य लोप: ।

2. '**जल्प**भिक्षकुट्टलुण्ठवृङ: षाकन्' (3-2-155) इति तच्छीलादिषु कर्तृषु षाकन् प्रत्यय: । षाकन: षित्वात् स्त्रियां 'षिद्गौरादिभ्यश्च' (4-1-41) इति ङीष् ।

3. 'गुरोश्च हल: ' (3-3-103) इति स्त्रियां भावादावङ् ।

A. 'प्रचलदखिलक्ष्माभृन्मूलोपलव्यतिघट्टनो-
ल्बणमणिशिखा**जल्पाकीभि:** फणाभिरहीश्वर: ॥' **अनर्घराघवे**-6.81.

B. 'गोपायतां धर्ममधूपितात्मनां **जल्पान्** विमुच्याभवदुद्यमो जये ॥' धा. का. 1.51.

C. 'इत्युक्त: सुरकाषिखाषिणमसावूचे जगच्छेषकान्
नित्यं ते **जषते** झषादिवपुषे रक्षश्चमूशाषिणे । धा. का. 1.87.

**(594) "जसि रक्षणे"** (X-चुरादि:-1667. सक. सेट्. उभ.)

**मोक्षणे** इति देवः । इदित्करणात् णिचो वैकल्पिकत्वम् ।

'मोक्षणे जस्यतीति स्याण्णावत्रार्थे तु जंसयेत् ।' (श्लो. 188) इति **देवः** ।

[A]जंसकः-सिका, जिजंसयिषकः-षिका, जंसकः-सिका, जिजंसिषकः-षिका, जाजंसकः-सिका ; जंसयिता-त्री, जिजंसयिषिता-त्री, जंसिता-त्री, जिजंसिषिता-त्री, जाजंसिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **चपिधातुवत्** (499) ज्ञेयानि ।

**(595) "जसु मोक्षणे"** (IV-दिवादि:-1211. सक. सेट्. पर.)

'मोक्षणे जस्यतीति स्यात् णावत्रार्थे तु जंसयेत् ॥

हिंसाताडनयोर्धात्वोः उदितोर्जासयेदिति ।' (श्लो. 188-9) इति **देवः** ।

जासकः-सिका, जासकः-सिका, जिजसिषकः-षिका, जाजसकः-सिका ;

जसिता-त्री, जासयिता-त्री, जिजसिषिता-त्री, जाजसिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि **भौवादिकग्रसुधातुवत्** (440) ज्ञेयानि । नञ्-पूर्वादस्माज्जसेः '**नमिकम्पिस्म्यजस**—' (3-2-167) इति रप्रत्यये—[B]अजस्रम् इति भवति । अयं स्वभावात् क्रियासातत्ये वर्तते । अस्य धातोः परस्मैपदित्वात् दिवादित्वाच्च जस्यन्-न्ती, जसिष्यन्-न्ती-ती इति शतरि रूपाणीति विशेषः ।

**(596) "जसु हिंसायाम्"** (X-चुरादि:-1669. सक. सेट्. उभ.)

**उदित्करणा**ण्णिचो वैकल्पिकत्वम् ।

'मोक्षणे जस्यतीति स्यात् णावत्रार्थे तु जंसयेत् ॥

हिंसाताडनयोर्धात्वोः उदितोर्जासयेदिति ।' (श्लो. 188-9) इति **देवः** ।

जासकः-सिका, जिजासयिषकः-षिका, जासकः-सिका, जिजसिषकः-षिका, जाजसकः-सिका ;

जासयिता-त्री, जिजासयिषिता-त्री, जसिता-त्री, जिजसिषिता-त्री, जाजसिता-त्री;

जासयन्-न्ती, जिजासयिषन्-न्ती, जसन्-न्ती, जिजसिषन्-न्ती ; —

---

A. 'मञ्चाग्रपूर्वितनूपे शिशुना रणं वः स्यादेव मानव**रिजंसक**मीड्यधाम्नाम् ॥' धा. का. 3.31.

B. '**अजस्र**मास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।' शि. पा. 1.9.



जासयिष्यन्-न्ती-ती, जिजासयिषिष्यन्-न्ती-ती जसिष्यन्-न्ती-ती, जिजसिषिष्यन्-न्ती-ती ; —

जासयमानः, जिजासयिषमाणः, — जाजस्यमानः ;

जासयिष्यमाणः, जिजासयिषिष्यमाणः, — जाजसिष्यमाणः ;

[1]उज्जाः-उज्जासौ-उज्जासः ; — —

जासितः, जिजासयिषितः, [2]जस्तं-तः, जिजसिषितः, जाजसितः-तवान् ;

जासः [A]असुरजासी, जिजासयिषुः, जसः, जिजसिषुः, जाजसः ;

जासयितव्यम् , जिजासयिषितव्यम् , जसितव्यम् , जिजसिषितव्यम् , जाजसितव्यम् ;

जासनीयम् , जिजासयिषणीयम् , जसनीयम् , जिजसिषणीयम् जाजसनीयम् ;

जास्यम्, जिजासयिष्यम् , जास्यम् , जिजसिष्यम्, जाजस्यम् ;

ईषज्जासः-दुर्जासः-सुजासः ; — —

जास्यमानः, जिजासयिष्यमाणः, जस्यमानः, जिजसिष्यमाणः जाजस्यमानः ;

जासः, जिजासयिषः, जासः, जिजसिषः, जाजसः ;

जासयितुम् , जिजासयिषितुम् , जसितुम् , जिजसिषितुम्, जाजसितुम् ;

जासना, जिजासयिषा, जस्तिः, जिजसिषा, जाजसा ;

जासनम् , [[3]चौरस्य]उज्जासनम् , जिजासयिषणम् , जसनम् , जिजसिषणम् , जाजसनम् ;

जासयित्वा, जिजासयिषित्वा, [4]जसित्वा-जस्त्वा, जिजसिषित्वा, जाजसित्वा ;

प्रजास्य, प्रजिजासयिष्य, प्रजस्य, प्रजिजसिष्य, प्रजाजस्य ;

---

1. णिजन्तात् क्विपि उपधावृद्धौ क्विब्लोपे णेर्लोपे च 'ससजुषो रुः' (8-2-66) इति रुत्वे विसर्गे च रूपम् ।

2. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।

3. कर्मणः शेषत्वविवक्षायाम् '**जासि**निप्रहण—' (2-3-56) इति षष्ठी भवति । तस्य च 'प्रतिपदविधाना षष्ठी न समस्यते' इति वचनात् समासाभावः फलम् ।

4. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । तेन रूपद्वयम् ।

A. 'इत्थं वदत्य**सुरजासिनि** पिण्डितायस्स्थेमाऽथ रोषितमतिः प्रतिमल्लडेपी ।' धा. का, 3.32.

जासम् २, जासयित्वा २, } जिजासयिषम् २, जिजासयिषित्वा २, } जासम् २, जासित्वा २, } जिजसिषम् २, जिजसिषित्वा २, } जाजसम् २ ; जाजसित्वा. }

(597) **"जसु ताडने"** (X-चुरादिः-1719. सक. सेट्. उभ.)

'हिंस ताडनयोर्धात्वोः उदितोर्जासयेदिति ।' (श्लो. 189.) इति **देवः** ।

जासकः-सिका, जिजासयिषकः-षिका, जासकः-सिका,

जिजसिषकः-षिका, जाजसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि अव्यवहितपूर्वलिखितहिंसार्थकजसुधातुवत् (596) बोध्यानि ।

(598) **"जागृ निद्राक्षये"** (II-अदादिः-1072. अक. सेट्. पर.)

जक्षित्यादिः ।

धातोरस्यानेकाच्त्वात् 'धातोरेकाच–' (3-1-22) इति विहितो यङ् न भवति ।

[1]जागरकः-रिका, [2]जागरकः-रिकाः, [3]जिजागरिषकः-षिका; —

[4]जागरिता-त्री, जागरयिता-त्री, जिजागरिषिता-त्री ;

[5]जाग्रत्[A]-ती, [6]जागरयन्-न्ती, जिजागरिषन्-न्ती ;

---

1. '**जाग्रो**ऽविचिण्णल्ङित्सु' (7-3-85) इति वृद्ध्यपवादो गुणः । एवं घञन्ते णमुलन्ते च गुण एव ।
2. वृद्ध्यपवादे '**जाग्रो**ऽवि—' (7-3-85) इति गुणे कृते, 'अत उपधायाः' (7-2-116) इति वृद्धिरपि न भवति ; गुणविधानसामर्थ्यात् । अत एव चिण्णल्प्रतिषेधः सार्थकः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. 'इको झल्' (1-2-9) इति सनः कित्त्वेऽपि, '**जाग्रो**ऽविचिण्—' (7-3-85) इति प्रतिषेधविषयत्वाद् गुणो भवति । एवं सन्नन्ते सर्वत्र बोध्यम् ।
4. अस्य धातोरुदात्तत्वात् 'आर्धधातुकस्येड् वलादेः' (7-2-35) इतीडागमः । एवं तव्यदादिष्वपि ज्ञेयम् ।
5. शतरि, '**अदिप्रभृतिभ्यः** शपः' (2-4-72) इति शपो विकरणप्रत्ययस्य लुका अपहारे, शतुः ङित्त्वेन गुणाभावे, 'इको यणचि' (6-1-77) इति यणि, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुमभावे च रूपम् । '**जक्षित्यादयः** षट्' (6-1-6) इत्यभ्यस्तसंज्ञा भवति ।
6. ण्यन्तात्, 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति नित्यं परस्मैपदमेव तेन शानज् न ।

A. 'तं **जाग्रतं** दीनदरिद्रपोषे चकासतं शासतमप्रशान्तान् ।' धा. का. 25.2.



जागरिष्यन्-न्ती-ती, जागरयिष्यन्-न्ती-ती, जिजागरिषिष्यन्-न्ती-ती;

[1]जागः-जागरौ-जागरः, जागृत्-जागृतौ-जागृतः ;

जागरितम्-तः, जागरितः, जिजागरिषितः-तवान् ;

जागरः, [2]साधुजागरी, [3]जागरूकः[A], [4]जजागर्वान्-जजागृवान्, [5]जजाग्राणः, जजागरणः, जिजागरिषुः ;

जागरितव्यम्, जागरयितव्यम्, जिजागरिषितव्यम् ;

जागरणीयम्, जागरणीयम्, जिजागरिषणीयम् ;

[6]जागर्यम्, जागर्यम्, जिजागरिष्यम् ;

ईषज्जागरः-दुर्जागरः-सुजागरः ; —

[7]जागर्यमाणः, जागर्यमाणः, जिजागरिष्यमाणः ;

---

1. क्विपि, '**जाग्रो**ऽविचिण्णल्ङित्सु' (7-3-85) इत्यत्र '**वि**' शब्देन, औणादिकक्विन्प्रत्ययस्यैव ग्रहणमिति पक्षेऽत्र गुणो भवत्येव । तदानीं गुणे, विसर्गे च '**जागः**' इति रूपम् । '**वि**' शब्दघटकेकारस्योच्चारणार्थत्वेन वकारादिप्रत्यये गुणनिषेधो यदीष्यते—तदानीं प्रकृते गुणाभावे, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुगागमे **जागृत्** इति रूपम् । न च 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' (परिभाषा-21) इति प्रत्ययलक्षणनिषेधः शङ्क्यः ; तस्य वर्णप्राधान्यविषयत्वात्, अत्र च '**अतृणेद्**' इत्यत्रेव प्रत्ययप्राधान्यात् ।
   'एवं क्विप्यपि वादित्वात् अगुणे ह्रस्वतस्तुकि ।
   **जागृत्** स्यात् ; गुणपक्षे तु रेफान्तं **जागरि**त्यपि ॥' इति **प्र. स.**
2. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः, गुणः ।
3. '**जागुरूकः**' (3-2-165) इति तच्छीलादिषु कर्तृषु ऊकप्रत्ययः ।
4. छान्दसोऽपि क्वसुः क्वचिद्भाषायामिति पक्षे, अस्माद्धातोः लिडादेशे क्वसुप्रत्यये द्वित्वे, 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधे, '**जाग्रो**ऽवि—' (7-3-85 इत्यत्र क्विन एव ग्रहणमित्यभ्युपगमे **जजागर्वान्** इति रूपम् । वकारादिप्रत्यये गुणनिषेधपक्षे **जजागृवान्** इति रूपम् ।
5. 'लिटः कानज् वा' (3-2-106) इति कानच् । प्रयोगाल्लोकेऽपीति **प्र. कौमुदी** '**जाग्रः** कानचि गुणो वा' इति केचित् ।' इति च । तेन रूपद्वयम् ।
6. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यति गुणे रूपम् ।
7. '**जाग्रो**ऽवि—' (7-3-85) इति विहितो गुणः 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति प्राप्तं रिङादेशं पूर्वविप्रतिषेधाद् बाधते ।

A. 'पथिकोऽपररात्र**जागरूकः** प्रबभाषे गिरमीदृशीं प्रसङ्गात् ॥' **चम्पूभारते** 2.56.

जागरः, जागरः, जिजागरिषः ;
जागरितुम्, जागरयितुम्, जिजागरिषितुम् ;
जागरणम्, जागरणम्, जिजागरिषणम् ;
[1]जागर्या-जागरा, जागरणा, जिजागरिषा ;
जागरित्वा, जागरयित्वा, जिजागरिषित्वा ;
सञ्जागर्य, [2]सञ्जागरय्य, सञ्जिजागरिष्य ;
जागरम् २, जागरित्वा २, } जागरम् २, जागरयित्वा २, } जिजागरिषम् २ ; जिजागरिषित्वा २ ; }
[3]जागृविः.

(599) **" जि जये "** (I-भ्वादिः-561. अक. अनि. पर.)

**जयः** = उत्कर्षप्राप्तिः, अभिभवश्च । आद्ये अकर्मकः, द्वितीये सकर्मकः ।
' जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ॥
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः ।' (श्लो. 13-14) इति **देवः**

[4]जायकः-यिका, [5]जापकः-पिका, [6]जिगीषकः, [7]जेजीयकः-यिका ;

1. '**जागर्तेर**कारो वा' (वा. 3-3-100) इति स्त्रियां भावादौ क्तिन्नपवादः शप्रत्ययः । शस्य सार्वधातुकत्वात् 'सार्वधातुके यक्' (3-1-67) इति यकि, पूर्वविप्रतिषेधेन रिङादेशं बाधित्वा गुणे अदन्तत्वेन टापि रूपम् । पक्षे, अकार-प्रत्यये टापि **जागरा** इति रूपम् । 'स्त्रियां क्तिन्' (3-3-94) इति क्तिन् तु 'अनेकाज्भ्यो धातुभ्यो न' इति 'आद्यन्तवदेकस्मिन्' (1-1-21) इत्यत्र **कैयटे** स्पष्टम् ।
2. ण्यन्ताल्ल्यपि गुणे 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
3. 'जॄशॄस्तॄ**जागृभ्यः** क्विन्' [द. उ. 1-24] इति क्विन्प्रत्ययः । **जागर्तीति जागृविः**=अग्निः, राजा च । अत्र क्विनि इकारः प्रयोगघटकः । न तु उच्चारणार्थः ।
4. 'अचो ञ्णिति' (7-2-115) इति वृद्धौ, आयादेशे च रूपम् । एवं णमुल्यपि ।
5. ण्यन्ते 'क्रीङ्जीनां णौ' (6-1-48) इत्यात्वे, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्य**ातां** पुग् णौ' (7-3-36) इति पुगागमे रूपम् । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
6. 'सन्लिटोर्जेः' (7-3-57) इत्यभ्यासादुत्तरस्य कुत्वेन गकारः । 'इको झल्' (1-2-9) इति सनः कित्त्वनिषेधाद् गुणो न । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
7. यङि, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।



जेता[A]-त्री, जापयिता-त्री, जिगीषिता-त्री, जेजीयिता-त्री ;
[B]जयन्-न्ती, जापयन्-न्ती, जिगीषन्-न्ती ; —
जेष्यन्-न्ती-ती, जापयिष्यन्-न्ती-ती, जिगीषिष्यन्-न्ती-ती ; —
[1]विजयमानः-[C]पराजयमानः, [2]जापयमानः, विजिगीषमाणः[3], पराजिगीषमाणः, जेजीयमानः ;
विजेष्यमाणः-पराजेष्यमाणः, जापयिष्यमाणः, वि[परा]जिगीषिष्यमाणः, जेजीयिष्यमाणः ;
[4]इन्द्रजित्[D], प्रजित्, अभिजित्, शत्रुजित्-जिद्-जितौ-जितः ;
जितम्-तः-जितवान्[E], जापितः, जिगीषितः, जेजीयितः-तवान् ;
जयः, [5]जित्वरः,[F] [6]जित्वा-जित्वानौ-जित्वानः, कंसजित्वा, जित्वरी,

1. 'विपराभ्यां **जेः**' (1-3-19) इति शानच् ।
2. धातोरकर्मकत्वे 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् **परस्मै**-पदमेव । सकर्मकत्वे तु ण्यन्ताच्छानजपि भवतीति ज्ञेयम् ।
3. 'पूर्ववत् सनः' (1-3-62) इति विपरापूर्वकत्वे सन्नन्तात् शानच् ।
4. 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिद**जि**नीराजामुपसर्गेऽपि क्विप्' (3-2-61) इति उपसर्गे, अनुपसर्गे वा उपपदे क्विप् ।
5. 'इण्नश**जि**सर्तिभ्यः क्वरप्' (3-2-163) इति तच्छीलादिषु कर्तृषु क्वरप् । 'ह्रस्वस्य पिति—' (6-1-71) इति तुक् ।
6. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति क्वनिपि तुक् । कंसं जयति, जितवान् वा **कंसजित्वा** । स्त्रियां 'वनो र च' (4-1-7) इति ङीप् रेफश्च ।

A. '**जेता** यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ।' भ. का. 4-27.
B. 'सञ्चारनिष्ठ्यूतनखेन्दुचन्द्रिकं लोके **जयन्तं** सकलैकजीवनम् ।' धा. का 1. 72.
C. 'खं **पराजयमानो**ऽसावुन्नत्या पवनात्मजम् ।' भ. का. 8. 9.
D. '**इन्द्रजित्**सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥' भ. का. 9-3.
E. 'यातयामं **विजितवान्** स रामं यदि किं ततः ॥' भ. का. 5-39.
F. 'हस्तेकरिष्यति जगत्त्रय**जित्वरो**ऽपि कस्तादृशीं दुहितरं जनकेश्वरस्य ।' **अनर्घराघवे** 3.8.

[1]जिष्णुः,[A] [2]धनञ्जयः, समितिञ्जयः, [3]जयी, [B]जयिनी, [4]जयकः;
[5]जयमानः, जापः, जिगीषुः, विजिगीषुः,[C] जेज्यः ;
जेतव्यम्, जापयितव्यम्, जिगीषितव्यम्, जेजीयितव्यम् ;
जयनीयम्, जापनीयम्, जिगीषणीयम्, जेजीयनीयम् ;
[6]जय्यम्-जेयम्[D], जित्यः [7][हलिः], जाप्यम्, जिगीष्यम्, जेजीय्यम् ;
[E]ईषज्जयः-दुर्जयः-सुजयः ; — — —

---

1. 'ग्लाजिस्थश्च ग्स्नुः' (3-2-139) इति तच्छीलादिषु कर्तृषु ग्स्नुः प्रत्ययः। 'ग्क्ङिति च' (1-1-5) इत्यत्र गकारस्यापि प्रश्लेषात् गुणो न भवति। 'आदेशप्रत्यययोः' (8-3-59) इति षत्वम्।
2. 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (3-2-46) इति संज्ञायां खच्-प्रत्यये, 'खित्यनव्ययस्य' (6-3-66) इति पूर्वपदस्य मुमागमः।
'विश्वंभरा, साम रथन्तराख्यं, पतिंवरा चापि, **धनञ्जयश्च**।
शत्रुंसहः कोऽपि, वसुन्धरा च, शत्रुन्तपोऽरिन्दम एवमूह्यम्॥' इति **प्रक्रियासर्वस्वे**, 'संज्ञायां भृ—' (3-2-46) इति सूत्रस्य क्रमेणोदाहरणानि प्रदर्शितानि।
3. '**जि**दृक्षिविश्रीण्—' (3-2-157) इति तच्छीलादिषु कर्तृषु इनिप्रत्ययः।
4. 'आशिषि च' (3-1-150) इति वुन्। जयतात् **जयकः**।
5. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति शक्तौ गम्यमानायां चानश्। मध्ये विकरणप्रत्ययः शप्।
'सहैव चरमाणौ द्वौ वहमानौ मितं धनुः।
**जयमानौ** च रक्षांसि राघवौ मुनिमन्वितौ॥' इति **प्र. सर्वस्वे**।
6. 'अचो यत्' (3-1-97) इति यति गुणे, 'क्षय्य**जय्यौ** शक्यार्थे' (6-1-81) इति अयादेशो निपातितः। जेतुं शक्यम्= **जय्यम्**। अन्यत्र **जेयम्**।
7. 'विपूयविनीय**जित्या** मुञ्जकल्कहलिषु' (3-1-117) इति सूत्रेण हलौ=कृष्टसमीकरणार्थे स्थूलकाष्ठे वाच्ये क्यप् भवति। **जित्यो** हलिः=बलेन कष्टव्य इत्यर्थः।
A. 'वसन् माल्यवति ग्लास्नू रामो **जिष्णु**रधृष्णुवत्॥' भ. का. 7. 4.
B. 'वीतप्रभावतनुरप्यतनुप्रभावः प्रत्याचकाङ्क्ष **जयिनीं** भुजवीर्यलक्ष्मीम्।
अस्त्रेषु भूतपतिनापहृतेषु **जिष्णु**र्वर्षिष्यता दिनकृतेव जलेषु लोकः॥'
**किरातार्जुनीये** 16.64.
C. '**विजिगीषुः** पुनश्चक्रे व्यूहं **दुर्जयमिन्द्रजित्**॥' भ. का. 9. 70.
D. 'आत्मानं वनवासं च **जेयं** चारिं रघूत्तमः॥' भ. का. 6. 47.
E. 'यस्ताटकामकृत बाल [काल] सखैः पृषत्कैः
**ईषज्जयः** स्फुटमनेन दशाननोऽपि॥' **अनर्घराघवे** 3. 33.



जीयमानः, जाप्यमानः, जिगीष्यमाणः, जेजीय्यमानः ;
[1]जयः, जापः, जिगीषः, जेजीयः ;
जेतुम्, जापयितुम्, जिगीषितुम्, जेजीयितुम् ;
जितिः, जापना, विजिगीषा, जेजीया ;
जयनम्, [2]उज्जयिनी, जायनम्, जिगीषणम्, जेजीयनम् ;
जित्वा, जापयित्वा, जिगीषित्वा, जेजीयित्वा ;
[3]विजित्य, विजाप्य, विजिगीष्य, विजेजीय्य ;
जायम् २, जित्वा २, } जापम् २, जापयित्वा २, } जिगीषम् २, जिगीषित्वा २, } जेजीयम् २ ; जेजीयित्वा २ ; }
[4]जैत्रम्, [5]जायुः.

## (600) "जि अभिभवे" (I-भ्वादिः-946. सक. अक. अनि. पर.)

**अभिभवो** न्यूनीकरणं न्यूनीभवनं च।

आद्ये सकर्मकः। शत्रून् जयति। द्वितीये त्वकर्मकः। अध्ययनात् पराजयते। अध्येतुं ग्लायतीत्यर्थः। इति **सिद्धान्तकौमुदी**। शत्रून् जयन्-जेता वा। अध्ययनात् पराजेता। ग्लायन् इत्यर्थः।

'[जयिः] जयेज्जयाभिभवयोराद्योऽर्थेऽसावकर्मकः॥'
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः।'(श्लो.13-14) इति **देवः**।
एकस्मिन्नेव गणेऽर्थभेदात् पुनः पाठ इति बोध्यम्।

---

1. 'एरच्' (3-3-56) इति भावादौ अप्। घञपवादः।
2. उज्जयन्ति अस्यां वसन्तः इति **उज्जयिनी**। 'करणाधिकरणयोश्च' (3-3-117) इति ल्युट्। स्त्रियां टित्वान्ङीपि **उज्जयिनी** इति भवति। **उज्जयिनी**—नगरविशेषः।
3. ल्यपि 'ह्रस्वस्य—' (6-1-71) इति तुक्।
4. 'उणादयो बहुलम्' (3-3-1) इति त्रण्प्रत्ययः। 'अचो ञ्णिति' (7-2-115) इति वृद्धिः।
5. 'कृवापाजिमि —' [द. उ. 1·86] इति उण्प्रत्यये वृद्धौ, आयादेशे **जायुः**। जयति अनेन रोगानिति **जायुः**=औषधम्।

जायकः-यिका, जापकः-पिका, जिगीषकः-षिका, जेजीयकः-यिकाः ;
इत्यादीनि सर्वाण्यपि रूपाणि अव्यवहितपूर्वलिखितजिधातुवत् (599) बोध्यानि ।
[1]जित्यः ।

(601) " जि भाषार्थः " (X-चुरादिः-1794. अक. सेट्. उभ.)

आस्वदीयः ।

जापकः-पिका, जिजापयिषकः-षिका, जापयिता-त्री, जिजापयिषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचिधातुवत् (518) ज्ञेयानि ।

(602) " जिम अदने " (I-भ्वादिः-472. सक. सेट्. पर.)

'झमु' इत्यस्य पाठान्तरमिति केचित् ।

जेमकः-मिका, जेमकः-मिका, [2]जिजेमिषकः-जिजिमिषकः-षिका, [3]जेजिमकः-मिका ;
जेमिता-त्री, जेमयिता-त्री, जिजेमिषिता-जिजिमिषिता-त्री, जेजिमिता-त्री ;
जेमन्-न्ती, जेमयन्-न्ती, जिजेमिषन्-जिजिमिषन्-न्ती ; —
जेमिष्यन्-न्ती-ती, जेमयिष्यन्-न्ती-ती, जिजेमिषिष्यन्-जिजिमिषिष्यन्-न्ती-ती ; —
[4]व्यतिजेममानः, व्यतिजेमिष्यमाणः, — जेमयमानः, जेमयिष्यमाणः, जेजिम्यमानः, जेजिमिष्यमाणः ;
[5]प्रजीन्-प्रजीमौ-प्रजीमः ; — — —
जिमितम्-तः, जेमितः, जिजेमिषितः-जिजिमिषितः जेजिमितः-तवान् ;

1. 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' (3-1-117) इत्यनेन हलौ कृष्टसमीकरणार्थे स्थूलकाष्ठे वाच्ये क्यप् भवति। जित्यो=हलिः। बलेन कृष्टव्य इत्यर्थः।
2. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सेटः सनः कित्त्वविकल्पनाद्रूपद्वयम्। एवं सन्नन्ते सर्वत्र, क्त्वाप्रत्ययेऽपि ज्ञेयम्।
3. यङन्तात्, अभ्यासे 'गुणो यङ्लुकोः' (7-4-82) इति गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।
4. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
5. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घे, 'मो नो धातोः' (8-2-64) इति नत्वे च रूपम्।



[1]जिमः, जेमः, जिजेमिषुः-जिजिमिषुः, जेजिमः ;
जेमितव्यम्, जेमयितव्यम्, जिजेमिषितव्यम्-जिजिमिषितव्यम्-जेजिमितव्यम् ;
जेमनीयम्, जेमनीयम्, जिजेमिषणीयम्-जिजिमिषणीयम्-जेजिमनीयम् ;
जेम्यम्, जेम्यम्, जिजेमिष्यम्-जिजिमिष्यम्, जेजिम्यम् ;
ईषज्जेमः-दुर्जेमः-सुजेमः ; — — —
जिम्यमानः, जेम्यमानः, जिजेमिष्यमाणः-जिजिमिष्यमाणः, जेजिम्यमानः ;
जेमः जेमः, जिजेमिषः-जिजिमिषः, जेजिमः ;
जेमितुम्, जेमयितुम्, जिजेमिषितुम्-जिजिमिषितुम्, जेजिमितुम् ;
[2]जिमितिः, जेमना, जिजेमिषा-जिजिमिषा, जेजिमा ;
[A]जेमनम्-जेमनम्, जिजेमिषणम्-जिजिमिषणम्, जेजिमनम्,
जेमित्वा-जिमित्वा, जेमयित्वा, जिजेमिषित्वा-जिजिमिषित्वा, जेजिमित्वा ;
प्रजिम्य, प्रजेम्य, प्रजिजेमिष्य-प्रजिजिमिष्य, प्रजेजिम्य ;
जेमम् २ } जेमम् २ } जिजेमिषम्--जिजेमिषित्वा २, }
जेमित्वा २ } जेमयित्वा २ } जिजिमिषम्-जिजिमिषित्वा २, }
जिमित्वा २ }
जेजिमम् २ ; }
जेजिमित्वा २. }

(603) "जिरि हिंसायाम्" (V-स्वादिः-1278. सक. सेट्. पर. छान्दसः ।)

अनेकाच्त्वाद् यङ् न ।

जिरायकः-यिका, जिरायकः-यिका, जिजिरयिषकः-षिका ;
जिरयिता-त्री, जिरायिता-त्री, जिजिरयिषिता-त्री ;

1. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः।
2. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इत्युक्तत्वात् इड् भवति।
A. 'चान्तामिषश्छान्तजलः फलावलीं जान्त्वा झमज्जेमनमक्रमीद् गुहाम् ॥' धा. का. 1.60.

इत्यादीनि सर्वाण्यपि रूपाणि **चिरि**धातुवत् (526) बोध्यानि। [1]जिरिण्वन्[A]-ती।

## (604) “ जिवि प्रीणने ” (I-भ्वादिः-594. सक. सेट्. पर.)

[2]जिन्वकः-न्विका, जिन्वकः-न्विका, जिजिन्विषकः-षिका, जेजिन्वकः-न्विका ;
जिन्विता-त्री, जिन्वयिता-त्री, जिजिन्विषिता-त्री, जेजिन्विता-त्री ;
[B]जिन्वन्-न्ती, जिन्वयन्-न्ती, जिजिन्विषन्-न्ती ; —
— जिन्वयमानः, जिन्वयिष्यमाणः, — जेजिन्व्यमानः, जेजिन्विष्यमाणः ;
[3]प्रजिन्-प्रजिन्वौ-प्रजिन्वः ; — —
जिन्वितम्-तः, जिन्वितः, जिजिन्विषितः, जेजिन्वितः-तवान् ;
जिन्वः, जिन्वः जिजिन्विषुः, जेजिन्वः ;
जिन्वितव्यम्, जिन्वयितव्यम्, जिजिन्विषितव्यम्, जेजिन्वितव्यम्,
जिन्वनीयम्, जिन्वनीयम्, जिजिन्विषणीयम्, जेजिन्वनीयम् ;
जिन्व्यम्, जिन्व्यम्, जिजिन्विष्यम्, जेजिन्व्यम्,
ईषज्जिन्वः, दुर्जिन्वः-सुजिन्वः ; — —
जिन्व्यमानः, जिन्व्यमानः, जिजिन्विष्यमाणः, जेजिन्व्यमानः ;
जिन्वः, जिन्वः, जिजिन्विषः, जेजिन्वः ;
जिन्वितुम्, जिन्वयितुम्, जिजिन्विषितुम्, जेजिन्वितुम् ;
[4]जिन्वा, जिन्वना, जिजिन्विषा, जेजिन्वा ;
जिन्वनम्, जिन्वनम्, जिजिन्विषणम्, जेजिन्वनम्,
जिन्वित्वा, जिन्वयित्वा, जिजिन्विषित्वा, जेजिन्वित्वा ;
सञ्जिन्व्य, सञ्जिन्व्य, सञ्जिजिन्विष्य, सञ्जेजिन्व्य ;

---

1. ‘**स्वादिभ्यः—**’ (3-1-73) इति श्नुः विकरणप्रत्ययः। ‘**हुश्नुवोः** सार्वधातुके’ (6-4-87) इति यण्। णत्वम्।
2. ‘इदितो नुम् धातोः’ (7-1-58) इति नुम्। एवं सर्वत्र नुम्।
3. क्विपि, ‘संयोगान्तस्य—’ (8-2-23) इति वकारस्य संयोगान्तलोपः।
4. ‘गुरोश्च हलः’ (3-3-103) इति स्त्रियामकारप्रत्ययः।

A. ‘क्ष्मां दध्नुवन् मखचमिव्यसनानि रिण्वन् ऋक्षिण्वतां चिरयणैरपथं, **जिरिण्वन्**।’ धा. का. 2.71.

B. ‘**जिन्वन्तमुर्वी** निजरिण्वनैः सतां रण्वन्तमन्तर्भवधन्वपादपम्।’ धा. का. 1.76.



जिन्वम् २, जिन्वित्वा २, } जिन्वम् २, जिन्वयित्वा २, } जिजिन्विषम् २, जिजिन्विषित्वा २, } जेजिन्वम् २ ; जेजिन्वित्वा २. }

## (605) “ जिषु सेचने ” (I-भ्वादिः-697. सक. सेट्. पर.)

जेषकः-षिका, जेषकः-षिका, जिजेषिषकः-जिजिषिषकः-षिका, जेजिषकः-षिका ;
जेषिता-त्री, जेषयिता-त्री, जिजेजिषिता-जिजिषिषिता-त्री, जेजिषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि **जिम**धातुवत् (602) बोध्यानि।
निष्ठायाम्-[1]जिष्टम्-ष्टः-ष्टवान्, क्विपि-[2]प्रजिट्-प्रजिड्, क्त्वायाम्-[3]जेषित्वा-जिषित्वा-जिष्ट्वा ; इति रूपाणि भवन्ति।

## (606) “ जीव प्राणधारणे ” (I-भ्वादिः-562. अक. सेट्. पर.)

धात्वर्थसङ्गृहीतकर्मत्वेनास्य धातोरकर्मकत्वम्।

जीवकः-विका, जीवकः-विका, जिजीविषकः-षिका, जेजीवकः-विका ;
जीविता-त्री, जीवयिता-त्री, जिजीविषिता-त्री, जेजीविता-त्री ;
जीवन्-न्ती, [4]मा [A]जीवन्, जीवयन्-न्ती, जिजीविषन्-न्ती ; —
जीविष्यन्-न्ती-ती, जीवयिष्यन्-न्ती-ती, जिजीविषिष्यन्-न्ती-ती ; —
— — — जेजीव्यमानः-जेजीविष्यमाणः ;
[5]प्रज्यूः-प्रज्युवौ-प्रज्युवः ; — —
जीवितम्-तः, जीवितः, जिजीविषितः, जेजीवितः-तवान् ;

---

1. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, ‘यस्य विभाषा’ (7-2-15) इति इण्णिषेधः।
2. ‘झलां जशोऽन्ते’ (8-2-39) इति जश्त्वेन षकारस्य डकारः। चर्त्वविकल्पः।
3. ‘उदितो वा’ (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे ‘रलो व्युपधात्—’ (1-2-26) इति कित्त्वविकल्पः। तेन रूपत्रयम्।
4. ‘माङ्याक्रोश इति वक्तव्यम्’ (वा. 3-2-124) इति शता।
5. क्विपि, ‘च्छ्वोः शूडनुनासिके च’ (6-4-19) इत्यूडादेशे, ईकारस्य यणि रूपम्। एवं क्विन्प्रत्ययेऽपि प्रक्रिया बोध्या।

A. ‘**मा जीवन्** यः परावज्ञादुःखदग्धोऽपि **जीवति**।’ शिशुपालवधे 2.45.

जीवः, [1]उपजीवी[A]-अनुजीवी, [2]जीवकः-[B]-जीवका, [3]जीवञ्जीवकः, जीवः, [C]जिजीविषुः, जेर्जीवः ;

जीवितव्यम्, जीवयितव्यम्, जिजीविषितव्यम्, जेजीवितव्यम् ;

जीवनीयम्, जीवनीयम्, जिजीविषणीयम्, जेजीवनीयम् ;

जीव्यम्, जीव्यम्, जिजीविष्यम्, जेजीव्यम् ;

ईषज्जीवः-दुर्जीवः-सुजीवः ; — —

जीव्यमानः, जीव्यमानः, जिजीविष्यमाणः, जेजीव्यमानः ;

जीवः, जीवः, जिजीविषः, जेजीवः ;

जीवितुम्, जीवयितुम्, जिजीविषितुम्, जेजीवितुम् ;

ज्यूतिः, [4]अजीवनिः[D], [5]जीविका, जीवना, जिजीविषा, जेजीवा ;

[E]जीवनम्, जीवनम्, जिजीविषणम्, जेजीवमम् ;

जीवित्वा, जीवयित्वा, जिजीविषित्वा, जेजीवित्वा ;

सञ्जीव्य, सञ्जीव्य, सञ्जिजीविष्य, सञ्जेजीव्य ;

[6]यावज्जीवम् [ अग्निहोत्रं जुहुयात् ] ,

जीवम् २, जीवित्वा २, } जीवम् २, जीवयित्वा २, } जिजीविषम् २, जिजीविषित्वा २, } जेजीवम् २ ; जेजीवित्वा २ ; }

---

1. ' सुप्यजातौ— ' (3-2-78) इति ताच्छील्ये णिनिः ।
2. ' आशिषि च ' (3-1-150) इति वुन् । जीवतात् **जीवकः** । स्त्रियाम्, ' प्रत्ययस्थात्—' (7-3-44) इति प्राप्तस्येत्वस्य ' आशिषि वुनश्च न ' (वा. 7-3-45) इति निषेधः ।
3. ' गमश्च ' (3-2-47) इत्यत्र "चकारात् **जीवञ्जीवक**-शिवङ्कर-शुभङ्करादयः साधवः ।" इति **बृ. शेखरे** ।
4. ' आक्रोशे नञ्यनिः ' (3-3-112) इति अनिप्रत्ययः ।
5. स्त्रियां भावादौ ' संज्ञायाम् ' (3-3-109) इति ण्वुल् ।
6. ' यावति विन्द**जीवोः** ' (3-4-30) इति णमुल् ।

A. ' भीमकान्तैर्नृपगुणैः स बभूवोप**जीविनाम्** ।' **रघुवंशे** 1-16.
B. ' बन्धुना विगृहीतोऽहं भूयासं **जीवकः** कथम् ॥' भ. का. 6.87.
C. ' तमुद्यतनिशातासिं प्रत्युवाच **जिजीविषुः** ।' भ. का. 5.46.
D. ' अभावे भवतां योऽस्मिन् **जीवेत्** तस्यास्त्व**जीवनिः** ।' भ. का. 7.77.
E. ' सञ्चारनिष्ठ्यूतनखेन्दुचन्द्रिकं लोके जयन्तं सकलैक**जीवनम्** ।' धा. का. 1.72.



[1]जीवातुः, [2]जीमूतः, [3]जैवातृकः, [4]जीवन्तः.

## (607) " जु गतौ वेगे च " (I-भ्वादिः-अक. अनि. पर.)

सौत्रोऽयं धातुः साक्षाद्धातुपाठेष्वपठितोऽपि, ' जुचङ्क्रम्य—' (3-2-150), ' **प्रजोरिनिः** ' (3-2-156), ' भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ' (3-2-177)' ' ऊतियूतिजूतिसातिहेतिकीर्तयश्च ' (3-3-97) इत्यादिषु अनुवादबलाद् अभ्युपगम्यते । ' वेगितायां गतौ ' इति **काशिकादिष्वर्थ**-निर्देशस्योपलम्भात् तदनुसारेणास्माभिरप्यर्थोऽस्य निर्दिष्टः । **क्षीरस्वामी** तु ' **जुङ्** ' इति ङितं पपाठ । **वृत्तिन्यासपदमञ्जर्यादिषु** अस्य धातोः सौत्रत्वमेवाङ्गीकृतम् । **माधवधातुवृत्तौ** तु परस्मैपदिष्वेव पाठोऽभ्युपगतः ।

जावकः-विका, जावकः-विका, [5]जिजावयिषकः, [6]जुजूषकः-षिका, [7]जोजूयकः-यिका ;

[8]जोता-त्री, जावयिता-त्री, जिजावयिषिता-त्री, जुजूषिता-त्री, जोजूयिता-त्री ;

जवन्-न्ती, जावयन्-न्ती, जिजावयिषन्-न्ती, जुजूषन्-न्ती ; —

जोष्यन्, जावयिष्यन्-न्ती-ती, जिजावयिषिष्यन्-न्ती-ती, जुजूषिष्यन्-न्ती-ती ;

---

1. ' **जीवे**रातुः ' [द. उ. 1. 132] इत्यातुप्रत्ययः । जीवन्ति प्राणिनोऽनेनेति **जीवातुः**=जीवनौषधम्, अन्नं च । ' **जीवातु**र्जीवनौषधम् ।' इत्य**मरः** ।
2. **जीवनं**=जलम्, मूतं=बद्धं येन स **जीमूतः**=मेघः । पृषोदरादित्वात् (6-3-109) **जीवन**शब्दस्य जीभावः ।
3. ' **जीवे**रातृकन् वृद्धिश्च ' (द. उ. 3. 1.) इत्यातृकन्प्रत्ययो वृद्धिश्च । जीवयतीति **जैवातृकः**=चन्द्रः ।
4. ' रुहिनन्दि**जीवि**प्राणिभ्यः षिदाशिषि ' [द. उ. 6-18) इति झच्प्रत्ययो भवत्याशिषि । जीवतात् **जीवन्तः**=आयुष्मान्, ऋषिविशेषश्च । स्त्रियां षित्वात् ङीष् । **जीवन्ती**=ओषधिविशेषः ।
5. यद्यपि ण्यन्तात् सन्प्रत्यये रूपप्रदर्शनमस्माभिः न प्रतिज्ञातम् ; अथापि, ' ओः पुयण्ज्यपरे ' (7-4-80) इत्यनेनाभ्यासघटकोकारस्येत्वविधानसामर्थ्यात् तानि रूपाणि प्रकृते प्रदर्शितानि । एवं सर्वत्र ण्यन्तात् सनि अभ्यासे इकारो ज्ञेयः ।
6. ' इको झल् ' (1-2-9) इति सनः कित्त्वेन न गुणः । ' अज्झनगमां सनि ' (6-4-16) इति दीर्घः । षत्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
7. अभ्यासस्य ' गुणो यङ्लुकोः ' (7-4-82) इति गुणे, ' अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
8. ' एकाच उपदेशेऽनुदात्तात् ' (7-2-10) इतीण्णिषेधे गुणः । एवं तव्यदादिष्वपि ज्ञेयम् ।

[1]जवमानः, जावयमानः, जिजावयिषमाणः, — जोजूयमानः ;
जोष्यमाणः, जावयिष्यमाणः, जिजावयिषिष्यमाणः, —जोजूयिष्यमाणः ;
[2]जूः-जुवौ-जुवः ; — —
जुतम्-जुतः-जुतवान्, जावितः, जिजावयिषितः, जुजूषितः, जोजूयितः-तवान् ;
जवः, [3]जवनः,[A] [4]प्रजवी,[B] जावः, जिजावयिषुः, जुजूषुः, [5]जोजुवः ;
जोतव्यम्, जावयितव्यम्, जिजावयिषितव्यम्, जुजूषितव्यम्, जोजूयितव्यम् ;
जवनीयम्, जावनीयम्, जिजावयिषणीयम्, जुजूषणीयम्, जोजूयनीयम् ;
[6]जव्यम्-अवश्यजाव्यम्[7], जाव्यम्, जिजावयिष्यम्, जुजूष्यम्, जोजूय्यम् ;
ईषज्जवः-दुर्जवः-सुजवः ; — — —
[8]जूयमानः, जाव्यमानः, जिजावयिष्यमाणः, जुजूष्यमाणः, जोजूय्यमानः ;
[9]जवः, जावः, जिजावयिषः, जुजूषः, जोजूयः ;
जोतुम्, जावयितुम्, जिजावयिषितुम्, जुजूषितुम्, जोजूयितुम् ;
[10]जूतिः,[C] जावना, जिजावयिषा, जुजूषा, जोजूया ;

---

1. **क्षीरस्वामि**मते धातोरस्य ङित्वात् 'अनुदात्तङित आत्मनेपदम्' (1-3-12) इति शानच्।
2. 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' (3-2-177) इति ताच्छीलिके क्विपि, 'वचिप्रच्छ्यायस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' (वा. 3-2-178) इति वचनाद् दीर्घः। **जूः**=पिशाचः।
3. '**जु**चङ्क्रम्यदन्द्रम्य--' (3-2-150) इति ताच्छीलिको युच्। अनादेशः।
4. '**प्रजो**रिनिः' (3-2-156) इति तच्छीलादिषुकर्तृषु इनिप्रत्ययः।
5. यङन्तात् पचाद्यचि, यङो लुकि, 'न धातुलोप—' (1-1-4) इति गुणनिषेधे, 'अचि श्नुधातु—' (6-4-77) इत्युवङ्।
6. '**अचो** यत्' (3-1-97) इति यति, गुणावादेशौ।
7. 'ओरावश्यके' (3-1-125) इति ण्यति, वृद्धिः आवादेशश्च।
8. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
9. 'ऋदोरप्' (3-3-57) इति घञपवादः अप्प्रत्ययः।
10. 'ऊतियूति**जूति**सातिहेतिकीर्तयश्च' (3-3-97) इति सूत्रेण क्तिनि दीर्घो निपातितः।

A. 'विविधकामहिता महिताम्भसः स्फुटसरोजवना **जवना** नदीः॥' **किरातार्जुनीये** 5. 7.
B. 'जल्पाकीभिः सहासीनः स्त्रीभिः **प्रजविना** त्वया।' भ. का. 7.19.
C. '**जूति**मिच्छथ चेत् तूर्णं कीर्तिं वा पातुमात्मनः' भ. का. 7. 69.



जवनम्, जावनम्, जिजावयिषणम्, जुजूषणम्, जोजूयनम् ;
जुत्वा, जावयित्वा, जिजावयिषित्वा, जुजूषित्वा, जोजूयित्वा ;
[1]प्रजुत्य, प्रजाव्य, प्रजिजावयिष्य, प्रजुजूष्य, प्रजोजूय्य ;
जावम् २, जुत्वा २, } जावम् २, जावयित्वा २, } जिजावयिषम् २, जिजावयिषित्वा २, } जुजूषम् २, जुजूषित्वा २, } जोजूयम् २ ; जोजूयित्वा २. }

## (608) "जुगि वर्जने" (I-भ्वादिः-157. सक. सेट्. पर.)

जुङ्गकः-ङ्गिका, जुङ्गकः-ङ्गिका, जुजुङ्गिषकः-षिका, जोजुङ्गकः-ङ्गिका ;
जुङ्गिता-त्री, जुङ्गयिता-त्री, जुजुङ्गिषिता-त्री, जोजुङ्गिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुठि** (209) धातुवत् ज्ञेयानि। विजुङ्ग्य[A]।

## (609) "जुड गतौ" (VI-तुदादिः-1326. संक. सेट्. पर.)

'तवर्गपञ्चमान्तमेके पठन्ति। दृश्यते च 'दृष्टियों विश्वे मरुतो जुनन्ति' इति' इति **माधवीयधातुवृत्तौ**।
जोडकः-डिका, जोडकः-डिका, जुजोडिषकः-जुजुडिषकः-षिका, जोजुडकः-डिका ;
जोडिता-त्री जोडयिता-त्री, जुजोडिषिता-जुजुडिषिता-त्री, जोजुडिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**गुफ**धातुवत् (412) बोध्यानि।
**क्षीरस्वामि**सम्मतनकारान्तपाठेऽपि— [ निका ;
जोनकः-निका, जोनकः-निका, जुजोनिषकः-जुजुनिषकः-षिका, जोजुनकः-
जोनिता-त्री, जोनयिता-त्री, जुजोनिषिता-जुजुनिषिता-त्री, जोजुनिता-त्री ;
इत्यादीनि सर्वाणि रूपाणि **गुफ**धातुवद् (412) ऊह्यानि। जुडन्-[B]न्ती-ती।

---

1. समासे क्त्वाप्रत्ययस्य ल्यबादेशे, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्।
A. '**विजुङ्ग्य** बुङ्गचं गुणसङ्गदङ्गका अलङ्घितानन्दरसात्तघर्घनाः।' धा. का. 1.22.
B. 'पीयूषोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा दृब्धस्रग्धरचृत्तकैश्यविधितां शोभां **जुडन्त्यो**ऽजुनन्।' धा. का. 2.75.

(610) "**जुड बन्धने**" (VI-तुदादिः-1379. सक. सेट् पर.) **कुटादिः**

'जुट' इति **केचित्** पठन्ति ।

'प्रेरणे जोडयेच्छे तु बन्धने-जुडतीति च ॥' (श्लो. 89) इति **देवः** ।

जोडकः-डिका, जोडकः-डिका, जुजुडिषकः-षिका, जोजुडकः-डिका; जुडिता-त्री, जोडयिता-त्री, जुजुडिषिता-त्री, जोजुडिता-त्री; इत्यादीनि सर्वाणि रूपाणि तौदादिक**कुट**तिवत् (204) बोध्यानि ।

(611) "**जुड प्रेरणे**" (X-चुरादिः-1647. सक. सेट्. उभ.)

'प्रेरणे जोडयेच्छे तु बन्धने जुडतीति च ॥' (श्लो. 89) इति **देवः** ।

जोडकः-डिका, जुजोडयिषकः-षिका; जोडयिता-त्री, जुजोडयिषिता-त्री; इत्यादीनि सर्वाणि रूपाणि चुद्धातुवत् (542) ज्ञेयानि । [A]विजोडितः ।

(612) "**जुतृ भासने**" (I-भ्वादिः-32. अक. सेट्. आत्म.)

**ज्योतिरिति** रूपसिध्यर्थं **ज्युतृ** इति **केचित्** पठन्ति ।

जोतकः-तिका, जोतकः-तिका, जुजोतिषकः-जुजुतिषकः-षिका, जोजुतकः-तिका, जोतिता-त्री, जोतयिता-त्री, जुजोतिषिता-जुजुतिषिता-त्री, जोजुतिता-त्री; इत्यादीनि सर्वाणि रूपाणि **कुक**धातुवत् (197) बोध्यानि । [B]काननजोती, इति णिनिप्रत्ययान्तः ।

(613) "**जुष परितर्कणे**" (X-चुरादिः-1835. सक. सेट्. उभ.)

**आधृषीयः** । '**परितर्कणम्**=ऊहो हिंसा वा' इति. **सि. कौमुदी** । **परितर्पणे** इति **क्षीरस्वामी** । **परितर्पणम्**=तृप्तिक्रिया ।

'जोषयेज्जोषतीत्येते युजादेः परितर्कणे ॥
प्रीतिसेवनयोरिष्टं तुदादेर्जुषते पदम्' । (श्लो. 180-181) इति **देवः** ।

---

A. 'अर्क्येण तेन समरेष्वविशोठितस्त्वं
संशुण्ठिताहितमदेन **विजोडितो**ऽसि ॥' धा. का. 3.27.

B. 'पृदाकुजिद्वेगमयत्नतो ययौ वियोयुतत्**काननजोतिना**ऽध्वना ॥' धा. का. 1.5.



जोषकः-षिका, जुजोषयिषकः-षिका, [1]जोषकः-षिका, [2]जुजोषिषकः-जुजुषिषकः-षिका, जोजुषकः-षिका;—

जोषयिता-त्री, जुजोषयिषिता-त्री, जोषिता-त्री, जुजोषिषिता-जुजुषिषिता-त्री, जोजुषिता-त्री;

जोषयन्-न्ती, जुजोषयिषन्-न्ती, [3]जोषन्-न्ती, जुजोषिषन्-जुजुषिषन्-न्ती;

जोषयिष्यन्-न्ती-ती, जुजोषयिषिष्यन्-न्ती-ती, जोषिष्यन्-न्ती-ती, जुजोषिषिष्यन्-जुजुषिषिष्यन्-न्ती-ती; —

जोषयमाणः, जुजोषयिषमाणः,—जोजुष्यमाणः;

जोषयिष्यमाणः, जुजोषयिषिष्यमाणः-जोजुषिष्यमाणः;

[4]जोट्-जोड्-जोषौ-जोषः; — —

जोषितः, जुजोषयिषितः, जुषितः-[A]जुषितवान्, जुजोषिषितः-जुजुषिषितः, जोजुषितः-तवान्;

जोषः, जुजोषयिषुः, जोषः, जुजोषिषुः-जुजुषिषुः, जोजुषः;

जोषयितव्यम्, जुजोषयिषितव्यम्, जोषितव्यम्, जुजोषिषितव्यम्-जुजुषिषितव्यम्, जोजुषितव्यम्;

जोषणीयम्, जुजोषयिषणीयम्, जोषणीयम्, जुजोषिषणीयम्-जुजुषिषणीयम्, जोजुषणीयम्;

जोष्यम्, जुजोषयिष्यम्, जोष्यम्, जुजोषिष्यम्-जुजुषिष्यम्, जोजुष्यम्;

ईषज्जोषः-दुर्जोषः-सुजोषः; — —

---

1. 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिज्विकल्पः । तेन णिजभावपक्षे क्रमेण शुद्धात्, शुद्धप्रकृतिकसन्नन्तात् यङन्ताच्च रूपाणि प्रदर्शितानि ।
2. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति कित्वविकल्पः । तेन रूपद्वयम् । एवं क्त्वाप्रत्ययेऽपि बोध्यम् ।
3. णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदमेव । तेन शुद्धाद्धातोः शानज् न ।
4. क्विपि णिज्निमित्तक उपधागुणे कृते, 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे चर्त्वविकल्पः ।

A. 'मल्लोऽर्यः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः
तावत् स्वं बलमच्छदन् **जुषितवान्** मुष्ट्या हली मुष्टिकम् ॥' धा. का. 3. 50.

जोष्यमाणः, जुजोषयिष्यमाणः, जुष्यमाणः, जुजोषिष्यमाणः-जुजुषिष्य-माणः, जोजुष्यमाणः ;

जोषः, जुजोषयिषः, जोषः, जुजोषिषः-जुजुषिषः, जोजुषः ;

जोषयितुम्, जुजोषयिषितुम्, जोषितुम्, जुजोषिषितुम्-जुजुषिषितुम्-जोजुषितुम् ;

जोषणा, जुजोषयिषा, जुष्टिः, जुजोषिषा-जुजुषिषा, जोजुषा ;

जोषणम्, जुजोषयिषणम्, जोषणम्, जुजोषिषणम्-जुजुषिषणम्, जोजुषणम् ;

जोषयित्वा, जुजोषयिषित्वा, जोषित्वा-जुषित्वा, जुजोषिषित्वा-जुजुषिषित्वा, जोजुषित्वा ;

सञ्जोष्य, सञ्जुजोषयिष्य, सञ्जुष्य, सञ्जुजोषिष्य-सञ्जुजुषिष्य, सञ्जोजुष्य ;

जोषम् २, जोषयित्वा २, } जुजोषयिषम् २, जुजोषयिषित्वा २, } जोषम् २, जोषित्वा २, जुषित्वा २, } जुजोषिषम् २, जुजोषिषित्वा २, } जुजुषिषिम् २, जुजुषिषित्वा २, } जोजुषम् २ ; जोजुषित्वा २. }

(614) "**जुषी प्रीतिसेवनयोः**" (VI-तुदादिः-1288. सक. सेट्. आत्म.)

'जोषयेज्जोषतीत्येते युजादेः परितर्कणे ॥
प्रीतिसेवनयोरिष्टं तुदादेर्जुषते पदम् ।' (श्लो. 180-181) इति देवः ।

जोषकः-षिका, जोषकः-षिका, जुजोषिषकः-जुजुषिषकः जोजुषकः-षिका ;
जोषिता-त्री, जोषयिता-त्री, जुजोषिषिता-जुजुषिषिता-त्री, जोजुषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि शुद्धधातौ ण्यन्त-सन्नन्त-यङन्तेषु च, अव्यवहित-पूर्वलिखितजुषधातुवत् (613) बोध्यानि । अस्य ईदित्त्वात् 'श्वीदितो निष्ठायाम्' (7-2-14) इति इण्णिषेधे जुष्टम्-ष्टः-जुष्टवान्, इति रूपाणि भवन्ति। अस्य आत्मनेपदित्वात् शानचि —जुषमाणः-जोषिष्यमाणः, सन्नन्तात्-जुजोषिषमाणः-जुजुषिषमाणः, जुजोषिषिष्यमाणः-जुजुषिषिष्यमाणः, इत्यादीनि रूपाणि



भवन्तीति विशेषः । घञन्तस्य **जोष**शब्दस्य मान्तत्वेन स्वरादिषु पाठादव्ययत्वं बोध्यम् । [A]जुष्यः इति 'एतिस्तुशास्वृदृजुषः क्यप्' (3-1-109) इति क्यपि रूपम् । क्विपि, सह जुषते इति सजूः-सजुषौ-सजुषः । 'ससजुषो रुः' (8-2-66) इति रुत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे विसर्गः ।

(615) "**जूरी हिंसावयोहान्योः**"
(IV-दिवादिः-1156. सक. सेट्. आत्म.)

जोरकः-रिका, जोरकः-रिका, जुजूरिषकः-षिका, जोजूरकः-रिका ;
जूरिता-त्री, जूरयिता-त्री, जुजूरिषिता-त्री, जोजूरिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि **गूरी** (419) धातुवत् ज्ञेयानि । [1]जूर्णः[B] ।

(616) "**जूष हिंसायाम्**" (I-भ्वादिः-681. सक. सेट्. पर.)

[C]जूषकः-षिका, जूषकः-षिका, जुजूषिषकः-षिका, जोजूषकः-षिका ;
जूषिता-त्री, जूषयिता-त्री, जुजूषिषिता-त्री, जोजूषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचूषधातुवत् (552) ऊह्यानि ।

(617) "**जृभि गात्रविनामे**" (I-भ्वादिः- 389. सक. सेट्. आत्म.)

जृम्भकः-म्भिका, जृम्भकः-म्भिका, जिजृम्भिषकः-षिका, जरीजृम्भकः-म्भिका ;
जृम्भिता-त्री, जृम्भयिता-त्री, जिजृम्भिषिता-त्री, जरीजृम्भिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**गृञ्जति**वत् (423) ज्ञेयानि । अस्यात्मनेपदित्वात् शानचि जृम्भमाणः, जृम्भिष्यमाणः, जृम्भयमाणः, जृम्भयिष्यमाणः, जिजृम्भिषमाणः, जिजृम्भिषिष्यमाणः इति रूपाणीति

---

1. 'श्वीदितः—' (7-2-14) इतीण्णिषेधे, 'रदाभ्याम्—' (8-2-42) इति निष्ठानत्वे णत्वे च रूपम् ।

A. 'आदृत्यस्तेन वृत्येन स्तुत्यो **जुष्येण** सङ्गतः ।' भ. का 6. 56.

B. 'गूर्णेऽस्मिन् बहुजन्तुघूरिणि खले **जूर्णै**। शशंसे नृभिः
शौरिः शूरकगर्वचूरणपरः सन्तप्यमानः सताम् ॥' धा. का. 2.60.

C. 'शूषन् दशोरमृतयूष**मजूषक**स्त्वं भूषस्यनूषमतिरीषभुजां प्रियः क्ष्माम् ॥'
धा. का. 1.86.

विशेषः। पचाद्यचि [A]जृम्भः। जृम्भा। [B]जृम्भितम्।

## (618) "जॄ वयोहानौ" (IX-क्र्यादिः-1494. अक. सेट्. पर.) प्वादिः, ल्वादिश्च।

'जृणाति जीर्यति जरत्येकार्थे जारयत्यपि।' (श्लो. 39) इति **देवः**।

दिवादौ '**जॄष् वयोहानौ**', क्र्यादौ चुरादौ च '**जॄ वयोहानौ**' इति समानार्थास्त्रयो धातवः पठ्यन्ते। त्रयोऽप्येते प्रामाणिका इति प्रतिभाति। अत एव, **देव**श्लोके (39) त्रयाणामनुवादः सङ्गच्छते। **मैत्रेयरक्षितक्षीरस्वामिना**वपि एवमभ्युपगमेऽनुकूलौ। अत एव **सिद्धान्तकौमुद्याम्**, 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. भ्वादिः) इत्यत्र, 'षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम्, जृणातेस्तु जारयति' इत्युक्तं सङ्गच्छते। एवमभ्युपगमे 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' (परिभाषा-82) इति वचनेन, 'जॄस्तम्भु—' (3-1-58) इत्यादिषु **जीर्यते**रग्रहणं स्यादिति तु न शङ्क्यम्। 'ज्ञापकसिद्धं न सर्वत्र' (परिभाषा-126) इति न्यायेन तस्यापि ग्रहणसिद्धेः। षितो **जीर्यतेः जरकः, जरयन्, जरा, जरीत्वा-जरित्वा, जरम् २-जारम् २,** इत्यादीनि रूपाणि भवन्ति। **जृणातेस्तु जारकः, जारयन्, जीर्णिः, जरीत्वा-जरित्वा, जारम् २,** इत्यादीनि रूपाणि भवन्ति, इति विशेषः। चौरादिकस्य **जारयते**राधृषीयत्वेन, णिजभावपक्षे क्रैयादिकधातुवत् सर्वाण्यपि रूपाणि भवन्ति। शतरि तु **जरन्** इति विशेषः। **माधवीयधातुवृत्तौ** तु, **भाष्यवार्तिकवृत्तिन्यासपदमञ्जर्यादि**पर्यालोचनायां **जृणातेः** पाठोऽप्रामाणिक इत्युक्तम्। तदुपष्टम्भकवृत्तिन्यासादिग्रन्थस्यानुपलम्भेन सुधियस्तत्त्वमत्र निर्णयन्तु। 'दारजारौ कर्तरि, णिलुक् च' (वा. 3-3-20) इत्यत्रोद्योते 'ननु जृणातिरपि क्र्यादौ पठ्यते; अत एव तद्व्यावृत्तये 'जनीजॄष्—' (ग. सू. भ्वादौ) इत्यत्र षकारोच्चारणम्। एवञ्च तस्यामित्त्वेन तस्माद् घञि णिलोपेनापि सिद्धे **जारयती**ति चेन्न—मितो जर इति रूपव्यावृत्त्यर्थत्वात्।' इति **नागेशोपाध्यायाना**मुक्तिः जृणातेरभ्युपगमेऽनुकूला दृश्यते।

---

A. 'अस्कम्भिताः प्राप्य शिशून् सजम्भनानुज्जृम्भहर्षा लिलिहुः सशल्भनम्॥' धा. का. 1-50.

B. 'उरोभुवा कुम्भयुगेन **जृम्भितं** नवोपहारेण वयःकृतेन किम्।' **नैषधे** 1-48.



जारकः-रिका, [1]जारकः-रिका, [2]जिजरीषकः-जिजरिषकः-जिजीर्षकः-र्षिका, [3]जेजिरकः-रिका;

[4]जरीता-जरिता-त्री, जारयिता-त्री, जिजरीषिता-जिजरिषिता-जिजीर्षिता-त्री, जेजिरिता-त्री;

[5]जृणन्[A]-ती, जारयन्-न्ती, जिजरीषन्-जिजरिषन्-जिजीर्षन्-न्ती; — जरीष्यन्-जरिष्यन्-न्ती-ती, जारयिष्यन्-न्ती-ती, जिजरीषिष्यन्-जिजरिषिष्यन्-जिजीर्षिष्यन्-न्ती-ती; —

— जारयमाणः, जारयिष्यमाणः, — [6]जेजीर्यमाणः; जेजिरिष्यमाणः;

[7]जीः-जिरौ-जिरः; — — —

[8]जीर्णम्-जीर्णः-जीर्णवान्, जारितः, जिजरीषितः-जिजरिषितः-जिजीर्षितः; जेजिरितः-तवान्;

---

1. 'जनीजॄष्—' (ग. सू. भ्वादौ) इत्यत्र षित्करणेनास्य मित्संज्ञाभावात् 'मितां ह्रस्वः' (6-4-92) इत्युपधाह्रस्वो न। एवं ण्यन्ते सर्वत्र बोध्यम्।
2. 'इट् सनि वा' (7-2-41) इतीड्विकल्पः। इट्पक्षे '**वॄतो** वा' (7-2-38) इति दीर्घविकल्पः। इडभावपक्षे 'इको झल्' (1-2-9) इति सनः कित्त्वेन गुणाभावे '**ॠत** इद्धातोः' (7-1-100) इतीत्त्वे रपरत्वे, 'हलि च' (8-2-77) इति दीर्घे च रूपम्। एवं सन्नन्ते सर्वत्र रूपत्रयं बोध्यम्।
3. यङि '**ॠत** इद्धातोः' (7-1-100) इतीत्त्वे, द्वित्वे, अभ्यासगुणे च, यकाराकारयोर्लोपे रूपमेवं भवति। एवं यङन्ते सर्वत्र ज्ञेयम्।
4. '**वॄतो** वा' (7-2-38) इति इटो दीर्घविकल्पः।
5. '**क्र्यादिभ्यः** श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे, 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति णत्वे, '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वे च रूपम्।
6. इत्वे रपरत्वे 'हलि च' (8-2-77) इति दीर्घे च रूपम्। एवम्, यकि, यति, ल्यपि च दीर्घो बोध्यः।
7. क्विपि, इत्वे रपरत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः।
8. 'श्र्युकः क्किति' (7-2-11) इति इण्णिषेधः। इत्वरपरत्वयोः, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वे, णत्वे च रूपम्।

A. 'त्वामेष सम्प्रति मृणामि दृणामि नागं नो चेज्जृणास्सम नरानक्षणन्नृणीहि॥' धा. का. 3-7.

जरः, [1]जजीर्वान्-जेरिवान्, जारः, जिजरीषुः-जिजरिषुः-जिजीर्षुः, जेजिरः ;
जरीतव्यम्-जरितव्यम्, जारयितव्यम्, जिजरीषितव्यम्-जिजरिषितव्यम्-जिजीर्षितव्यम्, जेजिरितव्यम् ;
जरणीयम्, जारणीयम्, जिजरीषणीयम्-जिजरिषणीयम्-जिजीर्षणीयम्-जेजिरणीयम् ;
जार्यम्, जार्यम्, जिजरीष्यम्-जिजरिष्यम्-जिजीर्ष्यम्, जेजीर्यम् ;
ईषज्जरः-दुर्जरः-सुजरः ; — — —
[2]जीर्यमाणः, जार्यमाणः, जिजरीष्यमाणः-जिजरिष्यमाणः-जिजीर्ष्यमाणः ; जेजीर्यमाणः,
जारः, जारः, जिजरीषः-जिजरिषः-जिजीर्षः, जेजिरः ;
जरीतुम्-जरितुम्, जारयितुम्, जिजरीषितुम्-जिजरिषितुम्-जिजीर्षितुम्, जेजिरितुम् ;
[3]जीर्णिः, जारणा, जिजरीषा-जिजरिषा-जिजीर्षा, जेजिरा ;
जरणम्, जारणम्, जिजरीषणम्-जिजरिषणम्-जिजीर्षणम्, जेजिरणम् ;
[4]जरीत्वा-[A]जरित्वा, जारयित्वा, जिजरीषित्वा-जिजरिषित्वा-जिजीर्षित्वा, जेजिरित्वा ;
प्रजीर्य, प्रजार्य, प्रजिजरीष्य-प्रजिजरिष्य-प्रजिजीर्ष्य, प्रजेजीर्य ;

| | | | |
|---|---|---|---|
| जारम् २ | जारम् २ | जिजरीषम् २ | जिजरीषित्वा २ |
| जरीत्वा २ | जारयित्वा २ | जिजरिषम् २ | जिजरिषित्वा २ |
| जरित्वा २ | | जिजीर्षम् २ | जिजीर्षित्वा २ |
| | | | जेजिरम् २ ; |
| | | | जेजिरित्वा २. |

1. 'छान्दसः क्वसुः क्वचिद् भाषायां भवति ।' इति न्यायेन लिटः क्वस्वादेशे द्वित्वे, 'वा जॄभ्रमुत्रसाम्' (6-4-124) इत्येत्वाभ्यासलोपविकल्पे रूपद्वयं भवति ।
2. भावे यकि इत्वरपरत्वयोः, 'हलि च' (8-2-77) इति दीर्घे णत्वे च रूपम् ।
3. '**ॠल्वादिभ्यः** क्तिन् निष्ठावद्वाच्यः' (वा. 8-2-42) इति क्तिनस्तकारस्य नत्वे णत्वे च रूपम् ।
4. 'श्र्युकः क्किति' (7-2-11) इति इण्णिषेधे प्राप्ते, 'जॄव्रश्च्योः क्त्वि' (7-2-55) इति नित्यमिट् । दीर्घविकल्पः ।

A. '**जरित्वेव** जवेनान्ये निपेतुस्तस्य शाखिनः ।' भ. का. 9.41.



(619) **"जॄ वयोहानौ"** (X-चुरादिः-1815. अक. सेट्. उभ. **आधृषीयः।**)

'जृणाति जीर्यति जरत्येकार्थे जारयत्यपि ।' (श्लो. 39) इति **देवः** ।

अस्य धातोराधृषीयत्वेन 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिज्विकल्पः ; णिजभावपक्षे, जारकः-रिका, जिजरीषकः-जिजरिषकः-जिजीर्षकः-र्षिका, जेजिरकः-रिका ;

इत्यादीनि, णिच्पक्षे जारकः-रिका, जारयिता-त्री, इत्यादीनि च रूपाणि जृणातिवत् (618) बोध्यानि। णिजभावपक्षे शुद्धाद्धातोः 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति शास्त्रात् परस्मैपदमेव । तदानीं शतरि [A]जरन्-न्ती इति रूपमिति विशेषः। ण्यन्तात् सनि तु—जिजारयिषकः-षिका, जिजारयिषिता-त्री, जिजारयिषन्-न्ती, जिजारयिषिष्यन्-न्ती-ती, जिजारयिषमाणः, जिजारयिषिष्यमाणः, जिजारयिट्-यिषौ-यिषः, जिजारयिषितः-तवान्, जिजारयिषुः, जिजारयिषितव्यम्, जिजारयिषणीयम्, जिजारयिष्यम्, ईषज्जिजारयिषः-दुर्जिजारयिषः-सुजिजारयिषः, जिजारयिष्यमाणः, जिजारयिषः, जिजारयिषितुम्, जिजारयिषा, जिजारयिषणम्, जिजारयिषित्वा, प्रजिजारयिष्य जिजारयिषम् २ जिजारयिषित्वा २, इति रूपाणि इति विशेषः ।

(620) **"जॄष् वयोहानौ"** (IV-दिवादिः-1130. अक. सेट्. पर.)

'जृणाति, जीर्यति, जरत्येकार्थे जारयत्यपि ।' (श्लो. 39) इति **देवः** ।

धातोरस्य सन्नन्तात्, यङन्ताच्च सर्वाणि रूपाणि जृणातिवत् (618) बोध्यानि। शुद्धधातौ जायमानानां कार्याणां प्रमाणमपि तत्रैव प्रतिपादितमिति तत एव ज्ञेयम् ।

जारकः-रिका, [1]जरकः-रिका ; जरीता-जरिता-त्री जरयिता-त्री ;
[2]जीर्यन्-न्ती, जरयन्-न्ती ; जरीष्यन्-जरिष्यन्-न्ती-ती, जरयिष्यन्-न्ती-ती ;

1. 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. भ्वादौ) इति मित्त्वम् । तेन, 'मितां ह्रस्वः' (6-4-92) इत्युपधाया ह्रस्वो भवति । एवं सर्वत्र ण्यन्ते बोध्यम् ।
2. 'दिवादिभ्यः—' (3-1-69) इति श्यन् विकरणप्रत्ययः । इत्वे रपरत्वे च, 'हलि च' (8-2-77) इति दीर्घः । स्त्रियां 'शप्श्यनोर्नित्यम्' (7-1-81) इति नित्यं नुमागमः ।

A. '**अजरद्**वृषवद् विरिक्तपीडः पुनरभ्येत्य विशिष्टचित्ततापि ।' धा. का. 3.49.

— जरयमाणः, जरीष्यमाणः ; जीः-जिरौ-जिरः ; —
[1]अनुजीर्णः, जीर्णः- जीर्णम्[A]-जीर्णवान् , जरितः-तवान् ;
जरः, [2]जरन्[B], जरः ; जरीतव्यम्-जरितव्यम् , जरयितव्यम् ;
जरणीयम् , जरणीयम् ; [3]अजर्यम्[C](सङ्गतम् ) जार्यम् , जर्यम् ;
ईषज्जरः-दुर्जरः-सुजरः ; — जीर्यमाणः, जर्यमाणः ;
जारः, [4]जारः ; जरीतुम्-जरितुम् , जरयितुम् ;
[5]जरा,[D] जरणा ; जरणम् , जरणम् ;
जरीत्वा-जरित्वा, जरयित्वा ; प्रजीर्य, [6]प्रजरय्य ;
जारम् २ / जरीत्वा २-जरित्वा २ } [7]जरम् १-जारम् २ ; / जरयित्वा २. }

1. 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च' (3-4-72) इत्यनेन 'अनुजीर्णो वृषलीं देवदत्तः' इत्यत्र कर्तरि क्तप्रत्ययो भवति ।
2. 'जीर्यतेरतृन्' (3-2-104) इति ताच्छीलिक अतृन् प्रत्ययः ।
3. 'अजर्यं सङ्गतम्' (3-1-105) इति सूत्रेण नञुपसृष्टादस्माद्धातोः सङ्गतं चेद्विशेष्यं, कर्तरि यत् प्रत्ययो निपात्यते । अन्यत्र 'ऋहलोः—' (3-1-124) इति ण्यति जार्यम् इत्यपि भवति ।
4. 'दारजारौ कर्तरि, णिलुक् च, (वा. 3-3-20) इति ण्यन्तात् कर्तरि घञि णिलुकि, घञ्निमित्तिकोपधावृद्धिः । 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वस्तु नात्र प्रवर्तते ; णेर्लुका लुप्तत्वेन स्थानिवत्त्वाभावात् । 'जरयति=सुरतैः गलयति इति जारः=उपपतिः ।' इति प्रक्रियासर्वस्वे ।
5. षित्त्वेन, 'षिद्भिदादिभ्योऽङ्' (3-3-104) इत्यङि, 'ऋदृशोऽङि गुणः' (7-4-16) इति गुणः ।
6. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
7. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ उपधायाः दीर्घविकल्पः।
A. 'देहि प्रभोः प्रेष्य सुसोढनाय मे जीर्णांशुकाय त्वमजीर्णमंशुकम्॥' धा. का. 2.57.
B. 'यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर ॥' भ. का. 6. 134.
C. 'तेन सङ्गतमार्येण रामाजर्यं कुरुद्रुतम् ।' भ. का. 6. 54.
D. 'तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥' रघुवंशे—1, 23.



(621) "जेषृ गतौ" (I-भ्वादिः-616. सक. सेट्. आत्म.)

जेषकः-षिका, जेषकः-षिका, जिजेषिषकः-षिका, जेजेषकः-षिका ;
जेषिता-त्री, जेषयिता त्री, जिजेषिषिता-त्री, जेजेषिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि ।
क्विपि-जेट्-जेड्-जेषौ-जेषः, इति रूपाणि इति विशेषः । [A]जेषः ।

(622) "जेहृ प्रयत्ने" (I-भ्वादिः-644. अक. सेट्. आत्म.)

'जेहतिर्गत्यर्थोऽपि ।' इति मा. धा. वृत्तौ ।

जेहकः-हिका, जेहकः-हिका, जिजेहिषकः-षिका, जेजेहकः-हिका ;
जेहिता-त्री, जेहयिता-त्री, जिजेहिषिता-त्री, जेजेहिता-त्री ; जेहमानः,
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगेपतिवत् (429) ज्ञेयानि । क्विपि
[1]झेट्-झेड्-जेहौ-जेहः इति रूपाणि । जेहः[B] । जेढिः[2] ।

(623) "जै क्षये" (I-भ्वादिः-914. अक. अनि. पर.)

[3]जायकः-यिका, [4]जापकः-पिका, [5]जिजासकः-सिका, [6]जाजायकः-यिका ;
जाता-त्री, जापयिता-त्री, जिजासिता-त्री, जाजायिता-त्री ;
[7]जायन्-न्ती, जापयन्-न्ती, जिजासन्-न्ती ; —
जास्यन्-न्ती-ती, जापयिष्यन्-न्ती-ती, जिजासिष्यन्-न्ती-ती ; —
— जापयमानः, जापयिष्यमाणः, — जाजायमानः, जाजायिष्यमाणः ;

1. क्विपि, 'हो ढः' (8-2-31) इति ढत्वे, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति भष्भावे, चर्त्वविकल्पे च रूपद्वयम् ।
2. क्तिनि, ढत्वधत्वष्टुत्वढलोपाः ।
3. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यनैमित्तिके आत्त्वे, 'आतो युक् चिण्-कृतोः' (7-3-38) इति युगागमः । एवं घञि णमुल्यपि ज्ञेयम् ।
4. आत्त्वे, आदन्तलक्षणः पुगागमः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
5. द्वित्वे, 'सन्यतः' (7-4-79) इतीत्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
6. यङि, द्वित्वे, अभ्यासस्य 'दीर्घोऽकितः' (7-4-86) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
7. '—अशिति' (6-1-45) इति प्रतिषेधात् पूर्वमायादेशे रूपम् ।
8. 'येषणात्सहरिर्जेषसम्भ्रमाञ्चेषितस्मृतिरपेषितो रथात् ॥' धा. का. 1-78.
B 'प्लीहायितासुरभरक्षतिवेहितोर्वीभैषज्यजेहपरया निजबाहयैव ॥' धा. का. 1.81.

| | | | |
|---|---|---|---|
| [1]प्रजाः-प्रजौ-प्रजाः ; | — | — | — |
| जातम्-तः, | जापितः, | जिजासितः, | जाजायितः-तवान् ; |
| [2]प्रजः, [3]जायः, | जापः, | जिजासुः, | [4]जाजः ; |
| जातव्यम्, | जापयितव्यम्, | जिजासितव्यम्, | जाजायितव्यम् ; |
| जानीयम्, | जापनीयम्, | जिजासनीयम्, | जाजायनीयम् ; |
| [5]जेयम्, | जाप्यम्, | जिजास्यम्, | जाजाय्यम् ; |
| [6]ईषज्जानः-दुर्जानः-सुजानः ; | — | — | — |
| जायमानः, | जाप्यमानः, | जिजास्यमानः, | जाजाय्यमानः ; |
| जायः, | जापः, | जिजासः, | जाजायः ; |
| जातुम्, | जापयितुम्, | जिजासितुम्, | जाजायितुम् ; |
| जातिः, | [7]प्रजा, जापना, | जिजासा, | जाजाया ; |
| [A]जानम्, | जापनम्, | जिजासनम्, | जाजायनम् ; |
| जात्वा, | जापयित्वा, | जिजासित्वा, | जाजायित्वा ; |
| प्रजाय, | प्रजाप्य, | प्रजिजास्य, | प्रजाजाय्य ; |
| जायम् २, जात्वा २, | जापम् २, जापयित्वा २, | जिजासम् २, जिजासित्वा २, | जाजायम् २ ; जाजायित्वा २. |

1. क्विपि, सोः रुत्वविसर्गौ । आकारान्तोऽयं शब्दः ।
2. 'आतश्चोपसर्गे' (3-1-136) इति कप्रत्ययः । 'आतो लोपः—' (6-4-64) इत्याकारलोपः ।
3. 'श्याद्व्यधास्रु—' (3-1-141) इति कर्तरि णप्रत्ययः ।
4. यङन्तादचि, 'न धातुलोप—' (1-1-4) इति सूत्रप्रत्याख्यानपक्षे, यङवयवाकारस्यातो लोपे यङो लुकि, अल्लोपस्य स्थानिवद्भावात् 'आतो लोप इटि च' (6-4-64) इत्युत्तरखण्डस्थाकारलोपः ।
5. यति, आत्वे, 'ईद्यति' (6-4-65) इतीत्त्वे गुणः ।
6. 'आतो युच्' (3-3-128) इति खलपवादो युच् ।
7. 'आतश्चोपसर्गे' (3-3-106) इत्यङ् ।
A. 'खाताशयोऽक्षाममुदा पुनश्च मग्नोऽन्यथाऽपश्यदजानमीशम् ॥' धा. का. 2.31.



## (624) "ज्ञप मारणतोषणनिशामनेषु"

(X-चुरादिः-1625. सक. सेट्. उभ. मित्.)

'जानातीति श्नि सिद्ध्येत्, ज्ञपयति तु पुनर्मारणादौ घटादेः
णौ(चौ) मित्त्वेऽपीदमेव 'ज्ञप मिद्' [ज्ञपनम्] इति पदं ज्ञापने मारणादौ ।
तेनार्थाज् ज्ञापनेऽर्थे ज्ञपयतिपदवज् ज्ञापयेदित्यपि स्याद्
उक्तस्योक्तिः 'णिचश्चे' (१-३-७४) त्युदितविहतये ; ज्ञापयेज् 'ज्ञा नियोगे ॥'
(श्लो. 8) इति देवः ।

अत्र **क्षीरस्वामी** घटादौ 'मारणतोषणनिशानेषु **ज्ञा**' इति, चुरादौ '**ज्ञप** मारणतोषणनिशानेषु मिच्च' इति चापठत् । पशुं संज्ञपयति, विष्णुं विज्ञपयति, शस्त्रं प्रज्ञपयति, इति क्रमेणोदाजहार च । मारणाद्यर्थेषु ज्ञपधातोः पुनर्मित्त्वविधानं व्यर्थमित्याशङ्क्य, स्वार्थे णिचि, एष्वर्थेषु मित्त्वसिद्धिः फलमिति, चुरादिण्यन्तेभ्यः कर्तृगामिन्यपि क्रियाफले परस्मैपदमेव भवतीति चाभिहितवान् । एवञ्च सति, 'प्रच्छ **ज्ञीप्सायाम्**', 'श्लाघह्नुङ्स्थाशपां **ज्ञीप्स्यमानः**' (1-4-34) इत्यादिषु क्रमेण ज्ञानज्ञापनार्थयोः प्रतीयमानत्वात्, **वृत्तिन्यासपदमञ्जर्यादि**भिस्तथैवाभ्युपगतत्वात् तत्र च मित्त्वप्रयुक्तकार्याणां दर्शनाच्च, **क्षीरस्वामि**मते तयोः प्रयोगयोरसङ्ग्रहः स्यात् । तदर्थं **माधवीयधातुवृत्त्यादि**बहुग्रन्थानुरोधेनात्र '**ज्ञप मिच्च**' इत्येव पाठः प्रामाणिकः । यथाप्रयोगं ज्ञाने, ज्ञापने च ज्ञपधातुर्मिद् भवतीति सूत्रार्थः । अत एव **सिद्धान्तकौमुद्याम्** 'अयं धातुर्ज्ञाने, ज्ञापने च' इत्येवोक्तम् । घटादौ 'निशामनेषु' इति पाठेन चाक्षुषज्ञानव्यतिरिक्तेऽर्थे मित्त्वाभावः प्रतीयते । अत्र च बोधने मित्त्वं बोध्यते । एवञ्च, विज्ञापयति, विज्ञपयति इति रूपद्वयस्यापि साधुत्वं बोध्यम् । '**तज्ज्ञापयत्याचार्यः**' (महाभाष्यम्), '**विज्ञापना** भर्तृषु सिद्धिमेति ।' इत्यादिप्रयोगेषु न काऽप्यनुपपत्तिः । अत एव **पुरुषकारे** (श्लो. 8) 'एवञ्च, '**ज्ञप मिच्च**' इत्येव पाठो युक्ततमः ।' इत्युक्तं सङ्गच्छते ॥

[1]ज्ञपकः-पिका, जिज्ञपयिषकः-षिका, —

1. मित्संज्ञकत्वादस्य धातोर्णौ परत उपधाया वृद्धौ, 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वः । एवं सर्वत्र ज्ञेयम् ।

[1]ज्ञीप्सकः-प्सिका ; ज्ञपयिता-त्री, जिज्ञपयिषिता-त्री, ज्ञीप्सिता-त्री ;
ज्ञपयन्-न्ती, [A]विज्ञपयन्, जिज्ञपयिषन्-न्ती, ज्ञीप्सन्-न्ती ;
ज्ञपयिष्यन्-न्ती-ती, जिज्ञपयिषिष्यन्-न्ती-ती, ज्ञीप्सिष्यन्-न्ती-ती ;
ज्ञपयमानः, जिज्ञपयिषमाणः, ज्ञीप्समानः ;
ज्ञपयिष्यमाणः, जिज्ञपयिषिष्यमाणः, ज्ञीप्सिष्यमाणः ;
[2]प्रज्ञप्-प्रज्ञब्-प्रज्ञपौ-प्रज्ञपः ; — —
[3]ज्ञपितः-ज्ञप्तः-ज्ञप्तवान्, जिज्ञपयिषितः-ज्ञीप्सितः-तवान् ;
ज्ञपः, जिज्ञपयिषुः-ज्ञीप्सुः; ज्ञपयितव्यम्, जिज्ञपयिषितव्यम्-ज्ञीप्सितव्यम् ;
ज्ञपनीयम्, जिज्ञपयिषणीयम्-ज्ञीप्सनीयम् ; ज्ञप्यम्, जिज्ञपयिष्यम्-ज्ञीप्स्यम् ;
ईषज्ज्ञपः-दुर्ज्ञपः-सुज्ञपः ; — —
ज्ञप्यमानः, जिज्ञपयिष्यमाणः-ज्ञीप्स्यमानः ; ज्ञपः, जिज्ञपयिषः-ज्ञीप्सः ;
ज्ञपयितुम्, जिज्ञपयिषितुम्-ज्ञीप्सितुम् ; ज्ञपना, [4]ज्ञप्तिः, जिज्ञपयिषा-ज्ञीप्सा ;
ज्ञपनम्, जिज्ञपयिषणम्-ज्ञीप्सनम् ; ज्ञपयित्वा, जिज्ञपयिषित्वा-ज्ञीप्सित्वा ;
[5]विज्ञपय्य, प्रजिज्ञपयिष्य-प्रज्ञीप्स्य ;
[6]ज्ञपम् २-ज्ञापम् २, ज्ञपयित्वा २, } जिज्ञपयिषम् २-ज्ञीप्सम् २ ; जिज्ञपयिषित्वा २-ज्ञीप्सित्वा २. }

---

1. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इति सूत्रेण सन इड्विकल्पः। इडभावपक्षे, 'आप्ज्ञप्यृधामीत्' (7-4-55) इतीत्त्वे, 'सन्यङोः' (6-1-9) इति द्वित्वे, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपे रूपमेवम्। एवं सन्नन्ते सर्वत्रेडभावपक्षे रूपम्, इट्पक्षे तु **जिज्ञपयिषकः** इत्यादीनि रूपाणीति च ज्ञेयम्।
2. क्विपि, क्विब्लोपे, णिलोपे चर्त्वविकल्पे च रूपम्।
3. 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' (7-2-27) इति सूत्रेण इण्णिषेधो विकल्पेन भवति। तेन रूपद्वयम्।
4. बाहुलकात् क्तिन्। 'तितुत्र—' (7-2-9) इतीण्णिषेधः।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
6. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः।

A. 'चाणूर एनमथ **विज्ञपयन्** नृपाज्ञां चण्डातकं सुयमयंश्चहको बभाषे।'
धा. का. 3.25



## (625) "ज्ञा अवबोधने"

(IX-क्र्यादिः-1507. सक. अनि. पर. मित्।) घ्वादिः।

'जानातीति श्नि सिद्ध्येत्, ज्ञपयति तु पुनर्मारणादौ घटादेः
णौ[चौ]मित्त्वेऽपीदमेव ज्ञपनमिति [ज्ञप मिद् इति] पदं ज्ञापने मारणादौ।
तेनार्थाज्ज्ञापनेऽर्थे ज्ञपयतिपदवज् ज्ञापयेदित्यपि स्यात् ;
उक्तस्योक्तिः, 'णिचश्च' (1-3-74) त्युदितविहतये ; ज्ञापयेत्—
'ज्ञा नियोगे'॥ (श्लो. 8) इति **देवः**।

[1]ज्ञायकः-यिका, [2]ज्ञापकः-[3]ज्ञपकः-पिका, [4]जिज्ञपयिषकः-षिका, ज्ञीप्सकः-प्सिका, [5]जिज्ञासकः-सिका, [6]जाज्ञायकः-यिका ;
ज्ञाता-त्री, ज्ञापयिता-ज्ञपयिता-त्री, जिज्ञपयिषिता-ज्ञीप्सिता-त्री, जिज्ञासिता-त्री, जाज्ञायिता-त्री ;

---

1. '**आतो** युक् चिण्कृतोः' (7-3-33) इति ण्वुलि परतो युगागमः। एवं घञि णमुल्यपि ज्ञेयम्।
2. मारणाद्यर्थस्याप्रतीत्या, अत्र मित्त्वं न ; अतः, उपधाह्रस्वो न। एवं सर्वत्र ण्यन्ते मारणाद्यर्थाप्रतीतौ ज्ञेयम्।
3. घटादौ 'मारणतोषणनिशामनेषु ज्ञा' (ग. सू. भ्वादौ) इति जानातेः मित्संज्ञायाम्, आदन्तलक्षणे पुगागमे उपधाह्रस्वे रूपमेवम्। एवं ण्यन्ते ह्रस्वघटितरूपस्योपपत्तिः सर्वत्र ज्ञेया।
4. अस्य धातोर्ण्यन्तात् सनि रूपाणि प्रदर्शितानि। तत्र हेतुस्तु—'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इति सूत्रेण ण्यन्तात् परस्य सन इड्विकल्प एव। इट्पक्षे **जिज्ञपयिषकः** इति रूपम्। एवं इट्पक्षे सर्वत्र ण्यन्तात् सनि रूपं ज्ञेयम्। इडभावपक्षे, 'आप्ज्ञप्यृधामीत्' (7-4-55) इतीत्त्वे, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपे च रूपम्—**ज्ञीप्सकः** इत्यादि। एवं ण्यन्तात् सनि इडभावपक्षे रूपं ज्ञेयम्।
5. द्वित्वे, अभ्यासस्य, 'सन्यतः' (7-4-79) इतीत्वे रूपम्। एवं सन्नन्ते सर्वत्र रूपं ज्ञेयम्।
6. द्वित्वे, अभ्यासस्य, 'दीर्घोऽकितः' (7-4-83) इति दीर्घः। एवं यङन्ते सर्वत्र ज्ञेयम्।

[1]जानन्[A]-ती, [मातुः] [2]सञ्जानन्, [पितुः] प्रतिजानन्, [स्वां गां] [3]जानन्, ज्ञापयन्-ज्ञपयन्-न्ती, जिज्ञपयिषन्-ज्ञीप्सन्-न्ती, [पुत्रं] [4]अनुजिज्ञासन्[B]-न्ती ; ज्ञास्यन्-न्ती-ती, ज्ञापयिष्यन्-न्ती-ती, जिज्ञपयिषिष्यन्-न्ती-ती, ज्ञीप्सिष्यन्-न्ती-ती, [पुत्रं] अनुजिज्ञासिष्यन्-न्ती-ती ; —
[शतं] [5]अपजानानः,[C] [सर्पिषो] [6]जानानः, [शतं] [7]सञ्जानानः, [सहस्रं] प्रतिजानानः, [गां] [8]जानानः, [स्वां गां] [9]जानानः, ज्ञापयमानः-ज्ञपयमानः, जिज्ञपयिषमाणः-ज्ञीप्समानः, [धर्मं] [10]जिज्ञासमानः,[D] [शतं]

---

1. 'क्र्यादिभ्यः—' (3-1-81) इति श्ना विकरणप्रत्ययः । ''**ज्ञाजनोर्जा**' (7-3-79) इति जादेशे, 'श्नाऽभ्यस्तयोः—' (6-4-112) इत्याकारलोपे नुमि च रूपम् । अस्य प्वादित्वेऽपि 'प्वादीनां ह्रस्वः' (7-3-80) इति ह्रस्वो न, '**जा**' इति दीर्घादेशविधानसामर्थ्यात् । एवं **जानानः** इत्यत्रापि प्रक्रिया ज्ञेया ।
2. 'संप्रतिभ्यामनाध्याने' (1-3-46) इत्यत्र 'अनाध्याने' इत्युक्तत्वात्, प्रकृते शानज् न । **आध्यानम्**=उत्कण्ठापूर्वकं स्मरणम् ।
3. 'विभाषोपपदेन प्रतीयमाने' (1-3-77) इत्यत्र शानचो विकल्पितत्वात्, पक्षे शता भवति ।
4. 'ज्ञाश्रुस्मृदृशां सनः' (1-3-57) इति विहितस्य शानचोऽनुपूर्वके सन्नन्ते '**नानोर्ज्ञः**' (1-3-58) इति निषेधात् शता भवति ।
5. 'अपह्नवे ज्ञः' (1-3-44) इति **जानातेः** शानच् । शतं अपलपत इत्यर्थः ।
6. 'अकर्मकाच्च' (1-3-45) इत्यात्मनेपदं शानच् । सर्पिषोपायेन प्रवर्तत इत्यर्थः । '**ज्ञो**ऽविदर्थस्य करणे' (2-3-51) इति सूत्रेण, करणस्य शेषत्वेन विवक्षितत्वे षष्ठी ।
7. 'संप्रतिभ्यामनाध्याने' (1-3-46) इति शानच् । शतम् अपेक्षमाणः, सहस्रम् अङ्गीकुर्वाणः इति क्रमेणार्थः ।
8. 'अनुपसर्गाज्ज्ञः' (1-3-76) इति कर्त्रभिप्राये शानच् । उपसर्गसमभिव्याहारे तु **प्रतिजानन्** इत्येव भवति ।
9. 'विभाषोपपदेन प्रतीयमाने' (1-3-77) इति शानज्विकल्पः ।
10. 'ज्ञाश्रुस्मृदृशां सनः' (1-3-57) इति सन्नन्तात् शानच् ।

A. '**जानन्** अनादिविहितानपराधवर्गान् स्वामिन् भयात् किमपि वक्तुमहं न शक्तः ।' **वरदराजपञ्चाशति** 3.
B. '**अनुजिज्ञासते**वाथ लङ्कादर्शनमिन्दुना ।' भ. का. 8. 35.
C. 'आत्मान**मपजानानः** शशमात्रोऽनयद् दिनम् ।
**ज्ञास्ये** रात्राविति **प्राज्ञः प्रत्यज्ञास्त** क्रियापटुः ॥' भ. का. 8.26.
D. 'प्रेम **जिज्ञासमानाभ्यः** ताभ्योऽशप्सत कामिनः ॥' भ. का. 8.33.



[1]अपजिज्ञासमानः, [सर्पिषो] जिज्ञासमानः, [शतं] सञ्जिज्ञासमानः, [सहस्रं] प्रतिजिज्ञासमानः, [औषधस्य] [2]अनुजिज्ञासमानः, जाजायमानः ;
[3][शतं] अपज्ञास्यमानः, ज्ञापयिष्यमाणः-ज्ञपयिष्यमाणः, जिज्ञपयिषिष्यमाणः-ज्ञीप्सिष्यमाणः, [शतं] अपजिज्ञासिष्यमाणः, जाज्ञायिष्यमाणः ;
[4]सुज्ञाः-सुज्ञौ-सुज्ञः ; — — —
[A]ज्ञातम्-ज्ञातः-ज्ञातवान्, ज्ञापितः-ज्ञपितः-[5]ज्ञप्तः, जिज्ञपयिषितः-ज्ञीप्सितः, जिज्ञासितः, जाज्ञायितः-तवान् ;
[6]ज्ञः, [B]अज्ञः, [7]पथिप्रज्ञः,[C] [8]प्राज्ञः, [D]अभिज्ञः, [9]नयज्ञः,[E]

---

1. अत्र सर्वत्र 'पूर्ववत् सनः' (1-3-62) इत्यात्मनेपदं, शानच् ।
2. 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान्' (परिभाषा 62) इति न्यायेन '**नानोर्ज्ञः**' (1-3-58) इति निषेधः, 'ज्ञाश्रुस्मृदृशां सनः' (1-3-57) इत्यस्यैव बाधकः, न तु 'पूर्ववत् सनः' (1-3-62) इत्यस्य ; तेन 'पूर्ववत्—' (1-3-62) इति शानच् भवति ।
3. 'अपह्नवे ज्ञः' (1-3-44) इति शानच् । एवं पूर्वोक्तेषु सर्वेष्वप्युदाहरणेषु स्यप्रत्यये शानजन्तानि रूपाणि स्वयमूह्यानि ।
4. क्विपि, रुत्वविसर्गौ भवतः । आकारान्तोऽयं शब्दः ।
5. 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' (7-2-27) इति ण्यन्तात् निष्ठायां मित्त्वपक्षे इडभावो विकल्पेन निपातितः । तेन रूपद्वयं बोध्यम् ।
6. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः । आदन्तलक्षणण-प्रत्ययस्यापवादः ।
7. प्रकर्षेण पन्थानं जानातीति **पथिप्रज्ञः** । 'प्रे दाज्ञः' (3-2-6) इति कप्रत्ययः । '**आतो** लोप इटि च' (6-4-64) इति आकारलोपः ।
8. '**आत**श्चोपसर्गे' (3-1-136) इति कप्रत्ययः । आकारलोपः । प्रकर्षेण आ=समन्तात् जानातीति **प्राज्ञः**=पण्डितः ।
9. '**आतो**ऽनुपसर्गे कः' (3-2-3) इति कर्मोपपदे कर्तरि कप्रत्ययः । आकारलोपः ।

A. 'न **ज्ञातं** तात यत्नस्य पौर्वापर्यममुष्य ते ।' **किरातार्जुनीये** 11.42.
B. 'व्रीताशबृंहितजुषाभ्रिणता गजेन प्रक्षेतु**मज्ञ**मनसा समनुद्रुतेन ।' धा. का. 3.9.
C. 'विश्वासप्रदवेषोऽसौ **पथिप्रज्ञः** समाहितः ।' भ. का. 6.90.
D. 'इन्द्रजिद्विक**माभिज्ञो** मन्वानो वानरं जितम् ॥' भ. का. 9.52.
E. 'इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमर**नयज्ञः** सादयिष्यन्नरातिम् ।' **किरातार्जुनीये** 16.63.

[1]मनसाऽऽज्ञायी, [A]नीतिज्ञः, ज्ञापः-ज्ञपः, जिज्ञपयिषुः-ज्ञीप्सुः, जिज्ञासुः, [B]जिज्ञापयिषुः, [2]जाज्ञः ;

ज्ञातव्यम्, ज्ञापयितव्यम्-ज्ञपयितव्यम्, जिज्ञपयिषितव्यम्-ज्ञीप्सितव्यम्, जिज्ञासितव्यम्, जाज्ञायितव्यम् ;

ज्ञानीयम्, ज्ञापनीयम्-ज्ञपनीयम्, जिज्ञपयिषणीयम्-ज्ञीप्सनीयम्, जिज्ञासनीयम्, जाज्ञानीयम् ;

ज्ञेयम्, ज्ञाप्यम्-ज्ञप्यम्, जिज्ञपयिष्यम्-ज्ञीप्स्यम्, जिज्ञास्यम्, जाज्ञाय्यम् ;

[3]ईषज्ज्ञानः-दुर्ज्ञानः-सुज्ञानः ; — — —

ज्ञायमानः, ज्ञाप्यमानः-ज्ञप्यमानः, जिज्ञपयिष्यमाणः-ज्ञीप्स्यमानः, जिज्ञास्यमानः, जाज्ञाय्यमानः ;

ज्ञायः, ज्ञापः-ज्ञपः, जिज्ञपयिषः-ज्ञीप्सः, जिज्ञासः, जाज्ञायः ;

ज्ञातुम्, ज्ञापयितुम्-ज्ञपयितुम्, जिज्ञपयिषितुम्-ज्ञीप्सितुम्, जिज्ञासितुम्, जाज्ञायितुम् ;

[4]ज्ञातिः, [5]आज्ञा,[C] अनुज्ञा, [6]उपज्ञा, [D]उपज्ञम्, संज्ञा, प्रज्ञा,

---

1. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति ताच्छील्ये णिनिः । 'मनसः संज्ञायाम्' (6-3-4) इति स्थिते, '**आज्ञायिनि** च' (6-3-5) इति तृतीयाया अलुक् ।
2. यङन्तात् पचाद्यचि यङवयवस्याकारस्यातो लोपे, यङोऽवशिष्टस्य लुकि, अल्लोपस्य स्थानिवद्भावादाकारलोपे च रूपम् ।
3. '**आतो** युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच् ।
4. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तिच् ।
5. '**आत**श्चोपसर्गे' (3-3-106) इत्यङ् ।
6. उपज्ञायते **इत्युपज्ञा** । कर्मण्यङ् । '**पाणिन्युपज्ञं व्याकरणम्**' इत्यत्र **पाणिनि**कर्तृकप्राथमिकज्ञानविषयो व्याकरणमित्यर्थः । '**उपज्ञो**पक्रमं तदाद्याचिख्यासायाम्' (2-4-21) इति नपुंसकत्वम् ।

A. '**नीतिज्ञा नियतिज्ञा वेदज्ञा** अपि भवन्ति **शास्त्रज्ञाः** ।
**ब्रह्मज्ञा** अपि सुलभाः **स्वाज्ञानज्ञानिनो** विरलाः ॥'
**नी. दीक्षितस्य वैराग्यशतके** 27.

B. 'त्वां **जिज्ञापयिषू** शक्तिं बुभूर्षू नु जगन्ति किम् ।' भ. का. 9.37.

C. 'तस्य निर्वर्त्यं कर्तव्यं सुग्रीवो राघव**आज्ञया** ।' भ. का. 6.145.

D. 'अथ प्राचेत**सोपज्ञं** रामायणमितस्ततः ।' **रघुवंशे** 15.63.



[A]आज्ञापना-ज्ञपना, जिज्ञपयिषा-ज्ञीप्सा, जिज्ञासा, जाज्ञा ;

ज्ञानम्, ज्ञापनम्-ज्ञपनम्, जिज्ञपयिषणम्-ज्ञीप्सनम्, जिज्ञासनम्, जाज्ञायनम् ;

ज्ञात्वा, ज्ञापयित्वा-ज्ञपयित्वा, जिज्ञपयिषित्वा-ज्ञीप्सित्वा, जिज्ञासित्वा, जाज्ञायित्वा ;

विज्ञाय, अनुज्ञाप्य-[1]अनुज्ञपय्य, प्रजिज्ञपयिष्य-प्रज्ञीप्स्य, प्रजिज्ञास्य, प्रजाज्ञाय्य ;

ज्ञायम् २, ज्ञात्वा २, } ज्ञापम् २-[2]ज्ञपम् २-ज्ञापम् २, ज्ञापयित्वा २-ज्ञपयित्वा २, } जिज्ञपयिषम् २, जिज्ञपयिषित्वा २,

ज्ञीप्सम् २, ज्ञीप्सित्वा २, } जिज्ञासम् २, जिज्ञासित्वा २, } जाज्ञायम् २ ; जाज्ञायित्वा २. }

## (626) "**ज्ञा नियोगे**" (X-चुरादिः-1733. सक. सेट्. उभ.)

स्वभावादयं धातुराङ्पूर्वः । **नियोगः** = प्रेरणम् ।

'जानातीति श्नि सिध्येत्, ज्ञपयति तु पुनर्मारणादौ घटादेः
णौ[चौ], मित्त्वेऽपीदमेव ज्ञपनमिति [ज्ञप मिदिति] पदं ज्ञापने मारणादौ ।
तेनार्थज्ज्ञापनेऽर्थे ज्ञपयतिपदवत्—ज्ञापयेदित्यपि स्यात् ;
उक्तस्योक्तिः—'णिचश्च' (1-3-74) त्युदितविहतये ; ज्ञापयेत्—
'ज्ञा नियोगे' ॥' (श्लो. 8) इति देवः ।

आज्ञापकः-पिका,[A] आज्ञापनम्, इत्यादीनि सर्वाण्यपि रूपाणि मारणाद्यतिरिक्तार्थस्य ज्ञाधातोः (625) ण्यन्ते यानि प्रदर्शितानि तान्येवात्रापि बोध्यानि। ण्यन्तात् सनि तु इमानि रूपाणीति विशेषः । आजिज्ञापयिषकः-षिका, आजिज्ञापयिषिता-त्री, आजिज्ञापयिषन्-न्ती, आजिज्ञापयिषिष्यन्-न्ती-ती; आजिज्ञापयिषमाणः, अजिज्ञापयिषिष्यमाणः; आजिज्ञापयिट्-यिषौ-यिषः; आजिज्ञापयिषितः-तवान्, आजिज्ञापयिषुः, आजिज्ञापयिषितव्यम्, आजि-

---

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति मित्पक्षे ण्यन्ताल्ल्यपि णेरयादेशः ।
2. मित्त्वपक्षे ण्यन्ताण्णमुलि 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः ।

A 'आज्ञापनामिह विभाज्य नृपेण दृष्टौ
तौ शर्धनाय समयातयतां नियुद्धम् ॥' धा. का. 3. 40.

ज्ञापयिषणीयम्, आजिज्ञापयिष्यम्, ईषदाजिज्ञापयिषः-दुराजिज्ञापयिषः-स्वाजिज्ञापयिषः, आजिज्ञापयिष्यमाणः, आजिज्ञापयिषः, आजिज्ञापयिषितुम्, आजिज्ञापयिषा, आजिज्ञापयिषणम्, जिज्ञापयिषित्वा, आजिज्ञापयिष्य, आजिज्ञापयिषम् २ जिज्ञापयिषित्वा २ ;

## (627) "ज्या वयोहानौ" (IX-क्रयादिः-1499. अक. अनि. पर.)

**प्वादिः, ल्वादिः, ग्रह्यादिश्च ।**

[1]ज्यायकः-यिका, [2]ज्यापकः-पिका, [3]जिज्यासकः-सिका, [4]जेजीयकः-यिका ;
ज्याता-त्री, ज्यापयिता-त्री, जिज्यासिता-त्री, जेजीयिता-त्री ;
[5]जिनन्-ती, ज्यापयन्-न्ती, जिज्यासन्-न्ती ; —
ज्यास्यन्-न्ती-ती, ज्यापयिष्यन्-न्ती-ती, जिज्यासिष्यन्-न्ती-ती ; —
— ज्यापयमानः, — जेजीयमानः ;
— ज्यापयिष्यमाणः, — जेजीयिष्यमाणः ;
[6]प्रजीः-प्रज्यौ-प्रज्यः ; — — —
[7]जीनम्-[A]जीनः-जीनवान्, ज्यापितः, जिज्यासितः, जेजीयितः-तवान् ;

---

1. '**आतो** युक् चिण्कृतोः' (7-3-33) इति णिति कृति प्रत्यये परे युगागमः । एवं णे, घञि, णमुलि च ज्ञेयम् ।
2. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति आदन्तलक्षणः पुगागमो बोध्यः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. द्वित्वे, हलादिशेषे, अभ्यासघटकाकारस्य 'सन्यतः' (7-4-79) इतीत्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
4. यङि, 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां **ङिति** च' (6-1-16) इति सम्प्रसारणे, पूर्वरूपे, 'हलः' (6-4-2) इति दीर्घे द्वित्वे, अभ्यासस्य गुणे च रूपम् । एवं यङन्ते सर्वत्र प्रक्रियोह्या ।
5. '**क्र्यादिभ्यः**—' (3-1-81) इति श्ना विकरणप्रत्ययः । तस्य ङिद्वद्भावाद् अङ्गस्य सम्प्रसारणम् । पूर्वरूपं दीर्घश्च । '**प्वादीनां** ह्रस्वः' (7-3-80) इति ह्रस्वः । '**श्नाऽभ्यस्तयोरातः**' (6-4-112) इत्याकारलोपः ।
6. क्विपि, सम्प्रसारणपूर्वरूपदीर्घेषु सत्सु रूपम् । द्विवचने 'एरनेकाचः—' (6-4-82) इति यण् ।
7. निष्ठायाम्, सम्प्रसारणादिषु सत्सु, '**ल्वादिभ्यः**' (8-2-44) इति निष्ठानत्वम्

A. 'इत्थं हरौ गृणति हृष्टितपकोऽपि कोपी
**जीनोऽप्यहं** न तु रिणामि भियेति वादी ।' धा. का. 3.8.



[1]ब्रह्मज्यः, प्रज्यः, [2]ज्यायः, ज्यापः, जिज्यासुः, [3]जेज्यः ;
ज्यातव्यम्, ज्यापयितव्यम्, जिज्यासितव्यम्, जेजीयितव्यम् ;
ज्यानीयम्, ज्यापनीयम्, जिज्यासनीयम्, जेजीयनीयम् ;
[4]ज्येयम्, ज्याप्यम्, जिज्यास्यम्, जेजीय्यम् ;
[5]ईषज्ज्यानः-दुर्ज्यानः-सुज्यानः ; — —
जीयमानः, ज्याप्यमानः, जिज्यास्यमानः, जेजीय्यमानः ;
ज्यायः, ज्यापः, जिज्यासः, जेजीयः ;
ज्यातुम्, ज्यापयितुम्, जिज्यासितुम्, जेजीयितुम् ;
[6]ज्यानिः, ज्यापना, जिज्यासा, जेजीया ;
ज्यानम्, ज्यापनम्, जिज्यासनम्, जेजीयनम् ;
[7]जीत्वा, ज्यापयित्वा, जिज्यासित्वा, जेजीयित्वा ;
[8]प्रज्याय, प्रज्याप्य, प्रजिज्यास्य, प्रजेजीय्य ;
ज्यायम् २, जीत्वा २, } ज्यापम् २, ज्यापयित्वा २, } जिज्यासम् २, जिज्यासित्वा २, } जेजीयम् २ ; जेजीयित्वा २. }

## (628) "ज्युङ् गतौ" (I-भ्वादिः-956. अक. अनि. आत्म.)

ज्यावकः-विका, ज्यावकः-विका, जुज्यूषकः-षिका, जोज्यूयकः-यिका ;
[A]ज्युतम्, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकच्यवतिवत् (558)

---

1. ब्रह्म जिनातीति **ब्रह्मज्यः** । वयोहानिरूपार्थे धातुरकर्मकोऽपि, धातूनामनेकार्थकत्वेन चिन्तनाद्यर्थे सकर्मकत्वम् । 'कविधौ सर्वत्र सम्प्रसारणिभ्यो डः' (वा. 3-2-3) इति डप्रत्यये, डित्वसामर्थ्यादभस्यापि टेर्लोपे, रूपम् । एवं '**प्रज्यः**' इत्यत्र '**आत**श्चोपसर्गे' (3-1-136) इति कप्रत्ययस्थलेऽपि डो ज्ञेयः ।
2. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इत्यादिना कर्तरि णप्रत्ययः । युगागमः ।
3. अच्प्रत्ययनिमित्तके यङो लुकि, 'न धातुलोपः—' (1-1-4) इति निषेधे, 'एरनेकाचः—' (6-4-82) इति यणादेशः ।
4. 'ईद्यति' (6-4-65) इति ईत्वे, गुणे रूपम् ।
5. '**आतो** युच्' (3-3-128) इति ईषदाद्युपपदे खलपवादो युच् । अनादेशः ।
6. 'ग्लाम्लाज्याहाभ्यो निः' (वा. 3-3-94) इति क्तिनोऽपवादः निप्रत्ययः ।
7. क्त्वायाम्, सम्प्रसारणपूर्वरूपदीर्घाः ।
8. '**ज्यश्च**' (6-1-42) इति ल्यपि सम्प्रसारणनिषेधः ।

A. 'स्तोत्रावमानैर्द्रुतवेणुवीणैश्च्युताशुभैर्व्योमचरैर्ज्युतं ते ।' धा. का 2.36.

ज्ञेयानि । ण्यन्तात् सनि ' स्रवतिशृणोति—' (7-4-81) इत्यादिना विहितः अभ्यासस्येत्वविकल्पो नास्य भवति—जुज्यावयिषकः-षिका, इत्येव रूपम्, इति विशेषः ।

(629) " **ज्रि अभिभवे** " (I-भ्वादिः- 947. सक. अनि. पर.)

' **अभिभवः**=न्यूनीकरणम्, न्यूनीभवनं च । आद्ये सकर्मकः, द्वितीये त्वकर्मकः ।' इति **सि. कौमुदी । क्षीरस्वामी** तु ' जृ ' इति पठति । तन्मते जारकः, जरन् इत्यादीनि रूपाणि । **देवः क्षीरस्वामिसम्मतपाठस्या**-नुकूलः । यदाह—' जृणाति जीर्यति जरत्येकार्थे जारयत्यपि । (श्लो. 39) ' इति । **धातुकाव्ये** तु ' ज्रि अभिभवे ' इति पठित्वा, तदनुगुणः प्रयोगोऽपि प्रदर्शितः । यथा—

' श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिता**ज्रितारिम्** ।' (2-35) इति ।

ज्रायकः-यिका, ज्रायकः-यिका, जिज्रीषकः-षिका, जेज्रीयकः-यिका ;
ज्रेता-त्री, ज्राययिता-त्री, जिज्रीषिता-त्री, जेज्रीयिता-त्री ;
ज्रयन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि जिधातूपादानेन विहितानि कार्याणि विना, तद्वत् (599) बोध्यानि ।

(630) "**ज्रि वयोहानौ**" (X-चुरादिः-1816.सक. सेट्. उभ. **आधृषीयः**।)

" जृ—' इति चौरादिकधातोर्नन्दिसम्मतः पाठ एवम् " इति **मा. धा. वृत्तौ ।** आधृषीयत्वेनास्य धातोर्णिज्विकल्पः । णिच्पक्षे, णिजभावपक्षे च, शुद्धात् सन्नन्तात् यङन्ताच्च जिधातुवत् (599) धातुस्वरूपनिबन्धनकार्याणि विना बोध्यानि । ण्यन्तात् सनि तु—

जिज्राययिषकः-षिका, जिज्राययिषिता-त्री, जिज्राययिषन्-न्ती, जिज्राय-यिषिष्यन्-न्ती-ती, जिज्राययिषमाणः, जिज्राययिषिष्यमाणः, जिज्राययिट्-यिषौ-यिषः, जिज्राययिषितः-तवान्, जिज्राययिषुः, जिज्राययिषितव्यम्, जिज्राययिषणीयम्, जिज्राययिष्यम्, ईषज्जिज्राययिषः-दुर्जिज्राययिषः-सुजि-ज्राययिषः, जिज्राययिष्यमाणः, जिज्राययिषः, जिज्राययिषितुम्, जिज्राय-यिषा, जिज्राययिषणम्, जिज्राययिषित्वा, प्रजिज्राययिष्य, जिज्राययिषम् २, जिज्राययिषित्वा २ ; इति रूपाणीति विशेषः ।



(631) " **ज्वर रोगे** " (I-भ्वादिः-776. अक. सेट्. पर. घटादिः ।)

| | | | |
|---|---|---|---|
| [1]ज्वारकः-रिका, | [2]ज्वरकः-रिका, | जिज्वरिषकः-षिका, | [3]जाज्वरकः-रिका ; |
| ज्वरिता-त्री, | ज्वरयिता-त्री, | जिज्वरिषिता-त्री, | जाज्वरिता-त्री ; |
| ज्वरन्-न्ती, [A]संज्वरन्ती, | ज्वरयन्-न्ती, | जिज्वरिषन्-न्ती; | — |
| ज्वरिष्यन्-न्ती-ती, | ज्वरयिष्यन्-न्ती-ती, | जिज्वरिषिष्यन्-न्ती-ती ; | — |
| — | ज्वरयमाणः, | — | जाज्वर्यमाणः ; |
| — | ज्वरयिष्यमाणः, | — | जाज्वरिष्यमाणः ; |
| [4]जूः-जूरौ-जूरः ; | — | — | — |
| ज्वरितम्-तः-तवान्, | ज्वरितः, | जिज्वरिषितः, | जाज्वरितः-तवान् ; |
| [B]ज्वरः, [5]सञ्ज्वारी,[C] | ज्वरः, | जिज्वरिषुः, | जाज्वरः ; |
| ज्वरितव्यम्, | ज्वरयितव्यम्, | जिज्वरिषितव्यम्, | जाज्वरितव्यम् ; |
| ज्वरणीयम्, | ज्वरणीयम्, | जिज्वरिषणीयम्, | जाज्वरणीयम् ; |
| ज्वार्यम्, | ज्वर्यम्, | जिज्वरिष्यम्, | जाज्वर्यम् ; |
| ईषज्ज्वरः-दुर्ज्वरः-सुज्वरः ; | | — | — |
| ज्वर्यमाणः, | ज्वर्यमाणः, | जिज्वरिष्यमाणः, | जाज्वर्यमाणः ; |
| ज्वारः, | ज्वरः, | जिज्वरिषः, | जाज्वरः ; |
| ज्वरितुम्, | ज्वरयितुम्, | जिज्वरिषितुम्, | जाज्वरितुम् ; |

1. ' अत उपधायाः ' (7-2-116) इत्युपधाकारस्य वृद्धिः । एवं ण्यदादिषु ज्ञेयम् ।
2. अस्य धातोः घटादिपाठेन मित्त्वात्, णौ परतः उपधावृद्धौ सत्याम्, ' मितां ह्रस्वः ' (6-4-92) इति ह्रस्वो भवति । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. यङि द्वित्वादिके कृते, अभ्यासे, ' दीर्घोऽकितः ' (7-4-83) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. ' **ज्वर**त्वरस्रिव्यविमवामुपधायाश्च ' (6-4-20) इति, उपधावकारयोर्द्वौ ऊठौ । अनन्तरं सवर्णदीर्घः । ' खरवसानयोः—' (8-3-15) इति विसर्गः । **जूः**= पिशाचः ।
5. ' सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेवि**संज्वर**—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययो भवति । उपधावृद्धिः ।

A. ' ताः **संज्वरन्ती**र्गलदश्रुधारा विमोहशक्त्या हिडयन् वियोगः । ' धा. का. 2.6.
B. ' स्वेयमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ ' **शिशुपालवधे** 2.54.
C. ' **संज्वारिणेव** मनसा ध्वान्तमायासिना मया । ' भ. का. 7.6.

[1]जूर्तिः,[A] ज्वरणा, जिज्वरिषा, जाज्वरा ;
ज्वरणम् , ज्वरणम् , जिज्वरिषणम् , जाज्वरणम् ;
ज्वरित्वा, ज्वरयित्वा, जिज्वरिषित्वा, जाज्वरित्वा ;
प्रज्वर्य, [2]प्रज्वरय्य, प्रजिज्वरिष्य, प्रजाज्वर्य ;
ज्वारम् २, ज्वरित्वा २, } [3]ज्वरम् २-ज्वारम् २, ज्वरयित्वा २, } जिज्वरिषम् २, जिज्वरिषित्वा २, } जाज्वरम् २ ; जाज्वरित्वा २. }
[4]जूर्णिः.

(632) "**ज्वल दीप्तौ**" (I-भ्वादिः-831-804. अक. सेट्. पर.)

**घटादिः, ज्वलादिश्च ।**

ज्वालकः-लिका, [5]ज्वलकः-ज्वालकः, [6]प्रज्वलकः-लिका, जिज्वलिषकः-षिका, जाज्वलकः-लिका ;
ज्वलिता-त्री, ज्वलयिता-ज्वालयिता-प्रज्वलयिता-त्री, जिज्वलिषिता-त्री, जाज्वलिता-त्री ;
ज्वलन्-न्ती, ज्वलयन्-ज्वालयन्-प्रज्वलयन्-न्ती, जिज्वलिषन्-न्ती ; —
ज्वलिष्यन्-न्ती-ती, ज्वलयिष्यन्-ज्वालयिष्यन्-प्रज्वलयिष्यन्-न्ती-ती, जिज्वलिषिष्यन्-न्ती-ती ; —
— ज्वलयमानः-ज्वालयमानः-प्रज्वलयमानः, — [B]जाज्वल्यमानः ;

1. 'तितुत्र—' (7-2-9) इति, इण्णिषेधः । 'ज्वरत्वर—' (6-4-20) इत्युपधाव-कारयोरूठौ भवतः ।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
3. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।
4. 'वीज्याज्व**रिभ्यो** निः' [द. उ. 1-18] इति निप्रत्ययः । ज्वरति, ज्वरणं वा **जूर्णिः**=रोगः । अत्र धातोः सम्प्रसारणोठादयो यथासम्भवमूह्याः ।
5. '**ज्वल**ह्वलह्मलनमामनुपसर्गाद्वा' (गणसूत्रं घटादौ) इति अनुपसृष्टे मित्संज्ञा विकल्पिता । मित्त्वपक्षे, 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वः । मित्त्वाभावपक्षे, उपधावृद्धिः । एवम् अनुपसृष्टे ण्यन्ते सर्वत्र रूपत्रयं ज्ञेयम् ।
6. उपसर्गसमभिव्याहारे तु घटादिषु पाठान्नित्यं मित्संज्ञा । तदानीं **प्रज्वलकः**, **सञ्ज्वलकः** इत्यादीनि रूपाणि ण्यन्ताद्भवन्ति । एवं सोपसर्गाण्ण्यन्ते सर्वत्र मित्कार्यं ज्ञेयम् ।

A. 'सुहृन्मनो**जूर्ति**कृतस्तथापि तस्मान्मदीयान्वयनाशवांशः ।' वा. वि. 3.28.
B. '**जाज्वल्यमाना** जगतः शान्तये समुपेयुषी ।' **शिशुपालवधे** 2.3.



— ज्वलयिष्यमाणः-ज्वालयिष्यमाणः-प्रज्वलयिष्यमाणः, — जाज्वलिष्यमाणः ;
[1]ज्वल्-ज्वलौ-ज्वलः ; — — —
ज्वलितम्-तः, ज्वलितः-ज्वालितः-[A]प्रज्वलितः, जिज्वलिषितः, जाज्वलितः-तवान् ;
[2]ज्वालः-[B]ज्वाला, ज्वलः,[C] [3]ज्वलनः, [4]प्रज्वाली, ज्वलः-ज्वालः, जिज्वलिषुः, जाज्वलः ;
ज्वलितव्यम् , ज्वलयितव्यम्-ज्वालयितव्यम्-प्रज्वलयितव्यम् , जिज्वलिषितव्यम् , जाज्वलितव्यम् ;
ज्वलनीयम् , ज्वलनीयम्-ज्वालनीयम्-प्रज्वलनीयम् , जिज्वलिषणीयम् , जाज्वलनीयम् ;
ज्वाल्यम् , ज्वल्यम्-ज्वाल्यम्-प्रज्वल्यम् , जिज्वलिष्यम् , जाज्वल्यम् ;
ईषज्ज्वलः-दुर्ज्वलः-सुज्वलः ; — — —
ज्वल्यमानः, ज्वल्यमानः-ज्वाल्यमानः-प्रज्वल्यमानः, जिज्वलिष्यमाणः, जाज्वल्यमानः ;
ज्वालः, ज्वलः-ज्वालः-प्रज्वलः, जिज्वलिषः, जाज्वलः ;
ज्वलितुम् , ज्वलयितुम्-ज्वालयितुम्-प्रज्वलयितुम् , जिज्वलिषितुम् , जाज्वलितुम् ;
[5]ज्वलितिः, ज्वलना-ज्वालना-प्रज्वलना, जिज्वलिषा, जाज्वला ;

1. 'न पदान्ताः परेऽणः सन्ति' इति पक्षो **भाष्यासम्मतः** । अतोऽत्र पदान्ते लकारश्रवणं न दोषाय ।
2. '**ज्वलिति**कसन्तेभ्यो णः' (3-1-140) इति कर्तरि वा णप्रत्ययो भवति । स्त्रियां 'अजाद्यतष्टाप्' (4-1-4) इति टाप् । णप्रत्ययाभावपक्षे तु पचाद्यचि (3-1-134), **ज्वलः** इत्यपि भवति ।
3. 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' (3-2-150) इति ताच्छीलिको युच् । अनादेशः । **ज्वलनः**=अग्निः ।
4. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।
5. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति पर्युदासात् **भणितिः** ईत्यत्रेव इडागमो भवति ।

A. 'वनाम किं **प्रज्वलितो** हरेण सोऽद्यापि यद्विह्वलयन्ननङ्गः ॥' धा. का. 2.10.
B. '**ज्वालेन** तापेन चला जडाङ्गीरटालशोकट्वलितप्रतापाः ॥' धा. का. 2.21.
C. 'लिम्पैरिव तनोर्वातैश्वेत्यः स्याज्ज**ज्वलो** न कः ॥' भ. का. 6.80.

ज्वलनम्, ज्वलनम्-ज्वालनम्-प्रज्वलनम्, जिज्वलिषणम्, जाज्वलनम्; ज्वलित्वा, ज्वलयित्वा-ज्वालयित्वा, जिज्वलिषित्वा, जाज्वलित्वा; प्रज्वल्य, [1]संज्वलय्य-प्रज्वलय्य, प्रजिज्वलिष्य, प्रजाज्वल्य;

ज्वालम् २, } [2]ज्वलम् २-ज्वालम् २, प्रज्वलम् २, } जिज्वलिषम् २, }
ज्वलित्वा २, } ज्वलयित्वा २-ज्वालयित्वा २, } जिज्वलिषित्वा २, }
जाज्वलम् २; }
जाज्वलित्वा २. }

(633) "**झट सङ्घाते**" (I-भ्वादि:-306. अक. सेट्. पर.)

**सङ्घात:**=संहननम्, मिश्रीकरणं च।

झाटक:-टिका, झाटक:-टिका, जिझटिषक:-षिका, जाझटक:-टिका; [A]झाट:, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कठ**तिवत् (148) ज्ञेयानि।

(634) "**झमु अदने**" (I-भ्वादि:-472. सक. सेट्. पर.) **मित्।**

झमक:-मिका, झमक:-मिका, [3]जिझमिषक:-षिका, जञ्झमक:-मिका; झमिता-त्री, झमयिता-त्री, जिझमिषिता-त्री, जञ्झमिता-त्री; [B]झमन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**छम**तिवत् (564) ज्ञेयानि।

(635) "**झर्झ परिभाषणहिंसातर्जनेषु**" (I-भ्वादि:-718. सक. सेट्. पर.)

झर्झक:-र्झिका, झर्झक:-र्झिका, जिझर्झिषक:-षिका, जाझर्झक:-र्झिका; झर्झन्-न्ती, [4]झर्झर:[C], इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चर्च**तिवत् (505) ज्ञेयानि।

---

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेश:।
2. 'चिण्णमुलो:—' (6-4-93) इति णमुल्परे णौ दीर्घविकल्प:।
3. सनि, 'छे च' (6-1-73) इति तुक् नात्र प्रवर्तते, इति छमुधातो:, अस्य च विशेष:।
4. बाहुलकात् अर:=**झर्झर:**=वाद्यविशेष:।

A. 'अशोटनीयै: सुधियामसेटकैर्युतान् जटा**झाट**धरैश्च केश्चन॥' धा. का. 1.40.

B. 'चान्तामिषश्छान्तजल: फलावलीं जान्त्वा **झम**ञ्जेमनमक्रमीद् गुहाम्॥' धा. का. 1.60.

C. 'जीमूतचर्चिरव**झर्झर**वाद्यहृद्यं
तेनैव चानुपिसितो निलयं पिपेस॥' धा. का. 1.89.



(636) "**झर्झ परिभाषणभर्त्सनयो:**" (VI-तुदादि:-1300. सक. सेट्. पर.)

शत्रन्तात् स्त्रियां परं झर्झन्ती-[A]झर्झती, इति रूपम्। अन्यानि सर्वाण्यपि रूपाणि भौवादिक**चर्च**तिवत् (505) बोध्यानि।

(637) "**झष हिंसार्थ:**" (I-भ्वादि:-689. सक. सेट्. पर.)

'झषेज्झषेत संवृत्यामादाने, हिंसने झषेत्।' (श्लो. 168) इति **देव:।**

झाषक:-षिका, झाषक:-षिका, जिझषिषक:-षिका, जाझषक:-षिका; [B]झष:, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**खष**तिवत् (346) ज्ञेयानि।

(638) "**झष आदानसंवरणयो:**" (I-भ्वादि:-891. सक. सेट्. उभ.)

'झषेज्झषेत संवृत्यामादाने, हिंसने झषेत्।' (श्लो. 168) इति **देव:।**

झाषक:-षिका, झाषक:-षिका, जिझषिषक:-षिका, जाझषक:-षिका; झषन्-न्ती, झषमाण:, [C]झषित्वा, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चष**तिवत् (513) ज्ञेयानि।

(639) "**झॄ वयोहानौ**" (IX-क्र्यादि:-1494. अक. सेट्. पर.)

**प्वादि:, ल्वादिश्च।**

'जॄ वयोहानौ' (618) इत्यस्य पाठभेदोऽयम्। झारक:-रिका, झारक:-रिका, जिझरीषक:-जिझरिषक:-जिझीर्षक:-षिका, जेझिरक:-रिका; इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक**जॄणा**तिवत् (618) ज्ञेयानि।

(640) "**झॄष् वयोहानौ**" (IV-दिवादि:-1131. अक. सेट्. पर.)

झारक:-रिका, झारक:-रिका, जिझरीषक:-जिझरिषक:-जिझीर्षक:-षिका; जेझिरक:-रिका; [D]अझीर्णम्, इत्यादीनि रूपाणि दैवादिक**जीर्य**तिवत् (620) ('जॄष्' इति धातुस्वरूपोपादानेन विहितानि कार्याणि विना) ज्ञेयानि। जीर्यतेर्मित्त्वाण्णौ मितां ह्रस्वो भवति, अस्य तु नेति विशेष:।

---

A. 'चर्चन्ती कटु **झर्झती** बुधजनं दोषे त्वचि त्वर्चती
नित्यं भूपतिमुज्जनोज्झितमना यत्रास्त खल्या सुखम्॥' धा. का. 2.73.

B. 'इत्युक्त: सुरकाषिखाषिणमसावूचे जगच्छेषकान्
नित्यं ते जषते **झषा**दिवपुषे रक्षश्चमूशाषिणे।' धा. का. 1.87.

C. 'लाषेण चाषांश्छषिनान् **झषित्वा** प्रभ्लक्ष्य भक्षन्ति यदम्बु नीचा:।' धा. का. 2.28.

D. 'देहि प्रभो: प्रैष्य सुसोहनाय मे जीर्णांशुकाय: त्वम**झीर्ण**मंशुकम्॥' धा. का. 2.57.

(641) **" टकि बन्धने "** (X-चुरादिः-1639. सक. सेट्. उभ.)

टङ्ककः-ङ्किका, टिटङ्कयिषकः-षिका, [1]टङ्ककः-ङ्किका, टिटङ्किषकः-षिका, टाटङ्ककः-ङ्किका ; [2]विटङ्कः,[A] [3]टङ्कः, इत्यादीनि सर्वाण्यपि रूपाणि चौरादि-**कचम्पयतिवत्** (499) ज्ञेयानि ।

(642) **" टल वैक्लव्ये "** (I-भ्वादिः-834. अक. सेट्. पर. ज्वलादिः ।)
'—वैप्लव्ये', विप्लव एव वैप्लव्यम्' इति **क्षीरस्वामी** । 'वैकल्ये' इति **धातुकाव्ये** (2-21) ।

टालकः-लिका, टालकः-लिका, टिटलिषकः-षिका, टाटलकः-लिका ; [B]टालः-टलः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चल**धातुवत् (510) ज्ञेयानि । घटादिकार्यं तु नास्य भवतीति विशेषः ।

(643) **" टिकृ गतौ "** (I-भ्वादिः-103. सक. सेट्. आत्म.)

टेककः-किका, टेककः-किका, टिटेकिषकः-टिटिकिषकः-षिका, टेटिककः-किका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**किट**धातुवत् (190) ज्ञेयानि । अस्य धातोरात्मनेपदित्वात् टेकमानः, इति शानचि रूपमिति तस्मादस्य विशेषः ।

(644) **" टीकृ गतौ "** (I-भ्वादिः-104. सक. सेट्. आत्म.)

टीककः-किका, टीककः-किका, टिटीकिषकः-षिका, टेटीककः-किका, [4]टीका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चीभति**वत् (530) ज्ञेयानि ।

(645) **" टुल वैक्लव्ये "** (I-भ्वादिः-835. अक. सेट्. पर.) **ज्वलादिः** ।

टुालकः-लिका, टुालकः-लिका, टिटुलिषकः-षिका, टाटुलकः-लिका ;

1. इदित्करणाण्णिचो विकल्पः । तेन णिजभावपक्षे क्रमेण शुद्धात् सन्नन्तात् यङन्ताच्च रूपाणि ।
2. वीन्=पक्षिणः टङ्कयति=बध्नातीति **विटङ्कः**=कपोतपालिका । 'कर्मण्यण्' (3-2-1) इत्यण् । 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम् ।' **इत्यमरः** ।
3. टङ्कयन्त्यनेनेति **टङ्कः**=आयुधविशेषः । संज्ञायां घः ।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः । **टीका**=व्याख्या ।

A. 'सौधे **विटङ्क**जुषि पश्यति धूसितोऽयं राजारिकीटबलचूर्णनयाऽतिपूज्यः ।' धा. का. 3.27.

B. 'ज्वालेन तापेन चलैा जडाङ्गी**टाल**शोकटुलितप्रतापाः ॥' धा. का. 2.21.



[A]टुलितः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चलति**वत् (510) ज्ञेयानि ।

(646) **"डप सङ्घाते"** (X-चुरादिः-1677. अक. सेट्. आत्म. **आकुस्मीयः**)

डापकः-पिका, डिडापयिषकः-षिका, डापयमानः, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**गालयति**वत् (388) ज्ञेयानि । [B]संडापितः ।

(647) **" डिप क्षेपे "** (IV-दिवादिः-1232. सक. सेट्. पर.)

'सङ्घाते डेपयेतेति, क्षेपे डिपति डिप्यति ।' (श्लो० 134) इति **देवः** ।

[C]डेपकः-पिका, डेपकः-पिका, डिडेपिषकः-डिडिपिषकः-षिका, डेडिपकः-पिका; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**कुप्यति**वत् (224) ज्ञेयानि ।

(648) **" डिप क्षेपे "** (VI-तुदादिः-1371. सक. सेट्. पर. **कुटादिः** ।)

डेपकः-पिका, डेपकः-पिका, डिडिपिषकः-षिका, डेडिपकः-पिका ; [D]डिपन्-न्ती-ती, डिपित्वा, इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि ।

(649) **" डिप क्षेपे "** (X-चुरादिः-1672. सक. सेट्. उभ.)

'डेपयेदिति चत्वारि णिचि शे श्यनि णौ डिपेः ॥' (श्लो. 134) इति **देवः** ।

डेपकः-पिका, डिडेपयिषकः-षिका ; डेपयिता-त्री, डिडेपयिषिता-त्री ; डेपयन्-न्ती, डिडेपयिषन्-न्ती ; डेपयिष्यन्-न्ती-ती, डिडेपयिषिष्यन्-न्ती-ती ; डेपयमानः, डिडेपयिषमाणः ; डेपयिष्यमाणः, डिडेपयिषिष्यमाणः ; डेप्-डेपौ-डेपः ; डेपितम्-तः, डिडेपयिषितः-तवान् ; डेपः, [1]प्रतिमल्लडेपी,[E]

1. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।

A. 'ज्वालेन तापेन चला जडाङ्गीरटालशोक**टुलित**प्रतापाः ॥' धा. का. 2.21.

B. '**संडापितः** सदसि डेपितवृष्णिवीरे भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥' धा. का. 3.33.

C. 'रुष्यद्रिष्यदराति**डेपक** विभो कोपादिगोपो न ते
किञ्चायोप्यविरोपिलोपक न वा लोभादिसंक्षोभिता ।' धा. का. 2.67.

D. 'ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवितै-
र्गुंजद्भिरपि सैनिकैः सुगुडितां **डिपद्भि**र्जनान् ।' धा. का. 2-80.

E. 'इत्थं वदत्यसुरजासिनि पिण्डिताय:-
स्थेमाऽथ रोषितमतिः **प्रतिमल्लडेपी** ।' धा. का. 3-32.

डिडेपयिषुः ; डेपयितव्यम् , डिडेपयिषितव्यम् ; डेपनीयम् , डिडेपयिषणीयम् ; डेप्यम्, डिडेपयिष्यम् ; ईषड्डेपः-दुर्डेपः-सुडेपः ; डेप्यमानः, डिडेपयिष्यमाणः ;- डेपः, डिडेपयिषः ; डेपयितुम् , डिडेपयिषितुम् ; डेपना, डिडेपयिषा ; डेपनम् , डिडेपयिषणम् ; डेपयित्वा, डिडेपयिषित्वा ; प्रडेप्य, प्रडिडेपयिष्य ;

डेपम् २, } डिडेपयिषम् २ ; }
डेपयित्वा २, } डिडेपयिषित्वा २. }

(650) "**डिप सङ्घाते**" (X-चुरादिः-1678. अक. सेट्. आत्म.)

**आकुस्मीयः** । [अ]

'सङ्घाते डेपयेतेति, क्षेपे डिपति डिप्यति ।
डेपयेदिति चत्वारि णिचि शे श्यनि णौ डिपेः ॥' (श्लो. 134) इति **देवः** ।

डेपकः-पिका, डिडेपयिषकः-षिका, डेपयमानः, डेपितः,[A] इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**डेपयति**वत् (649) ज्ञेयानि । अस्य धातोराकुस्मीयत्वात् 'आकुस्मादात्मनेपदिनः' (ग. सू. चुरादौ) इति आत्मनेपदमेव । तेन शत्रादेशघटितानि रूपाण्यस्य धातोर्नेति तस्मादस्य विशेषः ।

(651) "**डीङ् विहायसा गतौ**" (I-भ्वादिः-968-अक. सेट्. आत्म.) [आ]

'विहायसां गतौ डीङो डयते डीयते पदे ॥' (श्लो. 20) इति **देवः** ।

[1]डायकः-यिका, डायकः-यिका, [2]डिडयिषकः-षिका, डेडीयकः-यिका ;
डयिता-त्री, डाययिता-त्री, डिडयिषिता-त्री, डेडीयिता-त्री ;
— डाययन्-न्ती, डाययिष्यन्-न्ती-ती ; — —

1. 'अचो ञ्णिति' (7-2-115) इति वृद्धौ, आयादेशः ।
2. अस्य धातोरुदात्तत्वात् सन इडागमो भवति । उत्तरखण्डे गुणायादेशौ । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

अ. "**डबि डिबि**' इति **चन्द्रः**। **विडम्बयति** । **आडम्बरः**। डिम्बयति। **डिम्बम्**=शस्त्रकलहः । " इति **क्षीरस्वामी** । प्रदर्शितप्रयोगानुसारेण **डबि-डिबि**धात्वोरपि पाठः समीचीन इति प्रतिभाति ।

A. 'संडापितः सदसि **डेपित**वृष्णिवीरे भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥'
धा. का. 3·33.

आ. '**विहायसां गतौ**' इति दैवसम्मतं पाठमनूद्य, '**विहायसां**=विहगानाम्' इति **पुरुषकारे** व्याख्यातम् । 'आकाशगतौ' इति, 'विहायसि गतौ' इति च **केचिद**र्थं वर्णयन्ति ।



डयमानः, डाययमानः, डिडयिषमाणः, डेडीयमानः ;
डयिष्यमाणः, डाययिष्यमाणः, डिडयिषिष्यमाणः, डेडीयिष्यमाणः ;
उड्डीः-[1]उड्डयौ-उड्डयः ; — —
[2]डयितः-डियितः-तम् , डायितः, डिडयिषितः, डेडीयितः-तवान् ;
डयः, डायः, डिडयिषुः, [3]डेडयः ;
डयितव्यम्, डाययितव्यम्, डिडयिषितव्यम् , डेडीयितव्यम् ;
डयनीयम् , डायनीयम् , डिडयिषणीयम् , डेडीयनीयम् ;
डेयम् , डाय्यम् , डिडयिष्यम् , डेडीय्यम् ;
ईषड्डयः-दुर्डयः-सुडयः ; — — —
डीयमानः, डाय्यमानः, डिडयिष्यमाणः, डेडीय्यमानः ;
[4]डयः, डायः, डिडयिषः, डेडीयः ;
डयितुम् , डाययितुम् , डिडयिषितुम् , डेडीयितुम् ;
[5]डीतिः[A] सुडीतिः, डायना, डिडयिषा, डेडीया ;
डयनम् , डायनम् , डिडयिषणम् , डेडीयनम् ;
डयित्वा , डाययित्वा, डिडयिषित्वा, डेडीयित्वा ;
उड्डीय, उड्डाय्य, उड्डिडयिष्य, उड्डेडीय्य ;
डायम् २, } डायम् २, } डिडयिषम् २, } डेडीयम् २ ; }
डयित्वा २, } डाययित्वा २, } डिडयिषित्वा २, } डेडीयित्वा २. }

1. क्विपि, द्विवचने, 'एरनेकाचः—' (6-4-82) इति यणादेशः ।
2. '**निष्ठा शीङ्**—' (1-2-19) इत्यत्र '**निष्ठा**' इति योगविभागमभ्युपगम्य, अन्यत्रापि क्वचित् सेटो निष्ठायाः कित्त्वनिषेधात् गुणायादेशयोः सतोः **डयितः-डयितवान्** इति रूपं **पारायणिकाः** साधयन्ति । योगविभागानभ्युपगमे, 'अचि श्नुधातु—' (6-4-77) इतीयङादेशे **डियितः-डियितवान्** इति रूपमिति **केचिद्**वर्णयन्ति ।
3. यङन्तात् पचाद्यचि, यङो लुकि, 'एरनेकाचः—' (6-4-82 इति यणादेशः ।
4. 'एरच्' (3-3-56) इति भावे घञपवादोऽच्प्रत्ययः ।
5. 'तितुत्र—' (7-2-9) इतीण्णिषेधः ।

A. 'पूताखिलं मूतबलिं **सुडीतौ** ताक्ष्यें स्थितं प्राप्य तरामि मायाम् ॥'
धा. का. 2.37.

(652) "डीङ् विहायसा गतौ" (IV-दिवादि:-1135.अक.सेट्.आत्म.)

स्वादि: ।

" विहायसां गतौ डीङो डयते डीयते पदे ॥ " (श्लो. 20) इति देव: ।

डायक:-यिका, डायक:-यिका, डिडयिषक:-षिका, डेडीयक:-यिका ;
डयिता-त्री, डाययिता-त्री, डिडयिषिता-त्री, डेडीयिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकडीङ् (651) धातुवत् बोध्यानि । अस्य दिवादौ पाठात् डीयमान: इति शानचि श्यन् भवति । निष्ठायाम्-[A]डीन:, डीनवान्; इति रूपे भवत: । अस्य स्वादिषु पाठसामर्थ्यात् 'स्वादय ओदित: ' (ग. सू. दिवादि:) इति ओदित्त्वातिदेशात 'ओदितश्च' (8-2-45) इति निष्ठानत्वं भवति । अस्य धातो: उदात्तत्वेऽपि स्वादिषु पाठसामर्थ्यात निष्ठायाम् इडभावो बोध्य: । यदि इडागम: स्यात् तेन व्यवधानान्नत्वं न भवेत् । ततश्च स्वादिपाठो विफल: स्यात् ।

(653) " ढौकृ गतौ " (I-भ्वादि:-98. सक, सेट्. आत्म.)

ढौकक:-किका, ढौकक:-किका, [1]डुढौकिषक:-षिका, [2]डोढौकक:-किका ;
ढौकिता-त्री, ढौकयिता-त्री, डुढौकिषिता-त्री, डोढौकिता-त्री ;
—— ढौकयन्-न्ती, ढौकयिष्यन्-न्ती-ती ; ——
ढौकमान:, ढौकयमान:, डुढौकिषमाण:, डोढौक्यमान: ;
ढौकिष्यमाण:, ढौकयिष्यमाण:, डुढौकिषिष्यमाण:, डोढौकिष्यमाण: ;
ढौक्-ढौग्-ढौकौ-ढौक: ; —— —— ——
ढौकितम्-त:, ढौकित:, डुढौकिषित:, डोढौकित:-तवान् ;
ढौक:, [3]ढौकन:, ढौक:, डुढौकिषु:, डोढौक: ;

1. सनि द्वित्वे, अभ्यासस्य, 'एच इग्घ्रस्वादेशे' (1-1-48) इत्यनेनान्तरतम्या-दौकारस्य उकाररूप: ह्रस्व: । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

2. यङन्तात् ण्वुलि, अभ्यासस्य ह्रस्वे, 'गुणो यङ्लुको: ' (7-4-82) इति गुण: । एवं यङन्ते सर्वत्र ज्ञेयम् ।

3. 'अनुदात्तेतश्च हलादे:' (3-2-148) इति ताच्छीलिको युच् ।

A. 'किं सूयसे गिरमदून नितान्तदीना-
**सुडीन**काकसम भूपतिधीनमेतत् ।' धा. का. 2.58.



ढौकितव्यम्, ढौकयितव्यम्, डुढौकिषितव्यम्, डोढौकितव्यम् ;
ढौकनीयम्, ढौकनीयम्, डुढौकिषणीयम्, डोढौकनीयम् ;
ढौक्यम्, ढौक्यम्, डुढौकिष्यम्, डोढौक्यम् ;
ईषड्ढौक:-दुढौंक:-सुढौक: ; —— ——
ढौक्यमान:, ढौक्यमान:, डुढौकिष्यमाण:, डोढौक्यमान: ;
ढौक:, ढौक:, डुढौकिष:, डोढौक: ;
ढौकितुम्, ढौकयितुम्, डुढौकिषितुम्, डोढौकितुम् ;
ढौका, ढौकना, डुढौकिषा, डोढौका ;
ढौकनम्, ढौकनम्, डुढौकिषणम्, डोढौकनम्,
ढौकित्वा, ढौकयित्वा, डुढौकिषित्वा, डोढौकित्वा ;
प्रढौक्य, प्रढौक्य, प्रडुढौकिष्य, प्रडोढौक्य ;
ढौकम् २, ढौकित्वा २, } ढौकम् २, ढौकयित्वा २, } डुढौकिषम् २, डुढौकिषित्वा २, } डोढौकम् २ ; डोढौकित्वा २. }

(654) " णक्ष गतौ " (I-भ्वादि:-662. सक. सेट्. पर.)

[1]नक्षक:-क्षिका, नक्षक:-क्षिका, निनक्षिषक:-षिका, नानक्षक:-क्षिका ;
नक्षिता-त्री, नक्षयिता-त्री, निनक्षिषिता-त्री, नानक्षिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि जक्षितिवत (578) ज्ञेयानि । शत्रन्ते——नक्षन्, [2]प्रणक्षन्, स्त्रियां-नक्षन्ती ; इति रूपोऽस्य धातोर्भवति ।

(655) " णख गत्यर्थ: " (I-भ्वादि:-134. सक. सेट्. पर.)

नाखक:-खिका, नाखक:-खिका, निनखिषक:-षिका, नानखक:-खिका ;
नखिता-त्री, नाखयिता-त्री, निनखिषिता-त्री, नानखिता-त्री ;
[A]नखन्-न्ती, इत्यादीनि सर्वाणि रूपाणि कख (141) धातुवद् बोध्यानि ।

(656) " णखि गत्यर्थ: " (I-भ्वादि:-135. सक. सेट्. पर.)

नङ्खक:-ङ्खिका, नङ्खक:-ङ्खिका, निनङ्खिषक:-षिका, नानङ्खक:-ङ्खिका ;

1. 'णो न:' (6-1-65) इति धात्वादेर्णकारस्य नकार: । एवं णोपदेशधातुषु सर्वत्र ज्ञेयम् ।

2. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वं भवति ।

A. 'मखत्कपोतं मदमङ्खिबर्हिणं **नख**त्पिकं **नङ्खि**तखञ्जनोत्करम् ।' धा. का. 1.19.

नङ्खिता-त्री, नङ्खयिता-त्री, निनङ्खिषिता-त्री, नानङ्खिता-त्री ; इत्यादीनि सर्वाणि रूपाणि भौवादिककखि (140) धातुवत् बोध्यानि । अस्य परस्मैपदित्वात् नङ्खन्-न्ती, नङ्खिष्यन्-न्ती-ती ; इत्यादीनि रूपाण्यस्य शतरि भवन्ति इति विशेषः ।

(657) "**णट नृत्तौ**" (I-भ्वादिः-310. (781) अक. सेट्. पर.) [अ]

**घटादिः ।**

'नृत्तौ नटत्यवस्पन्दे चुरादेर्णिचि नाटयेत् ।' (श्लो. 76) इति **देवः** ।

नाटकः-टिका, [1]प्रणटकः-प्रनाटकः-टिका, निनटिषकः-षिका, नानटकः-टिका ;
नटिता-त्री, प्रणटयिता-प्रनाटयिता-त्री, निनटिषिता-त्री, नानटिता-त्री ;
नटन्,न्ती, [2]प्रणटयन्-नटयन्, प्रनाटयन्-न्ती, निनटिषन्-न्ती ; —
नटिष्यन्-न्ती-ती, प्रणटयिष्यन्-प्रनाटयिष्यन्-न्ती-ती, निनटिषिष्यन्-न्ती-ती ;
व्यतिनटमानः, व्यतिनटिष्यमाणः, — नानट्यमानः, नानटिष्यमाणः ;
नट्-नड्-नटौ-नटः ; — — —
नटितम्-तः, नटितः-नाटितः, निनटिषितः, नानटितः-तवान् ;

1. **नृत्तनृत्ययोर**र्थयोः मित्त्वात् णौ परतः, 'मितां ह्रस्वः' (6-4-92) इत्युपधाया ह्रस्वो भवति । णोपदेशत्वाच्च णत्वमपि भवति । अन्यत्र तु मित्त्वं, णोपदेशत्वं च न । अत एव ण्यन्ते सर्वत्र रूपद्वयं प्रदर्शितम् ।

2. 'अणावकर्मकाच्चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् परस्मैपदमेव, न शानच् ।

[अ] घटादौ '**णट नृत्तौ**' इति पठ्यते । भ्वादावेव पूर्वमपि एवमेव पठितम् । अत्र घटादिपठितस्य धातोः नृत्यं, नृत्तं चार्थः । पदार्थाभिनयो **नृत्यम्** । अभिनयशून्यः शास्त्रोक्ताङ्गभङ्गरूपः गात्रविक्षेपो **नृत्तम्** ; यत्कारिषु **नर्तक**व्यपदेशः प्रसिद्धः । अनयोरर्थयोर्मित्त्वप्रयुक्तं कार्यं भवति । णोपदेशत्वमप्यस्मिन्नेवार्थे । अवस्पन्दनरूपार्थे तु मित्त्वं न । णोपदेशकारिकायाम्, '**अणाटि**' इति दीर्घघटितनिर्देशेन, दीर्घाद्वैस्य णोपदेशत्वं प्रतिषिध्यते । **क्षीरस्वामी** तु '**नतौ**' इति पठित्वा, '**नटयति** शाखाम्' इत्युदाहृत्य, '**नृतौ तु नटति, नाटयति** ।' इत्युक्तवान् । '**नृत्तौ**' इत्यस्य, **नाट्य**मित्यर्थोऽभिमत इति वक्तव्यम् ; **नृत्तनृत्ययो**रत्वर्थयोर्मित्संज्ञायाः सर्वाभिमतत्वात् । '**नट गतौ**' इत्य**न्ये** पठन्ति ।



| | | | |
|---|---|---|---|
| नटः, [1]नटी, | नटः-नाटः, | निनटिषुः, | नानटः ; |
| नटितव्यम्, | नटयितव्यम्-नाटयितव्यम्, | निनटिषितव्यम्, | नानटितव्यम् ; |
| नटनीयम्, | नटनीयम्-नाटनीयम्, | निनटिषणीयम्, | नानटनीयम् ; |
| नाट्यम्, | नट्यम्,नाट्यम्, | निनटिष्यम्, | नानट्यम् ; |
| ईषन्नटः-[2]दुर्नटः-सुनटः ; | — | — | — |
| नट्यमानः, | नट्यमानः-नाट्यमानः, | निनटिष्यमाणः, | नानट्यमानः ; |
| नाटः, | नटः-नाटः, | निनटिषः, | नानटः ; |
| नटितुम्, | नटयितुम्-नाटयितुम्, | निनटिषितुम्, | नानटितुम् ; |
| [3]नट्टिः, | नटना-नाटना, | निनटिषा, | नानटा ; |
| नटनम्, | नटनम्-नाटनम्, | निनटिषणम्, | नानटनम् ; |
| नटित्वा, | नटयित्वा-नाटयित्वा, | निनटिषित्वा, | नानटित्वा ; |
| प्रणट्य, | [4]प्रणटय्य-प्रनाट्य, | निनटिष्य, | नानट्य ; |
| नटम् २, नटित्वा २, | [5]नटम् २-नाटम् २, नटयित्वा २-नाटयित्वा २, | निनटिषम् २, निनटिषित्वा २, | नानटम् २ ; नानटित्वा २. |

(658) "**नट अवस्पन्दने**" (X-चुरादिः-1545. अक. सेट्. उभ.)

अयं धातुः न णोपदेशः । '**णोपदेशास्त्वनर्द् नाट्**' इति पर्युदासात् । अतः, 'उपसर्गादसमासेऽपि—' (8-4-14) इति णत्वं सोपसर्गे न भवति । '**अवस्यन्दने**' इत्येके ।

1. पचाद्यचि गौरादिपाठात् (4-1-41) स्त्रियां ङीष् ।

2. 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वाच्यः' (वा. 1-4-60) इति वचनात् णत्वं न । एवं णोपदेशधातुषु सर्वत्र ज्ञेयम् ।

3. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वम् ।

4. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।

5. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।

'नृतौ नटत्यवस्पन्दे चुरादेर्णिचि नाटयेत् ।' (श्लो. 76) इति देवः ।
नाटकः-टिका, निनाटयिषकः-षिका ; नाटयिता-त्री, निनाटयिषिता-त्री ; प्रनाटयन्-न्ती, निनाटयिषन्-न्ती ; नाटयिष्यन्-न्ती-ती, निनाटयिषिष्यन्-न्ती-ती; नाटयमानः, निनाटयिषमाणः; नाटयिष्यमाणः, निनाटयिषिष्यमाणः; नाड्-नाड्-नाटौ-नाटः ; नाटितम्-[A]तः, निनाटयिषितः-तवान् ; नाटः, निनाटयिषुः ; नाटयितव्यम्, निनाटयिषितव्यम् ; नाटनीयम्, निनाटयिषणीयम् ; नाट्यम्, निनाटयिष्यम् ; ईषन्नाटः-[1]दुर्नाटः, सुनाटः ; नाट्यमानः, निनाटयिष्यमाणः ; नाटः, निनाटयिषः ; नाटयितुम्, निनाटयिषितुम् ; नाटना, निनाटयिषा ; नाटनम्, निनाटयिषणम् ; नाटयित्वा, निनाटयिषित्वा ; प्रनाट्य, प्रनिनाटयिष्य ;

नाटम् २, } निनाटयिषम् २ ; }
नाटयित्वा २, } निनाटयिषित्वा २. }

## (659) "णद अव्यक्ते शब्दे" (I-भ्वादिः-54. अक. सेट्. पर.)

'नदत्यव्यक्तशब्दार्थे, भाषार्थे नादयेदिति ॥' (श्लो. 110) इति देवः ।
नादकः-दिका, नादकः-दिका, निनदिषकः-षिका, नानदकः-दिका ;
नदिता-त्री, नादयिता-त्री, निनदिषिता-त्री, नानदिता-त्री ;
[2]प्रणिनदन्[B]-न्ती, नादयन्-न्ती, निनदिषन्-न्ती ; ---
नदिष्यन्-न्ती-ती, नादयिष्यन्-न्ती-ती, निनदिषिष्यन्-न्ती-ती ; —
--- नादयमानः, नादयिष्यमाणः, नानद्यमानः, नानदिष्यमाणः ;
प्रणत्-प्रणद्-प्रणदौ-प्रणदः ; — -- --
नदितः-[3]प्रणदितः-[C]तम्, नादितः, निनदिषितः, नानदितः-तवान् ;

1. 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वाच्यः' (वा. 1-4-60) इति वचनात् णत्वं न भवति ।
2. 'नेर्गदनद—' (8-4-17) इति उपसर्गस्थान्निमित्तात् परस्य नेर्नित्यं णत्वम् ।
3. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वम् ।

A. 'ओलण्डिताद्रिरपि जालितदिव्यधामा निष्पीडितारिरनुनाटितमर्त्यभावः ।' धा. का. 3. 14.

B. 'प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव ।' भ. का. 9.99.

C. 'निपपात सम्भ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम् ।' शि. व. 9. 71.



नदः-[1]नदी, [2]कलहंसनादिनी,[A] अम्भोदनादी-खरनादी, अर्णवधीरनादिनी,[B]
नदितव्यम्, नादयितव्यम्, निनदिषितव्यम्, नानदितव्यम् ;
नदनीयम्, नादनीयम्, निनदिषणीयम्, नानदनीयम् ;
नाद्यम्, नाद्यम्, निनदिष्यम्, नानद्यम् ;
ईषन्नदः-दुर्नदः-सुनदः ; — —
नद्यमानः, नाद्यमानः, निनदिष्यमाणः, नानद्यमानः ;
नादः, [3]निनदः-[C]निनादः, नादः, निनदिषः, नानदः ;
नदितुम्, नादयितुम्, निनदिषितुम्, नानदितुम् ;
नत्तिः, नादना, निनदिषा, नानदा ;
नादः, नादः, निनदिषुः, नानदः ;
नदनम्, नादनम्, निनदिषणम्, नानदनम् ;
नदित्वा, नादयित्वा, निनदिषित्वा, नानदित्वा ;
प्रणद्य, प्रणाद्य, प्रणिनदिष्य, प्रणानद्य ;
[4]सिंहनादं विनद्य,

नादम् २, } नादम् २, } निनदिषम् २, } नानदम् २ ; }
नदित्वा २, } नादयित्वा २, } निनदिषित्वा २, } नानदित्वा २. }

[5]नदनुः,

1. पचादिषु (3-1-134) नदट् इति पाठात् टित्त्वम् । तेन स्त्रियां ङीप् ।
2. 'कर्तर्युपमाने' (3-2-79) इति णिनिः । कलहंस इव नदतीति कलहंसनादिनी । एवं अम्भोदनादी, खरनादी इत्यत्रापि ज्ञेयम् ।
3. 'नौ गदनदपठस्वनः' (3-3-64) इति निपूर्वकात् अब्विकल्पः । पक्षे घञ् ।
4. 'उपमाने कर्मणि च' (3-4-45) इति णमुल्प्रत्ययः । 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति पूर्वप्रयुक्तस्यैव धातोर्णमुल्प्रयोजकस्यानुप्रयोगः ।
5. 'चनुक् नदेश्च' (द. उ. 1-139) इति चनुक्प्रत्यये रूपम् । नदनुः=मेघः ।

A. 'पयोऽवगाढुं कलहंसनादिनी समाजुहावेव वधूः सुरापगा ॥' किरातार्जुनीये 8.27.

B. 'ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।' रघुवंशे 3.59.

C. 'श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।' भ. का. 5.53.

(660) "**णद भाषार्थः**" (X-चुरादिः-1779. सक. सेट्. उभ.)

**आस्वदीयः ।**

'नदत्यव्यक्तशब्दार्थे, भाषार्थे नादयेदिति ॥' (श्लो. 110) इति **देवः** ।
नादकः-दिका, निनादयिषकः-षिका, नादयिता-त्री, निनादयिषिता-त्री ;
[A]नादयन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि अवस्पन्दनार्थक**नट** (658) धातुवत् ज्ञेयानि ।

(661) "**णभ हिंसायाम्**" (I-भ्वादिः-752. सक. सेट्. आत्म.)

'नभ्येन्नभ्नाति नभते हिंसायां तत्तुभेः समम् ।' (श्लो. 145) इति **देवः** ।
'णभिरयमभावेऽपि वर्तते । 'नभन्तामन्यके समे' इत्यत्र, 'मा भूवन् अन्यके सर्वे' इति **निरुक्तम्** (5-23) ।' इति **मा. धा. वृत्तिः** ।

नाभकः-भिका, नाभकः-भिका, निनभिषकः-षिका, नानभकः-भिका ;
नभिता-त्री, नाभयिता-त्री, निनभिषिता-त्री, नानभिता-त्री ;
— नाभयन्-न्ती, नाभयिष्यन्-न्ती-ती ; —
नभमानः, [1]प्रणिनभमानः-प्रनिनभमानः, [2]प्रणभमानः, नाभयमानः,
निनभिषमाणः, नानभ्यमानः ;
नभिष्यमाणः, नाभयिष्यमाणः, निनभिषिष्यमाणः, नानभिष्यमाणः ;
प्रणप्-प्रणब्-प्रणभौ-प्रणभः ; — —
नभितः-तम्, नाभितः, निनभिषितः, नानभितः-तवान् ;
नभः, नाभः, निनभिषुः, नानभः ;
नभितव्यम्, नाभयितव्यम्, निनभिषितव्यम्, नानभितव्यम् ;
नभनीयम्, नाभनीयम्, निनभिषणीयम्, नानभनीयम् ;
[3]नभ्यम्[B], नाभ्यम्, निनभिष्यम्, नानभ्यम् ;
ईषन्नभः-दुर्नभः-सुनभः ; — —

1. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः ।
2. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति नित्यं णत्वम् ।
3. 'पोरदुपधात्' (3-1-98) इति यत् ।
A. 'अलोचि चान्यैः समरेऽत्र कष्टतामलोकयन् दुष्यति नादयन्नपि ।' धा. का. 3.45.
B. 'अनभ्यसन्तोभकर्कसजीवसंनाय पापध्वदयं प्रतस्थे ॥' धा. का. 2.2.



नभ्यमानः, नाभ्यमानः, निनभिष्यमाणः, नानभ्यमानः ;
नाभः, नाभः, निनभिषः, नानभः ;
नभितुम्, नाभयितुम्, निनभिषितुम्, नानभितुम् ;
[1]नब्धिः, नाभना, निनभिषा, नानभा ;
नभनम्, नाभनम्, निनभिषणम्, नानभनम् ;
नभित्वा, नाभयित्वा, निनभिषित्वा, नानभित्वा ;
प्रणभ्य, प्रणाभ्य, प्रणिनभिष्य, प्रणानभ्य ;
नाभम् २, नभित्वा २, } नाभम् २, नाभयित्वा २, } निनभिषम् २, निनभिषित्वा २, } नानभम् २ ; नानभित्वा २. }

(662) "**णभ हिंसायाम्**" (IV-दिवादिः-1240. सक. सेट्. पर.)

'नभ्येन्नभ्नाति नभते हिंसायां तत्तुभेः समम् ।' (श्लो. 145) इति **देवः** ।
नाभकः-भिका, नाभकः-भिका, निनभिषकः-षिका, नानभकः-भिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**णभ** (661) धातुवद् ऊह्यानि । अस्य दिवादौ पाठात् परस्मैपदित्वाच्च शतरि नभ्यन्-न्ती, नभिष्यन्-न्ती-ती, इत्यादीनि रूपाणि भवन्ति, इति विशेषः । [A]नभ्यम् ।

(663) "**णभ हिंसायाम्**" (IX-क्र्यादिः-1520. सक. सेट्. पर.)

'नभ्येन्नभ्नाति नभतेः हिंसायां तत्तुभेः समम् ।' (श्लो. 145) इति **देवः** ।
नाभकः-भिका, नाभकः-भिका, निनभिषकः-षिका, नानभकः-भिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**णभति**वत् (661) ज्ञेयानि । अस्य धातोः क्र्यादौ परस्मैपदिषु पाठात् शतरि-नभ्नन्-ती, नभिष्यन्-न्ती-ती ; इति रूपाणि, इति विशेषः ।

1. 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वम् । भकारस्य जश्त्वम् ।
A. '**नभ्यान्** तुभ्य विभो जयेति नुवते क्षियन् प्रमेयद्रुजं
क्षिवयन् ऋद्धिमगृध्नवेऽपि स विमृश्याक्षीयमाणां ददौ ॥' धा. का. 2.67.

## (664) “ णम प्रह्वत्वे, शब्दे च ”

(I-भ्वादिः-981. सक. अनि. पर. घटादिः । )

‘ —शब्दे च ’ इत्यर्थः **क्षीरस्वामिना** न पठ्यते ।

नामकः-मिका, [1]नमकः-नामकः-[2]प्रणमकः-मिका, [3]निनंसकः-सिका, [4]नंनमकः-नन्नमकः-मिका ;

[5]नन्ता-त्री, नमयिता-नामयिता-प्रणमयिता-त्री, निनंसिता-त्री, नंनमिता-नन्नमिता-त्री ;

नमन्-न्ती, नमयन्-नामयन्-प्रणमयन्-न्ती, [6]उन्नामयन्, निनंसन्-न्ती ; —

नंस्यन्-न्ती-ती, नमयिष्यन्-नामयिष्यन्-प्रणमयिष्यन्-न्ती-ती, निनंसिष्यन्-न्ती-ती ; —

— नमयमानः-नामयमानः-प्रणमयमानः, — नंनम्यमानः ;

— नमयिष्यमाणः-नामयिष्यमाणः-प्रणमयिष्यमाणः, — नंनमिष्यमाणः ;

---

1. ‘ज्वलह्वलह्मल**नमामनुपसर्गाद्वा**’ (ग. सू. घटादौ) इति, उपसर्गसमभिव्याहाराभावे मित्संज्ञा विकल्प्यते । मित्त्वपक्षे उपधाह्रस्वः । एवं ण्यन्ते सर्वत्रोपसर्गसमभिव्याहाराभावे रूपद्वयं बोध्यम् ।
2. उपसर्गसमभिव्याहारे तु ‘जनीजृष्क्नसुरञ्जोऽ**मन्ताश्च**’ (ग. सू. घटादौ) इत्यनेनामन्तत्वात् नित्यं मित्त्वम् । तेन णौ उपधाह्रस्वः । ‘उपसर्गादसमासेऽपि **णोपदेशस्य**’ (8-4-14) इति णत्वम् । एवम् उपसर्गसमभिव्याहारे सर्वत्र ज्ञेयम् ।
3. सन्नन्तात् ण्वुलि, ‘नश्चापदान्तस्य झलि’ (8-3-24) इति अनुस्वारः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
4. ‘नुगतोऽनुनासिकान्तस्य’ (7-4-85) इति नुगागमः । ‘नुकाऽनुस्वारो लक्ष्यते’ इति **भाष्ये** उक्तम् । ‘स च पदान्तवद्वाच्यः’ (वा. 7-4-85) इति वचनात् पक्षे ‘वा पदान्तस्य’ (8-4-59) इति परसवर्णविकल्पः । एवं यङन्ते सर्वत्र रूपद्वयं बोध्यम् ।
5. अस्य धातोरनुदात्तत्वात् ‘एकाच उपदेशेऽनुदात्तात्’ (7-2-10) इतीण्णिषेधः । वलाद्यार्धधातुके सर्वत्र एवं बोध्यम् ।
6. उपसर्गसमभिव्याहारे नित्यं मित्त्वात्, **उन्नामयन्** इत्यस्य साधुत्वाय घञन्ता- **दुन्नाम**शब्दात् ‘तत्करोति तदाचष्टे’ (वा. 3-1-26) इति णिजन्तात् शता कल्पनीयः इति **सिद्धान्तकौमुदी** ।



[1]प्रणान्-प्रणामौ-प्रणामः ; — — —

[2]नतम्-नतः-नतवान्, नमितः-नामितः-प्रणमितः, निनंसितः, नंनमितः-तवान् ;

नमः, [3]नूनमः, [4]प्रणामी, [5]नप्ता, [6]नेमिः, [7]नमनः, [8]नम्रः,-प्रणम्रः,[A] नमः-नामः-प्रणमः, निनंसुः, नंनमः ;

नन्तव्यम्, नमयितव्यम्-नामयितव्यम्-प्रणमयितव्यम्, निनंसितव्यम्, नंनमितव्यम् ;

नमनीयम्, नमनीयम्-नामनीयम्-प्रणमनीयम्, निनंसनीयम्, नंनमनीयम् ;

[9]नम्यम्, नम्यम्-नाम्यम्-प्रणम्यम्, निनंस्यम्, नंनम्यम् ;

ईषन्नमः-[10]दुर्नमः-सुनमः ; — — —

नम्यमानः-नम्यमानः-नाम्यमानः-प्रणम्यमानः, निनंस्यमानः, [B]नंनम्यमानः ;

---

1. क्विपि, ‘अनुनासिकस्य क्विझलोः—’ (6-4-15) इति उपधादीर्घे, ‘मो नो धातोः’ (8-2-64) इति नत्वे, णत्वे च रूपम् ।
2. ‘**अनुदात्तोपदेश**वनतितनोत्यादीनाम्—’ (6-4-37) इत्यनुनासिकलोपः । एवं **नतिः नत्वा** इत्यात्रापि नलोपो बोध्यः ।
3. नून् नमयतीति **नूनमः** । ण्यन्तात्, अन्तर्भावितण्यन्तात् शुद्धाद्वा धातोः पचाद्यच् । ‘क्षुभ्नादिषु च’ (8-4-39) इत्यत्र पाठात् णत्वं न । एवं **नूनमन**मित्यत्रापि ज्ञेयम् ।
4. ताच्छील्ये णिनिः । णत्वम् ।
5. ‘तृन्’ (3-2-135) इति ताच्छीलिके तृनि, ‘अप्तृन्तृच्स्वसृ**नप्तृ**—’ (6-4-11) इति सूत्रे निपातनात् मकारस्य पकार इति **माधव**धातुवृत्तिः । संज्ञाशब्दत्वान्नावयवार्थेऽभिनिवेशः कार्यः । पौत्रस्य अपत्यम् = **नप्ता** ।
6. ‘भाषायां धाञ्कृञ्सृजनिगमि**नमिभ्यः**—’ (वा. 3-2-171) इति किः किन् वा प्रत्ययः । तस्य लिड्वद्भावातिदेशात् द्वित्वे, एत्वाभ्यासलोपयो रूपम् । **नेमिः** = रथनाभिः ।
7. शब्दार्थकत्वादस्य ‘चलन**शब्दार्थादकर्मकात्**—’ (3-2-148) इति ताच्छीलिको युच् ।
8. ‘**नमि**कम्पि—’ (3-2-167) इति ताच्छीलिको रप्रत्ययः ।
9. ‘पोरदुपधात्’ (3-1-98) इति यत् ।
10. ‘दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधः—’ (वा. 1-4-60) इति वचनान्न णत्वम् ।

A. ‘द्रुतविगमितविप्रयोगचिह्नामपि तनयां नृपतिः पद**प्रणम्राम्** ।’ **नैषधे** 4.18.

B. ‘**नंनम्यमानाः** फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥’ भ. का. 2.25.

उन्नाम:-प्रणाम:, नाम:, नम:-नाम:-प्रणम:, निनंस:, नंनम: ;
नन्तुम्, नमयितुम्-नामयितुम्-प्रणमयितुम्, निनंसितुम्, नंनमितुम् ;
नति:, नमना-नामना-प्रणमना, निनंसा, नंनमा ;
नमनम्, नृनमनम्, नमनम्-नामनम्-प्रणमनम्, निनंसनम्, नंनमनम् ;
नत्वा, नमयित्वा-नामयित्वा, निनंसित्वा, नंनमित्वा ;
[1]प्रणत्य-प्रणम्य, [2]प्रणमय्य, प्रणिनंस्य, प्रणंनम्य ;
नामम् २, नत्वा २, } [3]नमम् २-नामम् २-नामम् २-प्रणमम् २-प्रणामम् २, नमयित्वा २-नामयित्वा २, }
निनंसम् २, निनंसित्वा २, } नंनमम् २ ; नंनमित्वा २. }

(665) "णय गतौ" (I-भ्वादि:-480. सक. सेट्. आत्म.)

'---रक्षणे च' इति मैत्रेयः । क्षीरस्वामी तु 'नय--' इति पपाठ । स पाठश्चिन्त्यः । सर्वत्र णोपदेशेनैवोपलम्भात् ।

नायकः-यिका, नायकः-यिका, निनयिषकः-षिका, नानयकः-यिका ; [A]नयितः, [4]प्रणयमानः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचयतिवत् (502) ज्ञेयानि ।

(666) "णल गन्धे" (I-भ्वादि:-838. अक. सेट्. पर.) ज्वलादिः ।

'—बन्धने' इति काश्यपः । गन्धः=हिंसनं वासना च ।

नालकः-लिका, प्रणालकः-लिका, निनलिषकः-षिका, नानलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचलतिवत् (510) ज्ञेयानि । घटादि-

---

1. 'वा ल्यपि' (6-4-38) इति अनुनासिकलोपविकल्पः । अनुनासिकलोपपक्षे 'ह्रस्वस्य पिति—' (6-1-71) इति तुक् ।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
3. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।
4. 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वम् ।

A. 'प्रतस्य किञ्चिन्नयितो गृहान्तिकं ददर्श धन्यः स दयालुमीश्वरम् ।' धा. का. 1.62.



कार्यं तु नास्य भवतीति विशेषः । [1]नलः, [2]नालः, [3]नलः ।

(667) "णश अदर्शने"

(IV-दिवादि:-1194. अक. सेट्. पर.) रधादिः ।

नाशकः-शिका, नाशकः-शिका, [4]निनशिषकः-षिका-[5]निनङ्क्षकः-क्षिका, नानशकः-शिका ;
[6]नशिता-त्री-प्रनंष्टा-ष्ट्री, नाशयिता-त्री, निनशिषिता-त्री-निनङ्क्षिता-त्री, नानशिता-त्री ;
नश्यन्-[A]प्रणश्यन्-न्ती, नाशयन्[7]-न्ती, निनशिषन्-निनङ्क्षन्-न्ती ; —
नशिष्यन्-[8]प्रनङ्क्ष्यन्-न्ती-ती, नाशयिष्यन्-न्ती-ती, निनशिषिष्यन्, निनङ्क्षिष्यन्-न्ती-ती ; —
— — — नानश्यमानः, नानशिष्यमाणः ;
[9]प्रनट्-प्रनक्-प्रणशौ-प्रणशः ; — — —

---

1. शत्रून् नलति=बध्नातीति नलः=नृपतिविशेषः । कर्तरि पचाद्यच् ।
2. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । नालः=बिसतन्तुः ।
3. नल्यते इति नलः=गन्धविशेषः । [नलदम्=लामज्जकम् ।]
4. 'रधादिभ्यश्च' (7-2-45) इति वलादेरार्धधातुकस्येटो वैकल्पिकत्वात् इट्पक्षे रूपम् । एवम् इट्पक्षे सन्नन्ते सर्वत्र ज्ञेयम् ।
5. इडभावपक्षे, 'मस्जिनशोर्झलि' (7-1-60) इति नुमागमे, 'व्रश्च—'(8-2-36) इत्यादिना शकारस्य षत्वे, 'षढोः कः सि' (8-2-41) इति कत्वे, 'नश्चापदान्तस्य झलि' (8-3-24.) इत्यनुस्वारे, 'इण्कोः' (8-3-57) इति सनः सकारस्य षत्वे, 'अनुस्वारस्य ययि—' (8-4-58) इति परसवर्णे च रूपम् । एवम् इडभावपक्षे सन्नन्ते प्रक्रिया सर्वत्र बोध्या ।
6. रधादित्वादिड्विकल्पः । इडभावपक्षे, 'नशेः षान्तस्य' (8-4-36) इति णत्वनिषेधः । एवं तव्यदादिष्वपि ज्ञेयम् ।
7. 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (1-3-86) इति ण्यन्तात् शतृप्रत्यय एव भवति । न त्वात्मनेपदं शानच् ।
8. 'नशेः षान्तस्य' (8-4-36) इत्यत्र अन्तग्रहणसामर्थ्यात् भूतपूर्वषकारान्तस्यापि ग्रहणमिति, णत्वमत्रापि न ।
9. क्विपि, 'व्रश्च—' (8-2-36) इति षत्वे, 'नशेर्वा' (8-2-63) इति कुत्वविकल्पः । भूतपूर्वगत्या षकारान्तत्वात् णत्वं न ।

A. 'प्रणश्यन्नपि नाशक्नोदत्येतुं बाणगोचरम् ।' भ. का. 9.134.

[1]प्रनष्टम्-[A]प्रनष्टः-नष्टवान्, प्रणाशितः, निनशिषितः, निनङ्क्षितः-नानशितः, तवान्;

नशः, [2]विनाशी, [B]कृतनाशी, [3]विनाशकः, [4]नश्वरः[C]-नश्वरी, नाशः, [5]चित्तविनाशनः-वित्तनाशनः-निनङ्क्षुः, नानशः;

नशितव्यम्-नंष्टव्यम्, नाशयितव्यम्, निनशिषितव्यम्-निनङ्क्षितव्यम्, नानशितव्यम्;

नशनीयम्, नाशनीयम्, निनशिषणीयम्, निनङ्क्षणीयम्, नानशनीयम्;

नाश्यम्, नाश्यम्, निनशिष्यम्-निनङ्क्ष्यम्, नानश्यम्;

ईषन्नशः-दुर्नशः-सुनशः, [6]दूणाशः; — —

नश्यमानः, नाश्यमानः, निनशिष्यमाणः-निनङ्क्ष्यमाणः, नानश्यमानः;

नाशः, नाशः, निनशिषः-निनङ्क्षः, नानशः;

नशितुम्-नंष्टुम्, नाशयितुम्, निनशिषितुम्-निनङ्क्षितुम्, नानशितुम्;

नष्टिः [7]जीवनक्, नाशना, निनशिषा-निनङ्क्षा, नानशा;

---

1. वलादेरार्धधातुकस्य '**रधादिभ्यश्च**' (7-2-45) इतीड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः।
2. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
3. 'निन्दहिंसक्लिशखाद**विनाश**—' (3-2-146) इत्यादिना तच्छीलतद्धर्मतत्साधुकारिषु वुञ्। अकादेशः।
4. 'इण्**नशि**जि—' (3-2-163) इति तच्छीलादिषु कर्तृषु क्वरप्। स्त्रियां 'टिड्ढा—' (4-1-15) इति ङीप्।
5. चित्तं विनाशयतीति, वित्तं नाशयतीति च **चित्तविनाशनः, वित्तनाशनः**। नन्द्यादित्वात् (3-1-134) ण्यन्तात् कर्तरि ल्युः। कर्मण्यणोऽपवादः।
6. दुःखेन नाशयितव्यः=**दूणाशः**। 'ईषत्—' (3-3-126) इत्यादिना ण्यन्तात् खल्। 'दुरो दाश**नाश**दभध्येषु उत्वम्, उत्तरपदादेः ष्टुत्वं च' (वा. 6-3-109) इति वचनेन उपसर्गान्त्यस्योत्वम्, सवर्णदीर्घः, उत्तरपदादेः ष्टुत्वं च।
7. जीवो नश्यतीति, जीवं नाशयति, इति वा **जीवनक्**=आहुतिविशेषः। बाहुलकादत्र स्त्रियाम् अर्थविशेषे क्विप् उपपत्तिः।

A. 'विद्युत्**प्रणाशं** स वरं **प्रनष्टो** यद्घोर्ध्वशोषं तृणवद्विशुष्कः।' भ. का. 3.14.

B. '**कुर्मश्च जीविते बुद्धिं धिक् तृष्णां **कृतनाशिनाम्**॥' भ. का. 18.32. (मल्लिनाथसम्मतपाठानुसारेण णिनिप्रत्ययान्ततया लिखितम्।)

C. 'रद्धारये सोऽयम**नश्वराय** तुष्यन्मना हतजनद्रुहेऽस्मै।' धा. का. 2.64.



नशनम्, नाशनम्, निनशिषणम्-निनङ्क्षणम्, नानशनम्;

नशित्वा-नंष्ट्वा-[1]नष्ट्वा, नाशयित्वा, निनशिषित्वा, निनङ्क्षित्वा, नानशित्वा;

प्रणश्य, प्रणाश्य, प्रणिनशिष्य-प्रणिनङ्क्ष्य, प्रणानश्य;

[2]अजकनाशं [नष्टः], विद्युत्प्रणाशं [नष्टः], [3]जीवनाशं[A] [नष्टः],

नाशम् २, नशित्वा-नंष्ट्वा-नष्ट्वा-२, } नाशम् २, नाशयित्वा २, } निनशिषम् २-निनङ्क्षम् २, निनशिषित्वा २-निनङ्क्षित्वा २, } नानशम् २; नानशित्वा २.}

(668) "**णस कौटिल्ये**" (I-भ्वादिः-627. अक. सेट्. आत्म.)

'शब्दार्थे नासते नासेः, कौटिल्ये नसते नसेः॥' (श्लो. 184) इति **देवः**।

नासकः-सिका, नासकः-सिका, निनसिषकः-षिका, नानसकः-सिका; [4]विनः-विनसौ-विनसः, [B]नसितः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**णभति**वत् (661) ज्ञेयानि।

(669) "**णह बन्धने**" (IV-दिवादिः-1166. सक. अनि. उभ.)

नाहकः-हिका, नाहकः-हिका, [5]निनत्सकः-त्सिका, नानहकः-हिका;

---

1. '**रधादिभ्यश्च**' (7-2-45) इतीड्विकल्पः। इट्पक्षे **नशित्वा** इति रूपम्। इडभावपक्षे 'मस्जि**नशो**र्झलि' (7-1-60) इति नुमि, **नंष्ट्वा** इति रूपम्। 'जान्त**नशां** विभाषा' (6-4-32) इति क्त्वायां नकारस्य विकल्पेन लोपे **नष्ट्वा** इति रूपम्।]
2. 'उपमाने कर्मणि च' (3-4-45) इति णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति णमुलन्तस्य धातोः अनुप्रयोगः। अजकश्च **नष्ट** इत्यर्थः। **विद्युत्प्रणाशं नष्टः** इत्यत्राप्येवमेव।
3. 'कर्त्रोर्जीवपुरुषयो**र्नशि**वहोः' (3-4-43) इति णमुल्। 'कषादिषु—' (3-4-46) इति अनुप्रयोगः। जीवो नश्यतीत्यर्थः।
4. क्विपि सोः रुत्वविसर्गयोः रूपम्। 'अत्वसन्तस्य चाधातोः' (6-4-14) इत्यत्र 'अधातोः' इत्युक्तत्वात् न दीर्घः।
5. 'णो नः' (6-1-65) इति नत्वे, धातोरनुदात्तत्वात् सन इण्णिषेधे, '**नहो** धः' (8-2-34) इति हकारस्य धकारे, 'खरि च' (8-4-55) इति चर्त्वे च रूपम्। एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या।

A. 'चकम्पेऽतीव चुक्रोश **जीवनाशं ननाश** च॥' भ. का. 14.31.

B. 'नासोत्थरासलसितान् **नसितेन** दाम्ना सूतो ययाम समराभ्यसितांस्तुरङ्गान्॥' धा. का. 1.79.

[1]नद्धा-द्ध्री, नाहयिता-त्री, निनत्सिता-त्री, नानहिता-त्री ;
[2]नह्यन्-न्ती, नाहयन्-न्ती, निनत्सन्-न्ती ; —
नत्स्यन्-न्ती-ती, नाहयिष्यन्-न्ती-ती, निनत्सिष्यन्-न्ती-ती ; —
नह्यमानः, नाहयमानः, निनत्समानः, नानह्यमान ;
नत्स्यमानः, नाहयिष्यमाणः, निनत्सिष्यमाणः, नानहिष्यमाण ;
[3]उपानत्-उपानद्-उपानहौ-उपानहः, प्राणत्-प्राणद्-प्राणहौ-प्राणहः ; —
अपिनद्धम्-[4]पिनद्धः-[A]सुनद्धम्-नद्धवान्, नाहितः, निनत्सितः, नानहितः-तवान् ;
नहः, प्रणाही, नाहः, निनत्सुः, नानह ;
नद्धव्यम्, नाहयितव्यम्, निनत्सितव्यम्, नानहितव्यम् ;
नहनीयम्, नाहनीयम्, निनत्सनीयम्, नानहनीयम् ;
नाह्यम्, नाह्यम्, निनत्स्यम्, नानह्यम् ;
ईषन्नहः-दुर्नहः-सुनहः ; — — —
नह्यमानः, नाह्यमानः, निनत्स्यमानः, नानह्यमानः ;
नाहः, संनाहः-परिणाहः-[5]परीणाहः, नाहः, निनत्सः, नानहः ;
नद्धुम्, नाहयितुम्, निनत्सितुम्, नानहितुम् ;
नद्धिः, नाहना, निनत्सिषा, नानहा ;
नहनम्, [6]प्रणिनहनम्-प्रनिनहनम्, नाहनम्, निनत्सनम्, नानहनम् ;
नद्ध्वा, नाहयित्वा, निनत्सित्वा, नानहित्वा ;

1. 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इतीण्णिषेधे, धत्वचर्त्वयोश्च रूपम्। एवं तव्यदादिष्वपि बोध्यम्।
2. '**दिवादिभ्यः**—' (3-1-69) इति श्यन् विकरणप्रत्ययः।
3. उपनह्यते=बध्यते इति **उपानत्**=पादुका' शिक्यविशेषश्च। '**नहिवृति**—' (6-3-116) इति क्विबन्ते परतः पूर्वपदस्य दीर्घो भवति। एवं **प्राणत्** इत्यत्रापि। णत्वं **प्राणद्**इत्यत्राधिकमिति विशेषः।
4. 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा॥' इति वचनात् अपिशब्दघटकाकारस्य लोपः।
5. 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति पूर्वपदस्य दीर्घः। णत्वम्।
6. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वम्।

A. 'तन्मुच्यमानास्त्वथ शुच्यदङ्गका मृत्याः **सुनद्धं** बहुरक्तमंशुकम्।' धा. का. 2.61.



प्रणह्य-[A]पिनह्य, प्रणह्य, प्रणाह्य, प्रणिनत्स्य, प्रणानह्य ;

| | | | |
|---|---|---|---|
| नाहम् २, नद्ध्वा २, | नाहम् २, नाहयित्वा २, | निनत्सम् २ निनत्सित्वा २, | नानहम् २ ; नानहित्वा २. |

(670) "**णासृ शब्दे**" (I-भ्वादिः-625. अक. सेट्. आत्म.)

'शब्दार्थे नासते नासेः, कौटिल्ये नसते नसेः ॥' (श्लो. 184) इति **देवः**।
नासकः-सिका, नासकः-सिका, निनासिषकः-षिका, नानासकः-सिका ;
[1]नासा,[B] इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कासति**वत् (188) ज्ञेयानि।

(671) "**णिक्ष चुम्बने**" (I-भ्वादिः-659. सक. सेट्. पर.)

**चुम्बनम्**=वक्त्रसंयोगः इति **क्षीरस्वामी**।

[2]प्रनिक्षकः-प्रणिक्षकः, निक्षकः-क्षिका, निनिक्षिषकः-षिका, नेनिक्षकः-क्षिका ;
निक्षिता-त्री, निक्षयिता-त्री, निनिक्षिषिता-त्री, नेनिक्षिता-त्री ;
[C]निक्षन्-न्ती, निक्षयन्-न्ती, निनिक्षिषन्-न्ती ; —
[3]निट्-निक्षौ-निक्षः ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**चिक्षति**वत् (528) ज्ञेयानि।

(672) "**णिजि शुद्धौ**" (II-अदादिः-1026. सक. सेट्. आत्म.)

[4]निञ्जकः-ञ्जिका, निञ्जकः-ञ्जिका, निनिञ्जिषकः-षिका, [5]नेनिञ्जकः-ञ्जिका ;
निञ्जिता-त्री, निञ्जयिता-त्री, निनिञ्जिषिता-त्री, नेनिञ्जिता-त्री ;

1. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः स्त्रियाम्।
2. 'वा निंसनिक्षनिन्दाम्' (8-4-33) इति उपसर्गस्थान्निमित्तात् परस्य कृत्प्रत्ययपरकस्य निक्षतेः नकारस्य णत्वविकल्पः। तिङन्ते तु 'कृत्यचः' (8-4-29) इति नित्यं णत्वमेव।
3. 'स्कोः—' (8-2-29) इति कलोपे, षकारस्य जश्त्वचर्त्वयो रूपम्।
4. 'इदितो नुम् धातोः' (7-1-58) इति नुम्। एवं सर्वत्र ज्ञेयम्। 'णो नः' (6-1-65) इति नत्वम्।
5. 'गुणो यङ्लुकोः' (7-4-82) इति अभ्यासस्य गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।

A. 'दृष्ट्वोर्णुवानान् ककुभो बलौघान् वितत्य शार्ङ्गं कवचं **पिनह्य**।' भ. का. 3.47.
B. '**नासो**त्थरासलसिताञ्चसितेन दाम्ना
सूतो ययाम समराभ्यसितान् तुरङ्गान् ॥' धा. का. 1.79.
C. 'उक्षन्नेनं मन्दहासेन रक्षन् विश्व**न्निक्षन्** वल्लवीस्तृक्षिताघाः ॥' धा. का. 1.83.

| | | | |
|---|---|---|---|
| — | निञ्जयन्-न्ती, | निञ्जयिष्यन्-न्ती-ती ; | — — |
| [1]निञ्जानः, | निञ्जयमानः, | निनिञ्जिषमाणः, | नेनिञ्जयमानः ; |
| निञ्जिष्यमाणः, | निञ्जयिष्यमाणः, | निनिञ्जिषिष्यमाणः, | नेनिञ्जिष्यमाणः ; |
| [2]प्रणिन्-प्रणिञ्जौ-प्रणिञ्जः ; | — | — | — |
| निञ्जितम्-तः, | निञ्जितः, | निनिञ्जिषितः, | नेनिञ्जितः-तवान् ; |
| निञ्जः, निञ्जः, | [3]नतचित्तनिञ्जी,[A] | निनिञ्जिषुः, | नेनिञ्जः ; |
| निञ्जितव्यम् , | निञ्जयितव्यम् , | निनिञ्जिषितव्यम् , | नेनिञ्जितव्यम् ; |
| निञ्जनीयम् , | निञ्जनीयम् , | निनिञ्जिषणीयम् , | नेनिञ्जनीयम् ; |
| [4]निञ्ज्यम् , | निञ्ज्यम् , | निनिञ्जिष्यम् , | नेनिञ्ज्यम् ; |
| ईषन्निञ्जः-दुर्निञ्जः-सुनिञ्जः ; | — | — | — |
| निञ्ज्यमानः, | निञ्ज्यमानः, | निनिञ्जिष्यमाणः, | नेनिञ्ज्यमानः ; |
| निञ्जः | निञ्जः, | निनिञ्जिषः | नेनिञ्जः ; |
| निञ्जितुम् , | निञ्जयितुम् , | निनिञ्जिषितुम् , | नेनिञ्जितुम् ; |
| [5]निञ्जा, | निञ्जना, | निनिञ्जिषा, | नेनिञ्जा ; |
| निञ्जनम् , | निञ्जनम् , | निनिञ्जिषणम् , | नेनिञ्जनम् ; |
| निञ्जित्वा, | निञ्जयित्वा, | निनिञ्जिषित्वा, | नेनिञ्जित्वा ; |
| प्रणिञ्ज्य, | प्रणिञ्ज्य, | प्रणिनिञ्जिष्य, | प्रणेनिञ्ज्य ; |
| निञ्जम् २, निञ्जित्वा २, | निञ्जम् २, निञ्जयित्वा २, | निनिञ्जिषम् २, निनिञ्जिषित्वा २, | नेनिञ्जम् २ ; नेनिञ्जित्वा २. |

---

1. विकरणप्रत्ययस्य शपः '**अदिप्रभृतिभ्यः** शपः' (2-4-72) इति लुक् ।
2. जकारस्य संयोगान्तलोपः । इदित्वान्नलोपो न ।
3. 'सुप्यजातौ—' (3-2-78) इति ण्यन्तात् ताच्छील्ये णिनिः ।
4. 'चजोः कु घिण्ण्यतोः' (7-3-52) इत्यत्र, 'निष्ठायामनिट इति वक्तव्यम्' (वा. 7-3-52) इति वचनात् , अस्य च धातोः निष्ठायां सेट्त्वात् कुत्वं न । एवं घञन्तेऽपि ज्ञेयम् ।
5. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः । टाप् ।

A. 'स्वीयैश्चकंसे कशानीयकासी रमोष्ठनिंसी **नतचित्तनिञ्जी** ॥' धा. का. 2.45.



## (673) " णिजिर् शौचपोषणयोः "

(III-जुहोत्यादिः-1093. सक. अनि. उभ.)

'निङ्क्ते, नेनेक्ति नेनिक्ते शौचेऽर्थे पोषणे तथा ॥' (श्लो. 63) इति **देवः** ।

नेजकः-[1]निर्णेजकः-जिका, नेजकः-जिका, [2]निनिक्षकः-क्षिका, नेनिजकः-जिका;

| | | | |
|---|---|---|---|
| [3]नेक्ता-त्री, | नेजयिता-त्री, | निनिक्षिता-त्री, | [4]प्रणेनिजिता-त्री ; |
| [5]नेनिजत्[A]-ती, | नेजयन्-न्ती, | निनिक्षन्-न्ती ; | — |
| नेक्ष्यन्-न्ती-ती, | नेजयिष्यन्-न्ती-ती, | निनिक्षिष्यन्-न्ती-ती ; | — |
| नेनिजानः, | नेजयमानः, | निनिक्षमाणः, | नेनिज्यमानः ; |
| नेक्ष्यमाणः, | नेजयिष्यमाणः, | निनिक्षिष्यमाणः, | नेनिजिष्यमाणः ; |
| सुनिक्-सुनिग्-सुनिजौ-सुनिजः ; | | — | — |
| निक्तम्-क्तः-क्तवान्, | नेजितः, | निनिक्षितः, | नेनिजितः-तवान् ; |
| [6]निजः, | नेजः, | निनिक्षुः, | नेनिजः ; |
| नेक्तव्यम् , | नेजयितव्यम् , | निनिक्षितव्यम् , | नेनिजितव्यम् ; |
| नेजनीयम् , | नेजनीयम् , | निनिक्षणीयम् , | नेनिजनीयम् ; |

---

1. 'उपसर्गादसमासेऽपि **णोपदेशस्य**' (8-4-14) इति धातुनकारस्य णकारः । '**निजिर्—**' इति **धातुप्रदीपा**दिसम्मते क्वाचित्कपाठे तु णत्वस्याप्रसक्तिरिति ज्ञेयम् । '**निर्णेजकः** स्याद् रजकः—' **इत्यमरः** ।
2. अस्य धातोरनुदात्तत्वेनेडभावे, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वात् लघूपधगुणो न । 'कुहोश्चुः' (7-4-62) इति कुत्वे, 'आदेशप्रत्यययोः' (8-3-59) इति षत्वे, 'खरि च' (8-4-55) इति चर्त्वम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
3. 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इतीण्णिषेधः । एवं वलाद्यार्धधातुके सर्वत्र ज्ञेयम् । किति प्रत्यये परतः क्तादौ गुणाभावोऽपि बोध्यः ।
4. 'उभौ साभ्यासस्य' (8-4-21) इति लिङ्गेन, 'पूर्वत्रासिद्धीयमद्विर्वचने' (परि. 127) इत्यस्यानित्यत्वात् पूर्वं द्वित्वे, अभ्यासघटकस्यैव नकारस्य णत्वं ज्ञेयम् ।
5. विकरणप्रत्ययस्य शपः, '**जुहोत्यादिभ्यः** श्लुः' (2-4-75) इति श्लौ, 'श्लौ' (6-1-10) इति द्वित्वे, '**निजां** त्रयाणां गुणः श्लौ' (7-4-75) इत्यभ्यासस्य गुणः । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः । एवम्, **नेनिजानः** इत्यत्रापि गुणो बोध्यः ।
6. '**इगुपधज्ञा—**' (3-1-135) इति कर्तरि कप्रत्ययः । कित्त्वान्न गुणः ।

A. '**प्रणेनिजन्द्रिमं**तिमर्थतत्त्वं सुवेविजानैर्यदुभिः स विष्णुः ।' धा. का. 2. 55.

| | | | |
|---|---|---|---|
| [1]नेग्यम्, | नेज्यम्, | निनिक्ष्यम्, | नेनिज्यम्; |
| ईषन्नेजः-दुर्नेजः-सुनेजः; | | — | — |
| निज्यमानः, | नेज्यमानः, | निनिक्ष्यमाणः, | नेनिज्यमानः; |
| नेगः, | नेजः, | निनिक्षः, | नेनिजः; |
| नेक्तुम्, | नेजयितुम्, | निनिक्षितुम्, | नेनिजितुम्; |
| निक्तिः, | नेजना, | निनिक्षा, | नेनिजा; |
| नेजनम्, | नेजनम्, | निनिक्षणम् | नेनिजनम्; |
| निक्त्वा, | नेजयित्वा, | निनिक्षित्वा, | नेनिजित्वा; |
| प्रणिज्य, | प्रणेज्य, | प्रणिनिक्ष्य, | प्रणेनिज्य; |
| नेजम् २, } निक्त्वा २, } | नेजम् २, } नेजयित्वा २, } | निनिक्षम् २, } निनिक्षित्वा २, } | नेनिजम् २; } नेनिजित्वा २. } |

(674) " **णिदि कुत्सायाम्** " (I-भ्वादिः-66. सक. सेट्. पर.)

'कुत्सायां सन्निकर्षे वा, कुत्सामात्रे तु निन्दति ॥' (श्लो 114) इति **देवः**। [2]प्रणिन्दकः-प्रनिन्दकः-न्दिका, निन्दकः-न्दिका, निनिन्दिषकः-षिका, नेनिन्दकः-न्दिका; निन्दिता-त्री, निन्दयिता-त्री, निनिन्दिषिता-त्री, नेनिन्दिता-त्री; निन्दितम्-तः-तवान्, [3]निन्दकः[A], इत्यादीनिसर्वाण्यपि रूपाणि भौवादिक, **जिन्वति**वद् (604) ज्ञेयानि!

(675) "**णिद्द कुत्सासन्निकर्षयोः**" (I-भ्वादिः-871. सक. सेट्. उभ.)

'प्रत्येकं निदिनेद्यो: स्तां नेदते नेदतीत्युभे।
कुत्सायां सन्निकर्षे वा, कुत्सामात्रे तु निन्दति ॥' (श्लो. 114) इति **देवः**।

प्रणेदकः-दिका, नेदकः-दिकाः, निनिदिषकः-निनेदिषक -षिका नेनिदकः-दिका; नेदिता-त्री, नेदयिता, त्री निनिदिषिता-निनेदिषिता-त्री, नेनिदिता-त्री;

---

1. अस्य धातोर्निष्ठायामनिट्त्वात्, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम्। एवं घञन्तेऽपि जकारस्य कुत्वेन गकारो ज्ञेयः।
2. 'वा निंसनिक्षनिन्दाम्' (8-4-33) इति कृत्प्रत्ययपरकधातुसम्बन्धिनकारस्य णत्वं विकल्पेन भवति।
3. '**निन्द**हिंसक्लिशखाद—' (3-2-146) इत्यादिना तच्छीलादिषु कर्तृषु वुञ्। अकादेशः।

A. '**निन्दको** रजनिम्मन्यं दिवसं क्लेशको निशाम्।' भ. का. 7.13.



[A]निद्यमानः, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**किटति**वत् (190) ज्ञेयानि। अस्य धातोरूभयपदित्वात् नेदमानः, नेदयमानः, निनिदिषमाणः, निनेदिषमाणः, नेदिष्यमाणः, निनिदिषिष्यगाणः-निनेदिषिष्यमाणः; इति शानजन्तानि रूपाण्यधिकानीति विशेषः।

(676) " **णिल गहने** "(VI-तुदादिः-1360. अक.सेट्.पर.)

नेलकः-प्रणेलकः-लिका, नेलकः-लिका, निनिलिषकः-निनेलिषकः-षिका, नेनिलकः-लिका; [B]निलितम्-तः-तवान्, इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**किलति**वत् (193) ज्ञेयानि।

(677) " **णिवि सेचने** " (I-भ्वादिः-590. सक. सेट्. पर.)

'**सेवने**' इति तरङ्गिण्याम्। '**स्रंसने**' इति **मैत्रेयः**।

प्रणिन्वकः-[C]निन्वकः-न्विका, निन्वकः-न्विका, निनिन्विषकः-षिका, नेनिन्वकः-न्विका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जिन्वति**वत् (604) ज्ञेयानि।

(678) " **णिश समाधौ** " (I-भ्वादिः-722. अक. सेट्. पर.)

प्रणेशकः-शिका, नेशकः-शिका, निनिशिषकः-निनेशिषकः-षिका, नेनिशकः-शिका, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**किटति**वत् (190) ज्ञेयानि। निट्-निशौ-निशः, निशा,[1] इत्यस्याधिकानि रूपाणीति विशेषः।

(679) " **णिसि चुम्बने** " (II-अदादिः-1025. सक. सेट्. आत्म.)

[2]प्रणिंसकः-प्रनिंसकः-सिका, निंसकः-सिका, निनिंसिषकः-षिका,

---

1. 'सम्पदादिभ्यः क्विप्' (वा. 3-3-94) इति भावे स्त्रियां क्विप्। 'आपं चैव हलन्तानां यथा वाचा **निशा** दिशा ॥' इति वचनेन टापि **निशा** इति भवति।
2. 'वा **निंस**निक्षनिन्दाम्' (8-4-33) इति कृत्प्रत्ययपरकस्य धातुनकारस्य णत्वविकल्पः।

A. 'नित्यं प्रमोहामिदितोरुमेदैः प्रमेधिता सद्भिर**निद्यमानैः**।' धा. का. 2.26.
B. 'बिलशयप्रतिमै**र्निलिते** पुरे स हि सुहृत्सु हिलन् अचरत् सुखम्।' धा.का. 2.79.
C. 'विश्वेन्वितं लङ्घमधुपिन्विताङ्गकं मिन्वन्तमुच्चैः कृपयैव **निन्वकान्**।' धा.का. 1.75.

नेर्निसकः-सिका ; [1]रमोष्ठनिंसी-[A] इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक-**जिन्वतिवत्** (604) ज्ञेयानि ।

**(680) "णीङ् प्रापणे"** (I-भ्वादिः-901. सक. अनि. उभ.)

**प्रापणम्**=आसादनम् ।

नायकः-[B]परिणायकः-यिका, नायकः-यिका, [2]निनीषकः-षिका-नेनीयकः-यिका; नेता-त्री, [C]दुरितापनेत्री, नाययिता-त्री, निनीषिता-त्री ; अनुनयन्-न्ती, [गङ्गं][3]विनयन्, नाययन्-न्ती, निनीषन्-न्ती ; — नेष्यन्-न्ती-ती, नाययिष्यन्-न्ती-ती, निनीषिष्यन्-न्ती-ती ; [अजां ग्रामं] [4]नयमानः, [शास्त्रे] [5]नयमानः, [दण्डम्] उन्नयमानः,

1. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।
2. धातोरस्यानुदात्तत्वात्, 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इतीण्णिषेधे, 'इको झल्' (1-2-9) इति सनः कित्त्वात् न गुणः । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
3. 'कर्तृस्थे चाशरीरे कर्मणि' (1-3-37) इत्यत्र शरीरावयवभिन्ने कर्मणि इति व्याख्यानात्, कर्तृगामिन्यपि क्रियाफले नात्मनेपदं शानज् भवति । अपि तु शतैव ।
4. '**नीङ्**धातोः संयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वेन 'कर्तुरीप्सिततमं कर्म' (1-4-49) इत्यनेनाजायाः प्रधानकर्मत्वम् । ग्रामस्य तु अप्रधानकर्मत्वमिति द्वितीयाप्रयोगः सङ्गच्छते । यद्वा, 'अकथितं च' (1-4-51) इत्यनेनाधारस्य ग्रामस्य तत्त्वाविवक्षायां कर्मसंज्ञा भवति, इति वा बोध्यम् ।
5. 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु **नियः**' (1-3-36) इत्यनेन क्रमेण सप्तस्वर्थेषु विषयभूतेषु आत्मनेपदं भवति—परगामिन्यपि क्रियाफले । **सम्माननम्**=पूजनम् । 'शास्त्रे **नयमान**' इत्यत्र शास्त्रबोध्यम् अर्थं शिष्येभ्यः प्रापयतीत्यर्थः । तेन शिष्यसम्माननं फलितम् । **उत्सञ्जनम्**=उत्क्षेपणम् । **आचार्यकरणम्**=आचार्यक्रिया । विधिना आत्मसमीपं प्रापयन् इत्यर्थः । **ज्ञानम्**=प्रमेयनिश्चयः । **भृतिः**=वेतनम् । भृतिदानेन स्वसमीपं प्रापयन् इत्यर्थः । **विगणनम्**=ऋणादेर्नियातनम् । राज्ञे देयं भागं परिशोधयन् इत्यर्थः । **व्ययः**=धर्मार्थं विनियोगः । धर्मार्थं शतं विनियुञ्जान इत्यर्थः ।

A. 'स्वीयैश्चकंसे कशनीयकासी **रमोष्ठनिंसी** नतचित्तनिञ्जी ॥' धा. का. 2.45.

B. 'अनुदेहमागतवतः प्रतिमां **परिणायकस्य** गुरुमुद्वहता ।' शि. व. 9.73. 9-73.

C. 'धृतप्रमोदो **दुरितापनेत्रीं** स्नातुं नदीमाप स गान्दिनेयः ॥' धा. का. 2.29.



[माणवकं] उपनयमानः-[तत्त्वं] नयमानः, [कर्मकरान्] उपनयमानः, [करं] विनयमानः, [शतं] विनयमानः, [क्रोधं] [1]विनयमानः, नाययमानः, निनीषमाणः, नेनीयमानः ;

नेष्यमाणः, नाययिष्यमाणः, निनीषिष्यमाणः, नेनीयिष्यमाणः ;

[2]अग्रणीः, ग्रामणीः-ग्रामण्यौ-ग्रामण्यः, [A]तिथिप्रणीः, सेनानीः[B] ; —

नीतः-नीतम्-नीतवान्, नायितः, निनीषितः, नेनीयितः-तवान् ;

[3]नायः, अनुनयः-नयः, [4]उष्ट्रप्रणायः-[5]नेष्टा-नेता, [6]नेत्रम्, [7]अनुनायकः, अनुनायिका, नायः, निनीषुः, अनुनिनीषुः,[C] [8]नेन्यः ;

नेतव्यः, नाययितव्यः, निनीषितव्यः, नेनीयितव्यः ;

नयनीयः, नायनीयः निनीषणीयः, नेनीयनीयः ;

1. 'कर्तृस्थे चाशरीरे कर्मणि' (1-3-37) इति शानच् । क्रोधम् अपगमयन् इत्यर्थः ।
2. 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजि**नी**राजामुपसर्गेऽपि क्विप्' (3-2-61) इति क्विप् । 'अग्रग्रामाभ्यां **नयते**र्णो वाच्यः' इति **वचनेन** णत्वम् । **नयते**रित्युक्तेः '**ग्रामणायः**' इति कर्मण्यण्यपि णत्वं भवति । स्पष्टमिदं 'वाऽसरूपोऽस्त्रियाम्' (3-1-94) इत्यत्र **भाष्ये** ।
3. 'दुन्**यो**रनुपसर्गे' (3-1-142) इति कर्तरि णप्रत्ययः । उपसृष्टात्तु पचाद्यजेव । केवलात् **नी**धातोः कर्तरि **नय** इति प्रयोगस्तु बाहुलकात् बोध्यः । 'दुन्**योः**—' (3-1-142) इत्यत्र, 'वेति **केचित्**' इति **प्रक्रियाकौमुदी** ।
4. 'कर्मण्यण्' (3-2-1) इति प्रपूर्वक**नी**धातोरणि, 'उपसर्गादसमासे—' (8-4-14) इति णत्वे रूपम् ।
5. 'तृन्' (3-2-135) इति ताच्छीलिके तृनि, '**नयतेः** षुक् च' (वा. 3-2-135) इति षुगागमे च रूपम् । **नेष्टा**=ऋत्विग्विशेषः ।
6. 'दाम्**नी**श—' (3-2-182) इत्यादिना करणे ष्ट्रन्प्रत्ययः । **नेत्रम्**=चक्षुरिन्द्रियम् ।
7. 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3-3-10) इति क्रियार्थायां क्रियायां सत्यां भविष्यति ण्वुल् । स्त्रियाम्, 'प्रत्ययस्थात्—' (7-3-44) इतीत्वम् ।
8. यङन्तात् पचाद्यचि (3-1-134) अङ्गस्यानेकाच्त्वात् 'एरनेकाचः—' (6-4-82) इति यणादेशः ।

A. 'सायन्तनीं **तिथिप्रण्यः** पङ्कजानां दिवातनीम्' । भ. का. 5.65.

B. 'सार्धं कुमार**सेनान्या** शून्यश्चासीति को **नयः** ॥' भ. का. 5.7.

C. 'पराक्पञ्जः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनु**निनीषु**रूचे ॥' भ. का. 2.51.

नेयम्- [1]विनीयः-[कल्कः] विनेयः, [2]आनाय्यः [दक्षिणाग्निः] आनेयः[घटः], [3]प्रणाय्यः[A] [चोरः, विरक्तश्च], प्रणेयः, [4]सान्नाय्यम् [हविः], - नाय्यम्, निनीष्यम्, नेनीय्यम् ; — —
ईषन्नयः-[5]दुर्नयः-सुनयः; — — —
नीयमानः, नाय्यमानः, निनीष्यमाणः, नेनीय्यमानः ;
[6]नायः, निर्णयः-दुर्नयः-प्रणयः-सुनयः-अनुनयः-विनयः-उपनयः, [7]नयः, उन्नयः, [8]अवनायः-उन्नायः, [9]परिणायः-परिणयः, [10]आनायः [ जालम् ], नायः, निनीषः, नेनीयः ;
नेतुम् , नाययितुम् , निनीषितुम् , नेनीयितुम् ;
नीतिः, नायना, निनीषा, नेनीया ;

---

1. ‘विपूयविनीयजित्या मुञ्जकल्कहलिषु’ (3-1-117) इति सूत्रेण विपूर्वकादस्मात् क्यपि रूपं निपातितम् । **विनीयः**=कल्कः । ‘पिष्टौषधे पक्वान्नतैलादीनामृजीषे, पाके च वर्तते ।’ इति **माधवधातुवृत्तिः** ।
2. ‘**आनाय्यो**ऽनित्ये’ (3-1-127) इत्यनेन आङ्पूर्वादस्माण्ण्यति, आयादेशो निपात्यते । आनीयते **इत्यानाय्यः**=दक्षिणाग्निविशेषः । ‘स हि गार्हपत्यादानीयते, अनित्यश्च सततमप्रज्वलनात् । ‘**आनाय्यः** = गोधुक् ।’ इति **क्षीरस्वामी** । **आनेयो**ऽन्यः घटादिः ।’ इति **सिद्धान्तकौमुदी** ।
3. ‘**प्रणाय्यो**ऽसम्मतौ’ (3-1-128) इति प्रपूर्वकादस्मात् ण्यदायादेशौ निपात्येते असम्मतावर्थे । **सम्मतिः**=प्रीतिविषयीभवनम् , भोगेष्वादरश्च । तद्भिन्नोऽर्थोऽसम्मतिः । चोरः **प्रणाय्यः**=प्रीत्यनर्हः । शिष्यः **प्रणाय्यः**=विरक्तः ।
4. ‘पाय्य**सान्नाय्य**—’ (3-1-129) इत्यादिना ण्यदायादेशयो रूपमेवम् । **सान्नाय्यम्** = दधिपयसी ।
5. **माधवधातुवृत्तौ** तु ‘**दुर्णयः**’ इति णत्वविशिष्टतया रूपमुपलभ्यते । ‘दुरः षत्वणत्वयोः—’ (वा. 1-4-60) इति वचनात् णत्वाभावविशिष्ट एव शब्दः साधुरिति प्रतिभाति ।
6. ‘श्रि**णी**भुवोऽनुपसर्गे’ (3-3-24) इति भावेऽजपवादो घञ् । उपसृष्टात्तु ‘एरच्’ (3-3-56) इत्यजेव—**निर्णयः** इत्यादि ।
7. भावे **नय** इति तु बाहुलकात् ज्ञेयः । एवम् **उन्नय** इत्यपि ।
8. ‘**अवोदोर्नियः**’ (3-3-26) इति अव-उत्पूर्वकादस्मात् घञि साधुः ।
9. ‘परिन्योर्नीणोर्द्यूताभ्रेषयोः’ (3-3-37) इति परौ उपसर्गे घञ् द्यूतेऽभिधेये । **परिणायेन** शारान् हन्ति । **परिणायः**=समन्तात् द्यूतसाधनानाम् अक्षाणां नयनम् ।
10. ‘जाल**मानायः**’ (3-3-124) इति जालेऽभिधेये आङ्पूर्वकादस्माद् घञ् संज्ञायाम् । ‘पुंसि संज्ञायां घः—’ (3-3-118) इत्यस्यापवादः ।

A. ‘न **प्रणाय्यो** जनः कश्चिन्निकाय्यं तेऽधितिष्ठति ।’ भ. का. 6.67.



नयनम् , नायनम् , निनीषणम् , नेनीयनम् ;
नीत्वा, नाययित्वा, निनीषित्वा, नेनीयित्वा ;
प्रणीय, प्रणाय्य, प्रणिनीष्य, प्रणेनीय्य ;
नायम् २, नीत्वा २, } नायम् २, नाययित्वा २, } निनीषम् २, निनीषित्वा २, } नेनीयम् २ ; नेनीयित्वा २.
[1]ना, नेमः,[2] नीरम्.[3]

## (681) “णील वर्णे” (I-भ्वादिः-522. अक. सेट्. पर.)

‘वर्णे=वर्णोपलक्षितायां क्रियायाम् । यथा—‘श्वेतं **नीलति** मरकतकान्त्या’। इति **क्षीरस्वामी** ।

नीलकः-लिका, नीलकः-लिका, निनीलिषकः-षिका, नेनीलकः-लिका ; प्रणीलिता, नीलः [4]नीली-नीला, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कीलति**वत् (195) ज्ञेयानि ।

## (682) “णीव स्थौल्ये” (I-भ्वादिः-566. अक. सेट्. पर.)

प्रणीवकः-विका, नीवकः-विका, निनीविषकः-षिका, नेनीवकः-विका ; नीवः, [5]नीविः-नीवी, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**जीवति**वत् (606) ज्ञेयानि ।

---

1. ‘**नयतेर्डिच्च**’ [द. उ. 2.8.] इति ऋप्रत्ययः, स च डिद्वद् भवति । नयतीति **ना**=मनुष्यः ।
2. औणादिके [द. उ. 7-26.] मन्प्रत्यये गुणः । **नेमः**=अर्धम् ।
3. औणादिके [द. उ. 8.31.] रक्प्रत्यये रूपम् । **नीरम्**=जलम् ।
4. ‘इगुपध—’ (3-1-135) इति कर्तरि कप्रत्यये **नीलः** इति भवति । स्त्रियाम्, ‘जानपदकुण्डगोणस्थलभाजनागकाल**नील**—’ (4-1-42) इत्यनेन प्राणिनि ओषधिविशेषे च वाच्ये अनाच्छादने विहितोऽपि ङीष्, ‘**नीला**दोषधौ प्राणिनि च’ (वा. 4-1-42) इति वचनात् भवति । अन्यत्र **नीला**=शाटी । नील्या रक्तेति वावत् ।
5. ‘इन्’ [द. उ. 1-46] इतीन् प्रत्यये, ‘कृदिकारादक्तिनः’ (ग. सू. 4-1-45) इति ङीष्विकल्पः । ‘स्त्रीकटीवस्त्रबन्धेऽपि **नीवी** परिपणेऽपि च ।’ **इत्यमरः** ।

## (683) "णु स्तुतौ" (II-अदादिः-1035. सक. सेट्. पर.)

'—स्तुत्यां नुवति, नौति वा ॥' (श्लो. 24) इति देवः ।

नावकः-विका, नावकः-विका, [1]नुनूषकः-षिका, [2]नुनावयिषकः-षिका, [3]नोनूयकः-यिका ;

[4]नविता-त्री, नावयिता-त्री, नुनूषिता-त्री, नुनावयिषिता-त्री, नोनूयिता-त्री ;

[5]नुवन्-नुवती, नावयन्-न्ती, नुनूषन्-न्ती, नुनावयिषन्-न्ती ; —

नविष्यन्-न्ती-ती, नावयिष्यन्-न्ती-ती, नुनूषिष्यन्-न्ती-ती, नुनावयिषिष्यन्-न्ती-ती ; —

[6]अनुवानः-[A], नावयमानः, [7]आनुनूषमाणः, नुनावयिषमाणः, नोनूयमानः ;

आनविष्यमाणः, नावयिष्यमाणः, आनुनूषिष्यमाणः, नुनावयिषिष्यमाणः, नोनूयिष्यमाणः ;

[8]संनुत्-संनुतौ-संनुतः ; — — — —

[9]नुतः-नुतम्-नुतवान्, नावितः, नुनूषितः, नुनावयिषितः, नोनूयितः-तवान् ;

---

1. 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्णिषेधः। 'इको झल्' (1-2-9) इति सनः कित्त्वम्। 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। कित्त्वात् गुणाभावः। एवं सर्वत्र सन्प्रत्ययविषये प्रक्रिया ज्ञेया।
2. ण्यन्तात् सनि 'ओः पुयण्—' (7-4-80) इति ज्ञापकादन्तरङ्गयोरपि वृद्ध्यावादेशयोः प्रागप्रवृत्तौ, 'नु' शब्दस्य द्वित्वे, अभ्यासे उकारश्रवणम्। एवं ण्यन्तात् सनि सर्वत्र ज्ञेयम्।
3. यङि परतः 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। एवं यङन्ते सर्वत्र प्रक्रिया ज्ञेया।
4. अस्य धातोरुदात्तत्वात् (सेट्त्वात्) 'आर्धधातुकस्येड् वलादेः' (7-2-35) इतीटि गुणावादेशौ। एवं तव्यदादिष्वपि ज्ञेयम्।
5. शतरि, '**अदिप्रभृतिभ्यः** शपः' (2-4-72) इति शपो लुकि, 'अचि श्नु—' (6-4-77) इत्युवङ्।
6. 'आङि नुप्रच्छ्योरुपसङ्ख्यानम्' (वा. 1-3-21) इति शानच्। आङ्पूर्वकोऽयं धातुः उत्कण्ठापूर्वके शब्दने वर्तते।
7. 'पूर्ववत् सनः' (1-3-62) इति आङ्पूर्वकादस्मात् सन्नन्तादात्मनेपदम् शानच्।
8. क्विपि, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्। एवं ल्यप्यपि।
9. 'श्र्युकः किति' (7-2-11) इति इण्णिषेधः। एवम्, क्त्वायाम्, क्तिन्यपि इण्णिषेधो ज्ञेयः।

A. 'पतत्त्रिणः शुभा मन्द्र**मानुवाना**स्त्वजिह्वदन् ॥' भ. का. 8. 67.



नावः, संनावी, नावः, नुनूषुः, नुनावयिषुः, [1]नोनुवः ;

नवितव्यम्, नावयितव्यम्, नुनूषितव्यम्, नुनावयिषितव्यम्, नोनूयितव्यम् ;

नवनीयम् ; नावनीयम्, नुनूषणीयम्, नुनावयिषणीयम्, नोनूयनीयम् ;

[2]नव्यम्-अवश्यनाव्यम्, नाव्यम् ; नुनूष्यम्, नुनावयिष्यम्, नोनूय्यम् ;

ईषन्नवः-दुर्नवः-सुनवः ; — — —

नूयमानः, नाव्यमानः, नुनूष्यमाणः, नुनावयिष्यमाणः, नोनूय्यमानः ;

[3]नवः-प्रणवः, नावः, नुनूषः, नुनावयिषः, नोनूयः,

नवितुम्, नावयितुम्, नुनूषितुम्, नुनावयिषितुम्, नोनूयितुम् ;

नुतिः, नावना, नुनूषा, नुनावयिषा, नोनूया ;

नवनम्, नावनम्, नुनूषणम्, नुनावयिषणम्, नोनूयनम् ;

नुत्वा, नावयित्वा, नुनूषित्वा, नुनावयिषित्वा, नोनूयित्वा ;

प्रणुत्य, प्रणाव्य, प्रणुनूष्य, प्रणुनावयिष्य, प्रणोनूय्य ;

नावम् २, नुत्वा २, } नावम् २, नावयित्वा २, } नुनूषम् २, नुनूषित्वा २, } नुनावयिषम् २, नुनावयिषित्वा, } नोनूयम् ; नोनूयित्वा. }

## (684) "णुद प्रेरणे" (VI-तुदादिः-1282. सक. अनि. उभ.)

नोदकः-दिका, नोदकः-दिका, [4]नुनुत्सकः-त्सिका, नोनुदकः-दिका ;

[5]नोत्ता-त्री, नोदयिता-त्री, नुनुत्सिता-त्री, नोनुदिता-त्री ;

---

1. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति लुकि, 'न धातुलोप—' (1-1-4) इति गुणनिषेधे उवङादेशः।
2. '**अचो** यत्' (3-1-97) इति यति, 'वान्तो यि प्रत्यये' (6-1-79) इति अवादेशः। **अवश्यनाव्यम्** इत्यत्र '**ओरावश्यके**' (3-1-125) इति ण्यति आवादेशः।
3. 'ऋदोरप्' (3-3-57) इत्यप् भावे। **प्रणवः** इत्यत्र, 'उपसर्गादसमासेऽपि णोपदेशस्य' (8-4-14) इति णत्वम्।
4. धातोरनुदात्तत्वेनेडभावे, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, लघूपधगुणो न। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
5. 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इति इण्णिषेधे, 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणः। एवं तव्यदादिष्वपि ज्ञेयम्।

[1]नुदन् ती-न्ती, नोदयन्-न्ती, नुनुत्सन्-न्ती ; —

नोत्स्यन्-न्ती-ती, नोदयिष्यन्-न्ती-ती, नुनुत्सिष्यन्-न्ती-ती ; —

नुदमानः, [A]प्रणुदमानः, नोदयमानः, नुनुत्समानः, नोनुद्यमानः ;

नोत्स्यमानः, नोदयिष्यमाणः, नुनुत्सिष्यमाणः, नोनुदिष्यमाणः ;

अपनुत्-अपनुद्-अपनुदौ-अपनुदः ; — —

[2]नुन्नः-नुत्तः-[B]प्रणुन्नम्-नुत्तम्-नुन्नम्-नुन्नवान्-नुत्तवान्, नोदितः, नुनुत्सितः, नोनुदितः-तवान् ;

[3]नुदः, [4]शोकापनुदः,[C] [5]शोकापनोदः, विनोदी, नोदः, [D]नुनुत्सुः, नोनुदः ;

नोत्तव्यम्, नोदयितव्यम्, नुनुत्सितव्यम्, नोनुदितव्यम् ;

नोदनीयम्, नोदनीयम्, नुनुत्सनीयम्, नोनुदनीयम् ;

नोद्यम्, नोद्यम्, नुनुत्स्यम्, नोनुद्यम् ;

ईषन्नोदः-दुर्नोदः-सुनोदः ; — —

नुद्यमानः, नोद्यमानः, नुनुत्स्यमानः, नोनुद्यमानः ;

नोदः-विनोदः, [6]काकुदः [तालु], नुनुत्सः, नोनुदः ;

---

1. '**तुदादिभ्यः—**' (3-1-77) शः विकरणप्रत्ययः । शस्य ङिद्वद्भावादङ्गस्य गुणो न । स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् वा ।
2. '**नुद्**विदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (8-2-56) इत्यनेन निष्ठातकारस्य धातुदकारस्य च नत्वविकल्पः तेन रूपद्वयम् ।
3. '**इगुपध—**' (3-1-135) इति कर्तरि कप्रत्ययः ।
4. 'तुन्दशोकयोः परिमृज**ापनुदोः**' (3-2-5) इत्यत्र 'आलस्य सुखाहरणयोरिति वक्तव्यम्' (वा. 3-2-5) इति वचनात् शोकनिवृत्तिपूर्वकं सुखसम्पादके पुत्रादौ **शोकापनुद** इति कप्रत्ययो भवति । कर्मण्यणोऽपवादः ।
5. केवलं शोकमात्रं यः अपनुदति, न तु सुखस्याहर्ता, तत्र 'कर्मण्यण्' (3-2-1) इत्यणेव ।
6. काकुः=जिह्वा । सा अस्मिन् नुद्यते इति **काकुदम्**=तालु । घञर्थे कविधानम् । पृषोदरादित्वात्— (6-3-109) नुशब्दस्य लोपः ।

A. 'तुदन् कुचरितान् शुभे **प्रणुदमान** इष्टं दिशन्
प्रमृष्टपल्ललान् क्षिपन् अरिमतिं कृषन् माधवः ।' धा. का. 2.72.

B. 'दयितावलोकविकसन्नयनप्रसर**प्रणुन्न**मिव वारिरुहम् ॥' **शि. व.** 9. 71.

C. 'पौरा निवर्तध्वमिति न्यगादीत् तातस्य **शोकापनुदा** भवेत ।' भ. का. 3. 15.

D. 'यदवादिषमप्रियं तव प्रियमाधाय **नुनुत्सुर**स्मि तत् ।' **नैषधे**—2.11.



नोत्तुम्, नोदयितुम्, नुनुत्सितुम्, नोनुदितुम् ;

नुत्तिः, नोदना, नुनुत्सा, नोनुदा ;

नोदनम्, नोदनम्, नुनुत्सनम्, नोनुदनम् ;

नुत्त्वा, नोदयित्वा, नुनुत्सित्वा, नोनुदित्वा ;

प्रणुद्य, प्रणोद्य, प्रणुनुत्स्य, प्रणोनुद्य ;

नोदम् २, नुत्त्वा २, } नोदम् २, नोदयित्वा २, } नुनुत्सम् २, नुनुत्सित्वा २, } नोनुदम् २ ; नोनुदित्वा २ ; }

[1]नौः.

(685) "**णुद प्रेरणे**" (VI-तुदादिः-1426. सक. अनि. पर.)

नोदकः-दिका, नोदकः-दिका, नुनुत्सकः-त्सिका, नोनुदकः-दिका ;

इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखिततौदादिक**नुदति**वत् (684) ज्ञेयानि । अस्य धातोः परस्मैपदिषु पाठात् शानच्प्रत्ययो न भवति । तुदादावेव पुनः पाठफलं तु—कर्तृगामिन्यपि क्रियाफले परस्मैपदित्वमिति बोध्यम् ।

(686) "**णू स्तवने**" (VI. तुदादिः-1397. सक. सेट्. पर.) **कुटादिः** ।

'—स्तुत्यां नुवति, नौति वा ॥' (श्लो. 24) इति **देवः** ।

नावकः-विका, [2]नुविता-त्री, नुवन्-ती-न्ती, नुविष्यन्-न्ती-ती, प्रणूः, [3]प्रण्वौ-प्रण्वः, [4]नूतम्-नूतः-नूतवान्, नुवः, नुवितव्यम्, नुवनीयम्, नव्यम्, [5]अवश्यनाव्यम्, ईषन्नुवः-दुर्नुवः-सुनुवः, नूयमानः, नुवः-नुवितुम्,

---

1. '**ग्लानुदिभ्यां** डौः' [द. उ. 2-12] इति डौप्रत्ययः । टिलोपः । नुदति, नुद्यते वा **नौः**=प्लवः ।
2. अस्य धातोः कुटादिषु पाठात् 'गाङ्**कुटादिभ्यः**—' (1-2-1) इति ञित्‌णिद्-भिन्नानां प्रत्ययानां ङिद्वद्भावातिदेशात् 'क्ङिति च' (1-1-5) इति गुणनिषेधे, उवङादेशे च **नुविता**, **नुविष्यन्** इत्यादीनि रूपाणि बोध्यानि ।
3. क्विबन्ते द्विवचनादौ 'उपसर्गादसमासेऽपि—' (8-4-14) इति णत्वे, '**ओः** सुपि' (6-4-83) इति यण् ।
4. अस्य कुटादित्वात् विशेषविहितेन ङिद्वद्भावेन क्तप्रत्ययस्य कित्त्वं बाध्यते । अतश्च 'श्र्युकः किति' (7-2-11) इति निषेधाप्रवृत्त्या इडागमे '**नुवितः-तवान्**' इति **केचि**द्वदन्ति । तत्तु न समीचीनम् । अत एव 'गाङ्कुटादिभ्यः—' (1-2-1) इति सूत्रे **भाष्ये**—'तस्मात् **नूत्वा** धूत्वा इत्येव भवितव्यम् ।' इत्युक्तिः सङ्गच्छते ।
5. 'ओरावश्यके' (3-1 125) इति ण्यत् । आवादेशः ।

[A]नूतिः, नुवनम्, नूत्वा, प्रणूय, नावम् २ नूत्वा २ इति शुद्धाद्धातो रूपाणि । ण्यन्तात्, सन्नन्तात् यङन्ताच्च क्रमेण नावकः-विका, नुनूषकः, षिका; नोनूयकः-यिका ; इत्यादीनि रूपाणि भ्वादादिक**नौतिवत्** (683) ज्ञेयानि ।

(687) **"णेद कुत्सासन्निकर्षयोः"** (I-भ्वादिः-872. सक. सेट्. उभ.)

'प्रत्येकं निदिनेद्योः स्तां नेदते नेदतीत्युभे ।
कुत्सायां सन्निकर्षे वा, कुत्सामात्रे तु निन्दति॥' (श्लो. 114) इति **देवः** ।

प्रणेदकः-दिका, नेदकः-दिका, निनेदिषकः-षिका, नेनेदकः-दिका ; [B]नेदितः इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्षेपतिवत्** (261) ज्ञेयानि । अस्य धातोः उभयपदित्वात् नेदन्-न्ती नेदिष्यन्-न्ती-ती, इत्यादीनि रूपाण्यधिकानि इति विशेषः ।

(688) **"णेषृ गतौ"** (I-भ्वादिः-617. सक. सेट्. आत्म.)

प्रणेषकः-षिका, नेषकः-षिका, निनेषिषकः-षिका, नेनेषकः-षिका ; [C]नेषितः इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्षेपतिवत्** (261) ज्ञेयानि । क्विपि प्रणेट्-प्रणेड्-प्रणेषौ-प्रणेषः इति रूपाण्यस्येति विशेषः ।

(689) **"तक हसने"** (I-भ्वादिः-117. अक. सेट्. पर.)

'तकेत् तङ्केद् यथासंख्यं हसने कृच्छ्रजीवने ॥' (श्लो. 43) इति **देवः** ।

ताककः-किका, ताककः-किका, तितकिषकः-षिका, तातककः-किका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**ककतिवत्** (139) ज्ञेयानि । अस्य धातोः परस्मैपदित्वात् तकन्-न्ती, तकिष्यन्-न्ती-ती, तितकिषन्-न्ती-ती, तितकिषिष्यन्-न्ती-ती; इति शतरि रूपाणि भवन्तीति विशेषः । [1]तक्यम्, [2]व्यतितकन्-न्ती ।

---

1. '**तकि**शसिजनिभ्यो यद्वाच्यः' (वा. 3-1-97) इति ण्यदपवादो यत्प्रत्ययः ।
2. 'प्रतिषेधे हसादीनामुपसंख्यानम्' (वा. 1-3-15) इति वचनात् कर्मव्यतीहारेऽपि शानज् न । हसादयः=हसनाद्यर्थकाः धातवः ।

A. '**नूत्वा** किं भयधूतविद्रुतगुवल्लोकं तदा तद्धुवत्
कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥' धा. का. 2.82.

B. 'या **नेदितो**र्वीपरिशर्धिवीचीविमृद्धवृक्षादिविबोध्यशैत्या ॥' धा. का. 2.26.

C. 'येषणामहरिजेषसंभ्रमान्नेषितस्मृतिरपेषितो रथात् ॥' धा. का. 1. 78.



(690) **"तकि कृच्छ्रजीवने"** (I-भ्वादिः-118. अक. सेट्. पर.)

'तकेत् तङ्केद् यथासंख्यं हसने, कृच्छ्रजीवने ॥' (श्लो. 43) इति **देवः** ।

तङ्ककः-ङ्किका, तङ्ककः-ङ्किका, तितङ्किषकः-षिका, तातङ्ककः-ङ्किका ; [A]तङ्कन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कन्दतिवत्** (163) ज्ञेयानि ।

(691) **"तक्ष त्वचने"** (I-भ्वादिः-665. सक. सेट्. पर.) [अ]

'त्वचनम्=संवरणम्, त्वचो ग्रहणं च' इति **सिद्धान्तकौमुदी** ।
'ग्रहणमात्रे च' इति **द्रुमे** ।' इति **धातुकाव्यव्याख्याने** (1-84) ।
'स्यात् तक्षतीति त्वचनेऽथ वा श्नौ तक्ष्णोति तक्षेच्च तनूक्रियायाम् ।'
(श्लो. 183) इति **देवः** ।

तक्षकः-क्षिका, तक्षकः-क्षिका, तितक्षिषकः-षिका, तातक्षकः-क्षिका ;
तक्षिता-त्री, तक्षयिता-त्री, तितक्षिषिता-त्री, तातक्षिता-त्री ;
तक्षन्-न्ती, तक्षयन्-न्ती, तितक्षिषन्-न्ती ; —
तक्षिष्यन्-न्ती-ती, तक्षयिष्यन्-न्ती-ती, तितक्षिषिष्यन्-न्ती-ती ; —
—तक्षयमाणः, तक्षयिष्यमाणः, — तातक्ष्यमाणः, तातक्षिष्यमाणः ;
[1]तट्-तड्-तक्षौ-तक्षः ; — — —

---

[अ] इदमिहावधेयम् । '**त्वक्ष त्वचने**' इति **क्षीरस्वामि**सम्मतः पाठः । न तु '**तक्ष** त्वचने' इति । अत एव, **काशिकावृत्तौ** 'तनूकरणे **तक्षः**' (3-1-76) इत्यत्र **तक्ष**धातोः तनूकरणेऽर्थे एव पाठात् सिद्धे, 'तनूकरणे' इति विशेषणं किमर्थमित्याशङ्क्य, धातूनामनेकार्थत्वेन अर्थान्तरवृत्तेस्तक्षधातोः श्नुप्रत्ययो न भवतीत्युक्तम् । यदि **तक्ष**धातुः त्वचनार्थे प्रामाणिकः स्यात्, त्वचनार्थक**तक्ष**-धातोर्व्यावर्तनेन 'तनूकरणे' इति विशेषणस्य सार्थक्यं वदेत् । तथा, **बालमनोरमायाम**पि—'न च **तक्षू**धातोस्तनूकरणार्थकत्वाव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्थमिति वाच्यम्—अत एव धातुपाठेऽर्थनिर्देशस्योपलक्षणत्वावगमात् ।' इत्युक्तिस्त्वचनार्थक**तक्षते**रभावेऽनुकूला भवति । 'सङ्घाते द्वौ म्रक्ष-मृक्ष-त्वचने **त्वक्ष** कथ्यते ॥' (श्लो. 144) इति **धातुपाठकारिका**ऽपि '**त्वक्ष** त्वचने' इति पाठस्यैवानुकूला । सुधियोऽत्र तत्त्वं निर्णयन्तु ।

1. पदान्ते, 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति कलोपे, 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे, चर्त्वे च रूपम् ।

A. 'अफक्कतातक्ययगुणेन **तङ्कता** खलश्वबुक्कापरुषे पुरेऽमुना ।' धा. का. 1. 17.

तक्षितः-तम्, तक्षितः, तितक्षिषितः, तातक्षितः-तवान्;
तक्षः, तक्षः, तितक्षिषुः, तातक्षः;
तक्षितव्यम्, तक्षयितव्यम्, तितक्षिषितव्यम्, तातक्षितव्यम्;
तक्षणीयम्, तक्षणीयम्, तितक्षिषणीयम्, तातक्षणीयम्;
तक्ष्यम्, तक्ष्यम्, तितक्षिष्यम्, तातक्ष्यम्;
ईषत्तक्षः-दुस्तक्षः-सुतक्षः; — —
तक्ष्यमाणः, तक्ष्यमाणः, तितक्षिष्यमाणः, तातक्ष्यमाणः;
तक्षः, तक्षः, तितक्षिषः, तातक्षः;
तक्षितुम्, तक्षयितुम्, तितक्षिषितुम्, तातक्षितुम्;
[1]तक्षा, तक्षणा, तितक्षिषा, तातक्षा;
तक्षणम्, तक्षणम्, तितक्षिषणम्, तातक्षणम्;
तक्षित्वा, तक्षयित्वा, तितक्षिषित्वा, तातक्षित्वा;
सन्तक्ष्य, सन्तक्ष्य, सन्तितक्षिष्य, सन्तातक्ष्य;
तक्षम् २, तक्षित्वा २, } तक्षम् २, तक्षयित्वा २, } तितक्षिषम् २, तितक्षिषित्वा २, } तातक्षम् २; तातक्षित्वा २. }

(692) " **तक्षू तनूकरणे** " (I-भ्वादिः-655. सक. वेट्. पर.)

'**तनूकरणम्**=स्थूलस्य काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणम्' इति **बालमनोरमा** ॥

'स्यात् तक्षतीति त्वचनेऽथ वा श्नौ तक्ष्णोति तक्षेच्च तनूक्रियायाम् ।'
(श्लो. 183) इति **देवः** ।

तक्षकः-क्षिका, तक्षकः-क्षिका, तितक्षिषकः-[2]तितक्षकः-क्षिका, तातक्षकः-क्षिका;
[3]तक्षिता-त्री-तष्टा-ष्ट्री, तक्षयिता-त्री, तितक्षिषिता-तितक्षिता-त्री, तातक्षिता-त्री;

---

1. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः ।
2. ऊदित्त्वादिड्विकल्पः । इडभावपक्षे, 'स्कोः—' (8-2-29) इति झल्निमित्तके कलोपे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारादेशे, 'आदेशप्रत्ययोः' (8-3-59) इति सनः सकारस्य षत्वे च **तितक्षकः** इति रूपम् । एवं सर्वत्रेडभावपक्षे सन्नन्ते प्रक्रिया ज्ञेया ।
3. ऊदित्त्वेनेड्विकल्पः । तेन रूपद्वयम् । इडभावपक्षे 'स्कोः—' (8-2-29) इति कलोपे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वे च रूपम् । एवं तव्यदादिष्वपि ज्ञेयम् ।



[1]तक्ष्णुवन्-ती, तक्षन्-न्ती, तक्षयन्-न्ती, तितक्षिषन्-तितक्षन्-न्ती; —
तक्षिष्यन्-तक्ष्यन्-न्ती-ती, तक्षयिष्यन्-न्ती-ती, तितक्षिषिष्यन्-तितक्षिष्यन्-न्ती-ती; —
— तक्षयमाणः, तक्षयिष्यमाणः, — तातक्ष्यमाणः, तातक्षिष्यमाणः;
[2]तट्-तड्-तक्षौ-तक्षः; — — —
[3]तष्टम्-तष्टः-तष्टवान्, तक्षितः, तितक्षिषितः-तितक्षितः, तातक्षितः-तवान्;
तक्षः, तक्षः, तितक्षिषुः-तितक्षुः, तातक्षः;
तक्षितव्यम्-तष्टव्यम्, तक्षयितव्यम्, तितक्षिषितव्यम्-तितक्षितव्यम्, तातक्षितव्यम्;
तक्षणीयम्, तक्षणीयम्, तितक्षिषणीयम्-तितक्षणीयम्, तातक्षणीयम्;
तक्ष्यम्, तक्ष्यम्, तितक्षिष्यम्-तितक्ष्यम्, तातक्ष्यम्;
ईषत्तक्षः-दुस्तक्षः-सुतक्षः; — — —
तक्ष्यमाणः, तक्ष्यमाणः, तितक्षिष्यमाणः-तितक्ष्यमाणः, तातक्ष्यमाणः;
तक्षः, तक्षः, तितक्षिषः-तितक्षः, तातक्षः;
तक्षितुम्-तष्टुम्, तक्षयितुम्, तितक्षिषितुम्-तितक्षितुम्, तातक्षितुम्;
[4]तक्षा, तक्षणा, तितक्षिषा-तितक्षा, तातक्षा;
[A]तक्षणम्, तक्षणम्, तितक्षिषणम्-तितक्षणम्, तातक्षणम्;
तक्षित्वा-तष्ट्वा, तक्षयित्वा, तितक्षिषित्वा-तितक्षित्वा, तातक्षित्वा,
सन्तक्ष्य, सन्तक्ष्य, सन्तितक्षिष्य-सन्तितक्ष्य, सन्तातक्ष्य;
तक्षम् २, तक्षित्वा २-तष्ट्वा २, } तक्षम् २, तक्षयित्वा, } तितक्षिषम् २-तितक्षम् २, तितक्षिषित्वा २-तितक्षित्वा २, } तातक्षम् २; तातक्षित्वा २; }

---

1. 'तनूकरणे **तक्षः**' (3-1-76) इति शब्विषये श्नुप्रत्ययः विकल्पेन भवति । उवङादेशः । श्नुप्रत्ययाभावे शपि **तक्षन्** इति भवति ।
2. क्विपि, 'स्कोः—(8-2-29) इति कलोपे, षकारस्य जश्त्वचर्त्वयो रूपम् ।
3. ऊदित्त्वेन वैकल्पिकेट्त्वात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः । टाप् ।

A. 'घोषद्भूषः पङ्कजाक्षस्तमूचे पात्रश्रेणीतक्षणे त्वष्टृधर्म ।' धा. का. 1.83.

[1]तक्षकः, [2]तक्षा.

(693) "**तगि गत्यर्थः**" (I-भ्वादिः-149. सक. सेट्. पर.)

'**तगिः** स्खलने रूढः । तङ्गति ।' इति **क्षीरस्वामी** ।

तङ्गकः-ङ्गिका, तङ्गकः-ङ्गिका, तितङ्गिषकः-षिका, तातङ्गकः-ङ्गिका; [A]तङ्गितम्, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कन्दति**वत् (163) ज्ञेयानि ।

(694) "**तट उच्छ्राये**" (I-भ्वादिः-308. अक. सेट्. पर.)

'नगाद्यारोह उच्छ्रायः—' इत्यमरः ।

ताटकः-टिका, ताटकः-टिका, तितटिषकः-षिका, तातटकः-टिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कठति**वत् (148) ज्ञेयानि । तटः-[3]तटी, इति विशेषः ।

(695) "**तड आघाते**" (X-चुरादिः-1579. सक. सेट्. उभ.)

'शोभार्थश्च **द्रुमे** ।' इति **धा. का. व्याख्याने** (3-18) ।

ताडकः-डिका, तिताडयिषकः-षिका, इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिकगालयति**वत् (388) ज्ञेयानि । अस्य धातोरुभयपदित्वात् ताडयन्-न्ती, तिताडयिषन्-न्ती, ताडयिष्यन्-न्ती-ती, तिताडयिषिष्यन्-न्ती-ती, इति रूपाण्यधिकानीति विशेषः । [B]सन्ताडनम् । सन्ताडितः । [4]तण्डुलः ।

---

1. 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' [द. उ. 3.5] इति क्वुन्प्रत्ययः । तस्याकादेशः । **तक्षकः**=सर्पविशेषः ।
2. 'कनिन् युवृषितक्षि—' [द. उ. 6.51] इति कनिन्प्रत्ययः । तक्ष्णोति, तक्षति इति वा **तक्षा**=शिल्पी ।
3. पचाद्यजन्तात् स्त्रियां गौरादिपाठात् ङीष् ।
4. औणादिके [द. उ. 10-17] उलप्रत्यये नुमागमः, ह्रस्वश्च निपात्यते । **तण्डुलः**=व्रीहिसारः । ताड्यते इति **तण्डुलः** । संज्ञाशब्देषु केवलं व्युत्पत्तिमात्रं प्रदर्श्यते । नावयवार्थेऽभिनिवेशः कार्यः ।

A. 'विलङ्घ्देणं शबराङ्गनाजनप्रवञ्चितं मङ्गलधेनुत**ङ्गितम्** ॥' धा. का. 1.20.

B. 'छन्दन् शुचं वरमशिश्रिणदाश्रितानां
**सन्ताडनै**र्वृषभदैत्यमखाडयच्च ॥' धा. का. 3. 18.



(696) "**तड भाषार्थः**" (X-चुरादिः-1802. सक. सेट्. उभ. **आस्वदीयः** ।)

ताडकः-डिका, तिताडयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिकगालयति**वत् (388) ज्ञेयानि । अस्य धातोरास्वदीयत्वेन 'आस्वदः सकर्मकात्' (ग. सू. चुरादौ) इत्यनेन सकर्मकादेव णिज् भवति । अकर्मकत्वे तु भ्वादिपाठेन परस्मैपदमेवेति ज्ञेयम् ।

(697) "**तडि ताडने**" (I-भ्वादिः-280. सक. सेट्. आत्म.)

**ताडनम्** = निरसनम् ।

तण्डकः-ण्डिका, तण्डकः-ण्डिका, तितण्डिषकः-षिका, तातण्डकः-ण्डिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कण्ठति**वत् (149) ज्ञेयानि । [1]वतण्डः, [2]वितण्डा, वैतण्डिकः.[A]

(698) "**तत्रि कुटुम्बधारणे**" (X-चुरादिः-1679. अक. सेट्. आत्म.)

**आकुस्मीयः** ।

तन्त्रकः-न्त्रिका, तितन्त्रयिषकः-षिका; तन्त्रयिता-त्री तितन्त्रयिषिता-त्री;
[3]तन्त्रयमाणः, तितन्त्रयिषमाणः; तन्त्रयिष्यमाणः, तितन्त्रयिषिष्यमाणः;
[4]तन्-तन्त्रौ-तन्त्रः; — — —
तन्त्रितः, तितन्त्रयिषितः-तवान्; तन्त्रः, स्वतन्त्रः, तितन्त्रयिषुः;
तन्त्रयितव्यम्, तितन्त्रयिषितव्यम्; तन्त्रणीयम्, तितन्त्रयिषणीयम्;
तन्त्र्यम्, तितन्त्रयिष्यम्; ईषत्तन्त्रः-दुस्तन्त्रः-सुतन्त्रः; —
तन्त्र्यमाणः, तितन्त्रयिष्यमाणः; तन्त्रः, तन्त्रम्, तितन्त्रयिषः;
तन्त्रयितुम्, तितन्त्रयिषितुम्; तन्त्रणा, तितन्त्रयिषा;

---

1. अवपूर्वकादस्मात् पचाद्यचि (3-1-134) 'वष्टि **भागुरि**रल्लोपमवाप्योरुपसर्गयोः ।' इति वचनेन 'अव' इत्यत्रोपसर्गस्थाकारस्य लोपे **वतण्डः** इति भवति ।
2. विपूर्वकादस्मात् 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः । **वितण्डया**=दीव्यति=व्यवहरतीत्यर्थे, 'तेन दीव्यति खनति जयति जितम्' (4-4-2) इति ठक्प्रत्यये **वैतण्डिकः** । 'स्वपक्षस्थापनाहीनः परपक्षप्रतिक्षेपो **वितण्डा**' इति **न्यायसूत्रम्** ।
3. 'आकुस्मादात्मनेपदिनः' (ग. सू. चुरादौ) इति वचनात् आत्मनेपदं शानच् ।
4. क्विपि, णिलोपे, पूर्वं रेफस्य संयोगान्तलोपे, पश्चात् तकारस्यापि संयोगान्तलोपः ।

A. 'अभुण्डितोच्चण्डगतीनशण्डनान् कुमार्गवै**तण्डिक**पण्डितान्वृतान् ।' धा. का. 1.37.

[A]तन्त्वणम्, तितन्त्वयिषणम्; तन्त्वयित्वा, तितन्त्वयिषित्वा;
प्रतन्त्य, प्रतितन्त्वयिष्य; तन्त्वम् २, तन्त्वयित्वा २, } तितन्त्रयिषम् २; तितन्त्रयिषित्वा २; }

[1]तन्त्वीः.

## (699) "तनु विस्तारे" (VIII-तनादिः-1463. सक. सेट्. उभ.)

'श्रद्धोपकरणार्थस्य तनेस्तनति तानयेत् ॥
दैर्घ्यार्थस्योपसर्गात् तु, विस्तारे तनुतेऽतनोत्।' (श्लो. 127-128) इति **देवः**।

तानकः-निका, तानकः-निका, [2]तितनिषकः-षिका, तितांसकः-तितंसकः-सिका, [3]तन्तनकः-तंतनकः-निका;
तनिता-त्री, तानयिता-त्री, तितनिषिता-तितांसिता-तितंसिता-त्री, तन्तनिता-त्री;
[4]तन्वन्-[B]ती, तानयन्-न्ती, तितनिषन्-तितांसन्-तितंसन्-न्ती; —

1 'अवितृस्तृतन्त्रिभ्य ईः' [द. उ. 1. 82.] इति ईप्रत्ययो भवति। **तन्त्र्यते**= धार्यतेऽनया इति **तन्त्रीः**=सिरा, वादित्रं च।
'अवी **तन्त्री** तरी लक्ष्मी धी ह्री श्रीणामुणादिषु।
सप्त स्त्रीलिङ्गशब्दानां न सुलोपः कदाचन ॥' इति वचनात् **तन्त्रीः** इत्येव, न तु सुलोपः।

2. '**तनि**पतिदरिद्रातिभ्यः सनो वा इड् वाच्यः, (वा. 7-2-49) इत्यनेन सन इड्विकल्पः। इट्पक्षे रूपमेवम्। इडभावपक्षे, '**तनोते**र्विभाषा' (6-4-17) इत्युपधाया दीर्घविकल्पः। 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारः। दीर्घपक्षे **तितांसकः** दीर्घाभावपक्षे, **तितंसकः** इति रूपम्। एवं सन्नन्ते सर्वत्र रूपत्रयस्योपपत्तिः।

3. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति नुगागमः। 'स च पदान्तवद् वाच्यः' (वा. 7-4-85) इति वचनेन, 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र परसवर्णघटितमेकम्, अनुस्वारघटितमेकमिति रूपद्वयं बोध्यम्।

4. '**तना**दिकृञ्भ्य उः' (3-1-79) इति उः विकरणप्रत्ययः। यणादेशः। एवं **तन्वान** इत्यत्रापि बोध्यम्।

A. 'संज्ञापितः सदसि डेपितत्रुण्णिवीरे भोजेन्द्र**तन्त्वण**विनिन्द्यममन्त्रतैवम् ॥'
धा. का. 3.33.

B. '**तन्वन्** स मघभुवि सातरसः स्वबन्धूनक्षण्वतां क्षितिकरो मुदमर्णवानः।'
धा. का. 3. 4.



तनिष्यन्-न्ती-ती, तानयिष्यन्-न्ती-ती, तितनिषिष्यन्-तितांसिष्यन्-तितंसिष्यन्-न्ती-ती; —
तन्वानः, तानयमानः, तितनिषमाणः-तितांसमानः-तितंसमानः, तन्तन्यमानः;
तनिष्यमाणः, तानयिष्यमाणः, तितनिषिष्यमाणः-तितांसिष्यमाणः-तितंसिष्यमाणः, तन्तनिष्यमाणः;
[1]परीतत्, पुरीतत्-पुरीततौ-पुरीततः; — —
[2]ततः-ततम्-सन्ततम्-सततम्-तवान्, [3]तनितः, तानितः, तितनिषितः-तितांसितः-तितंसितः, तन्तनितः-तवान्;
[4]अवतानः-तानः, तानः, तितनिषुः-तितांसुः-तितंसुः, तन्तनः;
तनितव्यम्, तानयितव्यम्, तितनिषितव्यम्-तितांसितव्यम्-तितंसितव्यम्, तन्तनितव्यम्;
तननीयम्, ताननीयम्, तितनिषणीयम्-तितांसनीयम्-तितंसनीयम्, तन्तननीयम्;
तान्यम्, तान्यम्, तितनिष्यम्-तितांस्यम्-तितंस्यम्, तन्तन्यम्;
ईषत्तनः-दुस्तनः-सुतनः, — — —

1. क्विपि, 'गमः क्वौ' (6-4-40) इत्यत्र 'गमादीनामिति वक्तव्यम्' (वा. 6-4-40) इत्युक्तत्वात् गमप्रकाराणां ग्रहणेनास्यापि अनुनासिकलोपे, तुकि, 'नहिवृतिवृषिव्यधिरुचिसहि**तनिषु** क्वौ' (6-3-116) इति पूर्वपदस्य दीर्घे च रूपम्। पुरि= शरीरे तनोति=विस्तृतो भवति इत्यर्थे, 'हलदन्तात् सप्तम्याः संज्ञायाम्' (6-3-9) इत्यलुकि, 'नहिवृति—' (6-3-116) इति पूर्वपदस्य दीर्घे च रूपम्। **पुरीतत्**= नाडीविशेषः।

2. सनि वैकल्पिकेट्त्वादस्य, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधे, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति नलोपे, रूपम्। 'समो वा हित**ततयोः**—' (वा. 6-3-109) इति समो मकारस्य वा लोपः।

3. 'द्वितीया श्रितातीत**पतित**—' (2-1-24) इत्यत्र **पतिते**ति निपातनात् 'यस्य विभाषा' (7-2-15) इत्यस्यानित्यत्वं कुत्रचित् बोध्यते। तेन '**धावित**मिभराजभिया' इत्यादिषु कुत्रचित् निष्ठायामिड् भवतीति ज्ञेयम्। एवमत्रापि निष्ठायामिटि **तनितम्** इति भवतीति **प्रक्रियासर्वस्वे**।

4. '**तनोते**रुपसङ्ख्यानम्' (वा. 3-1-140) इति कर्तरि णप्रत्ययः। पचाद्यचोऽपवादः। अवतनोतीत्य**वतानः**।

[1]तन्यमानः-तायमानः, तान्यमानः, तितनिष्यमाणः-तितांस्यमानः-तितंस्यमानः, तन्तन्यमानः ;

तानः-वितानः-सन्तानः, तानः, तितनिषः-तितांसः-तितंसः-तन्तनः ;

तनितुम्, तानयितुम्, तितनिषितुम्-तितांसितुम्-तितंसितुम्, तन्तनितुम् ;

ततिः[A] [2]विततिः-सन्ततिः, [3]तन्तिः, तानना, तितनिषा-तितांसा-तितंसा, तन्तना ;

तननम्, ताननम्, तितनिषणम्-तितांसनम्-तितंसनम्, तन्तननम् ;

[4]तनित्वा-तत्वा, तानयित्वा, तितनिषित्वा-तितांसित्वा-तितंसित्वा, तन्तनित्वा ;

[5]वितत्य,[B] प्रतान्य, प्रतितनिष्य-प्रतितांस्य-प्रतितंस्य, प्रतन्तन्य ;

तानम् २, तनित्वा२, तत्वा २, } तानम् २, तानयित्वा २, } तितनिषम् २- तितांसम् २- तितंसम् २, तितनिषित्वा २-तितांसित्वा २-तितंसित्वा २, } तन्तनम् २ ; तन्तनित्वा २. }

---

1. '**तनोते**र्यकि' (6-4-44) इति धातुनकारस्य आत्वविकल्पः। आत्वपक्षे सवर्णदीर्घे **तायमानः** इति भवति।
2. 'तितुत्र—' (7-2-9) इति इण्णिषेधः। नकारलोपः।
3. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तिचि, 'तितुत्र—' (7-2-9) इतीण्णिषेधे, 'न क्तिचि दीर्घश्च' (6-4-39) इति दीर्घ-अनुनासिकलोपयोर्निषेधः।
4. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षे अनुनासिकलोपः।
5. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणात् **तनोत्यादीनां** नित्यमनुनासिकलोपः। **क्षीरस्वामी** तु व्यवस्थितविभाषामनाश्रित्य, **वितत्य, प्रतान्य** इति रूपद्वयमाह।

A. 'कृत्वा मारुतिलङ्घनोत्थितरयात् तत्रानुयात्रां ततः
पर्यायात् पतिता महेन्द्रगहनक्षोणीरुहाणां **ततिः**।' च. रा. 5. 2.

B. 'दृष्ट्वोर्णुवानान् ककुभो बलौघान् **वितत्य** शार्ङ्गं कवचं पिनह्य।' भ. का. 3. 47.



[1]तन्द्रिः, [2]तनुः, [3]तन्तुः, [4]तातः, [5]तनयः, [6]तन्त्रम्, [7]तितउः.

## (700) "तनु श्रद्धोपकरणयोः" (X-चुरादिः-1841. स. सेट्. उभ.)

### आधृषीयः।

'श्रद्धोपकरणार्थस्य तनेस्तनति तानयेत्।' (श्लो. 127) इति **देवः**।

'उपसर्गाच्च दैर्घ्ये' (ग. सू. चुरादौ) इति पठ्यते। अत्र चकारो भिन्नक्रमः। उपसर्गात् परो यस्तनुधातुः-सः दैर्घ्ये च, चकारात् श्रद्धोपकरणयोश्च णिचं विकल्पेन लभते इत्यर्थः। अनुपसृष्टात्तु श्रद्धोपकरणयोरेव णिज्विकल्पः।

तानकः-निका, अवतानकः-निका, तितानयिषकः-षिका, तानकः-वितानकः-निका, तितनिषकः-षिका, तितांसकः-तितंसकः-सिका, तंतनकः-तन्तनकः, निका ;

तानयिता-अवतानयिता-त्री, तितानयिषिता-त्री, तनिता-वितनिता-त्री, तितनिषिता-तितांसिता-तितंसिता-त्री, तंतनिता-तन्तनिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कालयति**वत् (175) ज्ञेयानि। 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिचो वैकल्पिकत्वेन शुद्धाद्धातोः

---

1. '**तनोते**र्ड्रिः' [द. उ. 1-79] इति ड्रिप्रत्ययः। तनोति, तन्यते इति वा **तन्द्रिः**=बुद्धिः।
2. औणादिके [द. उ. 1-92] उप्रत्यये रूपम्। आहारजातं प्राप्य **तनोति**=विस्तारं गच्छतीति **तनुः**=शरीरम्।
3. 'सि**तनि**गमि—' [द. उ. 1-122] इति तुन्प्रत्ययः। 'तितुत्र—' (7-2-9) इतीण्णिषेधः। तन्यते इति **तन्तुः**=सूत्रम्।
4. '**दुतनिभ्यां** दीर्घश्च' [द. उ. 6-10] इति क्तप्रत्ययः। 'तितुत्रतथ—' (7-2-9) इति इतीण्णिषेधः। नकारलोपः। दीर्घः। तनोतीति **तातः**=पिता।
5. 'वलिमलि**तनिभ्यः** कयन्' [द. उ. 8-10] इति कयन्प्रत्ययः। तनोति कुलमिति **तनयः**=पुत्रः।
6. औणादिकः [द. उ. 8-89] त्रप्रत्ययः। 'तितुत्र—' (7-2-9) इति इण्णिषेधः। **तन्त्रम्**=विस्तीर्णम्, शास्त्रसङ्ग्रहो वा।
7. '**तनोते**र्डउः सन्वच्च' [द. उ. 1-160] इति डउप्रत्ययः। सन्वद्भावात् द्वित्वादिकार्यम्। टिलोपः। विकृतनिर्देशात् सन्धिकार्यं न। तनोति=पिष्टद्रव्याणि शोधयतीति **तितउः**=चालिनी। 'चालिनी **तितउः** पुमान्।' इत्य**मरः**।

सन्नन्तात्, यङन्ताच्च पूर्वोक्ततनुधातुवत् (699) रूपाणि ज्ञेयानि। [A]वितनन्[1] तनन्। [2]नितान्तम्।

**(701) "तञ्चु गत्यर्थः"** (I-भ्वादिः-191. सक. सेट्. पर.)

आङुपसृष्टस्यास्यार्थो भिद्यते-यथा-**आतञ्चनम्**=पयसि रसविशेषोत्पादनाय घनीभावाय च तक्रस्य किञ्चिन्मिश्रणम्। तञ्चकः-ञ्चिका, तञ्चकः ञ्चिका, तितञ्चिषकः-षिका, तातञ्चकः-चिका-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक-**चञ्चति**वत् (496) ज्ञेयानि। [B]तञ्चन्-न्ती। [3]तक्रम्।

**(702) "तञ्चू सङ्कोचने"** (VII-रुधादिः-1459. सक. सेट्. पर.)

'**तञ्जू**—' इति क्षीरस्वामिसम्मतः पाठः। जकारान्तमध्ये पाठात् एवमेव न्याय्यम्, इति तदाशयः।

तञ्चकः-ञ्चिका, तञ्चकः-ञ्चिका, [4]तितञ्चिषकः-षिका-तितङ्क्षकः-क्षिका, [5]तातचकः-चिका;

[6]तञ्चिता-तङ्क्ता-त्री, तञ्चयिता-त्री, तितञ्चिषिता-तितङ्क्षिता-त्री, तातचिता-त्री;

1. णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदम् शता।
2. क्तप्रत्यये, 'अनुनासिकस्य—' (6-4-15) इति दीर्घे च रूपमेवम्।
3. 'स्फायितञ्चिवञ्चि—' [द. उ. 8. 31.] इति रक्प्रत्ययो भवति। कित्त्वादुपधानकारस्य लोपः। न्यङ्क्वादित्वात् (7-3-53) कुत्वम्। **तक्रम्**=उदश्वित्।
4. ऊदित्त्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा (7-2-44) इति सूत्रेणास्य धातोर्वलाद्यार्धधातुकस्येड्विकल्पः। इडभावपक्षे, 'चो कुः' (8-2-30) इति चकारस्य ककारः। 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनेन, नकारस्यानुस्वारे, 'आदेशप्रत्यययोः' (8-4-59) इति सनः सकारस्य षकारः। 'अनुस्वारस्य ययि—(8-3-58) इति परसवर्णे च **तितङ्क्षकः** इति रूपम्। एवमिडभावपक्षे सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
5. यङन्ताण्ण्वुलि, 'अनिदिताम्—' (6-4-24) इत्युपधानकारस्य लोपे 'यस्य हलः' (6-4-49) 'अतो लोपः' (6-4-48) इति क्रमेण यकाराकारयोर्लोपे द्वित्वे च रूपम्। एवं यङन्ते सर्वत्र ज्ञेयम्।
6. ऊदित्त्वेन वलादेरार्धधातुकस्येड्विकल्पः। इडभावपक्षे, कुत्वानुस्वारपरसवर्णा भवन्ति। एवं तव्यदादिष्वपि ज्ञेयम्।

A. 'आपन् खेदमरिं **तनन्** जनहितं चिक्रीड गोपैर्हरिः
तूर्योत्थो **वितनन्** ध्वनिर्दिवमगाद् दूतो यथा वादितः॥' धा. का. 3.51.

B. 'आवक्रचञ्चूपुट**तञ्च**दारवत्वञ्चत्खगप्रुक्तशिखैर्लताद्रुमैः।' धा. का. 1.26.



[1]तञ्चन्-ती, तञ्चयन्-न्ती, तितञ्चिषन्-तितङ्क्षन्-न्ती; —

तञ्चिष्यन्-तङ्क्ष्यन्-न्ती-ती, तञ्चयिष्यन्-न्ती-ती, तितञ्चिषिष्यन्, तितङ्क्षिष्यन्-न्ती-ती; —

— तञ्चयमानः, तञ्चयिष्यमाणः, — तातच्यमानः, तातचिष्यमाणः;

[2]संतक्-संतग्-सन्तचौ-सन्तचः; — —

[3]तक्तम्-[A]क्तः-क्तवान्, तञ्चितः, तितञ्चिषितः-तितङ्क्षितः, तातचितः-तवान्;

तञ्चः, तञ्चः, तितञ्चिषुः-तितङ्क्षुः, [4]तातञ्चः;

तञ्चितव्यम्-तङ्क्तव्यम्, तञ्चयितव्यम्, तितञ्चिषितव्यम्-तितङ्क्षितव्यम्, तातचितव्यम्;

तञ्चनीयम्, तञ्चनीयम्, तितञ्चिषणीयम्-तितङ्क्षणीयम्, तातचनीयम्;

[5]तङ्क्यम्, तञ्च्यम्, तितञ्चिष्यम्-तितङ्क्ष्यम्, तातच्यम्;

ईषत्तञ्चः-दुस्तञ्चः-सुतञ्चः; — — —

तच्यमानः, तञ्च्यमानः, तितञ्चिष्यमाणः-तितङ्क्ष्यमाणः, तातच्यमानः;

आतङ्कः, तञ्चः, तितञ्चिषः-तितङ्क्षः, तातचः;

तञ्चितुम्-तङ्क्तुम्, तञ्चयितुम्, तितञ्चिषितुम्-तितङ्क्षितुम्, तातचितुम्;

तञ्चा, तञ्चना, तितञ्चिषा-तितङ्क्षा, तातचा;

तञ्चनम्, तञ्चनम्, तितञ्चिषणम्-तितङ्क्षणम्, तातचनम्;

[6]तञ्चित्वा-तक्त्वा, तञ्चयित्वा, तितञ्चिषित्वा-तितङ्क्षित्वा, तातचित्वा;

प्रतच्य, प्रतञ्च्य, प्रतितञ्चिष्य-प्रतितङ्क्ष्य, प्रतातच्य;

1. '**रुधादिभ्यः** श्नम्' (3-1-78) इति श्नम् विकरणप्रत्ययः। मित्त्वादयम् अन्त्यादचः परो भवति। 'श्नान्नलोपः' (6-4-23) इति धातुनकारस्य लोपः। 'श्नसोरल्लोपः' (6-4-111) इति अकारलोपः। अनुस्वारपरसवर्णौ भवतः।
2. सम्यक् तञ्चतीति **सन्तक्**। 'अनिदिताम्—' (6-4-24) इत्युपधानकारस्य लोपः।
3. ऊदित्त्वेनेड्विकल्पात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः। उपधानकारलोपः। कुत्वम्।
4. 'यङोऽचि च' (2-4-74) इत्यनेन यङो लुक्। नचात्रोपधानकारस्य लोपः शङ्क्यः; लुका लुप्तत्वेन 'न लुमताऽङ्गस्य' (1-1-63) इति प्रत्ययलक्षणाभावात्।
5. 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम्। एवं घञ्यपि कुत्वं ज्ञेयम्।
6. इट्पक्षे, 'न क्त्वा सेट्। (1-2-18) इति कित्त्वनिषेधान्नलोपो न।

A. '**संतक्त**नद्धवसनाः परिवेगवृक्ता
रङ्गं समेत्य पपृचुः स्वजनांश्च मल्लाः॥' धा. का. 3.3.

तञ्चम् २, तञ्चित्वा-तक्त्वा २, } तञ्चम् २, तञ्चयित्वा २, } तितञ्चिषम् २-तितङ्क्षम् २, तितञ्चिषित्वा २-तितङ्क्षित्वा २, }. तातचम् २ ; तातचित्वा २. }

(703) **"तप सन्तापे"** (I-भ्वादिः-985. सक. सेट्. पर.)

'सन्तापेऽर्थे तपेद् दाहे तापयेत् तपते तपेत् ।
ऐश्वर्ये वा दिवादित्वात् तप्यते तपतीति च ॥' (श्लो. 131) इति **देवः** ।

तापकः-पिका, तापकः-पिका, [1]तितप्सकः-प्सिका, तातपकः-पिका ;
तप्ता[2]निष्टप्ता-निस्तप्ता-त्री, तापयिता-त्री, तितप्सिता-त्री ; तातपिता-त्री;
[3]उत्तपन्-निष्टपन्-[वा सुवर्णं] न्ती, तापयन्-न्ती, तितप्सन्-न्ती ; —
तप्स्यन्-न्ती-ती, तापयिष्यन्-न्ती-ती, तितप्सिष्यन्-न्ती-ती ; —
[4]उत्तपमानः[A]-वितपमानः, [5]उत्तपमानः [पृष्ठम्], तापयमानः — तातप्यमानः ;
उत्तप्स्यमानः-वितप्स्यमानः-तापयिष्यमाणः, — तातपिष्यमाणः ;
संतप्-सन्तपौ-संतपः ; — — —
तप्तः-[B]सन्तप्तः, तप्तम्, तापितः, तितप्सितः, तातपितः-तवान् ;
[6]तपनः, [7]ललाटन्तपः[C] [आदित्यः],

1. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वात् न गुणः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. '**निसस्तपता**वनासेवने' (8-3-102) इति षत्वम् । **आसेवनम्**=पुनः पुनः करणम् । "'**निष्टप्तं** रक्षो **निष्टप्ता** अरातयः ।' इत्यत्र सदप्यासेवनं न विवक्ष्यते । छान्दसो वा वर्णविकारः ।" इति **काशिका** (8-3-102) । आसेवने तु **निस्तप्ता** इत्येव ।
3. '**उद्विभ्यां तपः**' (1-3-27) इत्यत्र 'अकर्मकाच्च' (1-3-26) इत्यनुवृत्तेः सकर्मकात् परस्मैपदमेव ।
4. '**उद्विभ्यां तपः**' (1-3-27) इति शानच् ।
5. 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' (वा. 1-3-27) इत्युक्तेरत्रापि शानच् ।
6. 'सहितपिदमेः संज्ञायाम्' (ग. सू. 3-1-134) इति नन्द्यादिषु पाठात् कर्तरि ल्युः । **तपनः**=सूर्यः ।
7. 'असूर्य**ललाटयो**र्दृशि**तपोः**' (3-2-36) इति खश् । 'अरुर्द्विष**दजन्तस्य**—' (6-3-67) इति मुम् । ललाटं तपतीति **ललाटन्तपः**=सूर्यः ।

A. 'तीव्र**मुत्तपमानो**ऽयमशक्यः सोढु**मातपः** ।' भ. का. 8-15.
B. '**सन्तप्त**चामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥' भ. का. 3. 3.
C. 'शमयेदपि सङ्ग्रामे यो **ललाटन्तपं** रविम् ॥' भ. का. 6-100.



[1]द्विषत्तापः, [2]संतापी, [3]द्विषन्तपः ;
द्विषतीतापः, [A]परन्तपः, [4]शत्रुन्तपः [5]अभितापी,[B] तापः, तितप्सुः, तातपः ;
तप्तव्यम्, निष्टप्तव्यम्, तापयितव्यम्, तितप्सितव्यम्, तातपितव्यम् ;
तपनीयम्, तापनीयम्, तितप्सनीयम्, तातपनीयम् ;
[6]तप्यम्, ताप्यम्, तितप्स्यम्, तातप्यम् ; —
ईषत्तपः-दुस्तपः-सुतपः ; — — —
तप्यमानः, ताप्यमानः, तितप्स्यमानः, तातप्यमानः ;
तापः-सन्तापः, [7]आतपः, तापः, तितप्सः, तातपः ;
तप्तुम्, तापयितुम्, तितप्सितुम्, तातपितुम् ;

1. असंज्ञायां द्विषन्तं तपतीति विग्रहे शुद्धाद्धातोः 'कर्मण्यण्' (3-2-1) इत्यणि रूपम् ।
2. सम्यक् तप्तुं शीलमस्येति **सन्तापी** । ताच्छील्ये णिनिः ।
3. द्विषन्तं तापयतीति विग्रहे '**द्विषत्परयोस्तापेः**' (3-2-39) इति खच्प्रत्ययः । खचि 'णेरनिटि' (6-4-51) णिलोपे, 'खचि ह्रस्वः' (6-4-94) इति उपधायाः ह्रस्वः । द्विषतस्तकारस्य मुमि संयोगान्तलोपः । एवं परं तापयतीति विग्रहे **परन्तपः** इति भवति । सूत्रे द्वितकारनिर्देशात् तकारान्त एव द्विषच्छब्दे उपपदेऽयं प्रत्ययः, न तु लिङ्गविशिष्टपरिभाषया द्विषतीशब्दे उपपदे ; तत्र 'कर्मण्यण्' (3-2-1) इत्यणि **द्विषतीताप** इत्येव भवति ।
4. 'संज्ञायां भृतॄवृजिधारिसहि**तपि**दमः' (3-2-46) इति खच्प्रत्ययः संज्ञायाम् । शत्रून् तापयतीति विग्रहे, खचि, मुमागमे, णिलोपे, 'खचि ह्रस्वः' (6-4-94) इति उपधायाः ह्रस्वे, रूपम् ।
'विश्वम्भरा, साम रथन्तराख्यम्, पतिंवरा चापि धनञ्जयश्च ।
शत्रुंसहः कोऽपि, वसुन्धरा च, **शत्रुन्तपो**ऽरिन्दम एवमूह्यम् ॥' इति **प्रक्रियासर्वस्वे** ।
5. 'बहुलमाभीक्ष्ण्ये' (3-2-81) इति णिनिः । असकृत् अभितपतीत्यर्थः ।
6. 'पोरदुपधात्' (3-1-98) इति यत्प्रत्ययः ।
7. आ=समन्तात् तपतीति **आतपः** = सूर्यप्रभा । 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति घः । यद्वा, पचाद्यच् ।

A. 'प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या **परन्तप** ।
सख्या तेन दशग्रीवं निहन्ताऽसि **द्विषन्तपम्** ॥' भ. का. 6.102.
B. 'द्विषतः परासिसिषुरेष सकलभुव**नाभितापिनः** ।
क्रान्तकुलिशकरवीर्यबलान्मदुपासनं विहितवान् **महत्तपः** ॥' किरातार्जुनीये 12.34.

तप्तिः- [1]तपस्या, तापना, तितप्सा, तातपा ;
तपनम् , तापनम् , तितप्सनम् , तातपनम् ;
तप्त्वा, तापयित्वा, तितप्सित्वा, तातपित्वा ;
सन्तप्य, सन्ताप्य, संतितप्स्य, संतातप्य ;
तापम् २, } तापम् २, } तितप्सम् २, } तातपम् २ ; }
तप्त्वा २, } तापयित्वा २, } तितप्सित्वा २, } तातपित्वा २. }

(704) " **तप ऐश्वर्ये** " (IV-दिवादिः-1159. अक. अनि. आत्म.)

'सन्तापेऽर्थे तपेद् दाहे तापयेत् तपते तपेत् ।

ऐश्वर्ये वा दिवादित्वात् तप्यते तपतीति च ॥' (श्लो. 131) इति **देवः** । अयं धातुः ऐश्वर्येऽर्थे विकल्पेन तङ्श्यनौ लभते । तदभावे शब्विकरणः परस्मैपदी बोद्धव्यः । केचित्तु 'वा' इति पदं 'वृतु वरणे' इत्यनन्तरं पठिष्यमाणस्य धातोः आद्यावयवमिच्छन्ति । अत एव 'ततो **वावृत्यमाना** सा रामशालां न्यविक्षत ।' [भ. का. 4-28] इति **भट्टि**प्रयोगः संगच्छते । तन्मते **ऐश्वर्ये**ऽर्थे अस्माद् धातोः तङ्श्यनौ नित्यमेव भवतः । '**पत**' इति, अस्यैव पाठान्तरं केचिदिच्छन्ति । अत एव 'द्युतद्यामा नियुतः **पत्यमानः**' इति प्रयोगस्योपपत्तिर्भवति । **निरुक्ते**ऽपि 'इरज्यति **पत्यते** क्षयति राजतीति चत्वार ऐश्वर्यकर्माणः' इत्युक्तम् । तापकः-पिका, तापकः-पिका, तितप्सकः, प्सिका, तातपकः-पिका ; तप्ता-त्री, तापयिता-त्री, तितप्सिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तपति**वत् (703) बोध्यानि । दिवादिषु आत्मनेपदमध्ये पाठात् शानचि संतप्यमानः[A], तप्स्यमानः, तितप्समानः, तितप्सिष्यमाणः ; इत्यादीनि रूपाणि भवन्तीति विशेषः ।

---

1. 'असुन्' [द. उ. 9-49] इत्यसुन्प्रत्यये **तपः**=तपति शरीरमिति कायक्लेशात्मकः शुद्धाचारः । 'कर्मणो रोमन्थ**तपोभ्यां** वर्तिचरोः' (3-1-15) इति क्यङ् । 'सनाद्यन्ता धातवः' (3-1-32) इति धातुसंज्ञा । 'अ प्रत्ययात्' (3-3-102) इति स्त्रियां भावादौ अकारप्रत्ययः । टाप् । **तपस्या**=तपः ।

A. 'गूर्णेऽस्मिन् बहुजन्तुघूरिणि खले जूर्णैः शशंसे नृभिः
शौरिः शूरकगर्वचूरणपरः **सन्तप्यमानः** सताम् ।' धा. का. 2. 60.



(705) " **तप दाहे** " (X-चुरादिः-1819. सक. सेट्. उभ.)

**आधृषीयः ।**

'सन्तापेऽर्थे तपेद् दाहे तापयेत् तपते तपेत् ।' (श्लो. 131) इति **देवः** । अस्य धातोः आधृषीयत्वात् णिचो वैकल्पिकत्वं बोध्यम् । ण्यन्तात् , शुद्धात्, सन्नन्तात् , यङन्ताच्च पूर्वोक्तभौवादिकतपधातुवत् (704) सर्वाण्यपि रूपाणि ज्ञेयानि । अस्योभयपदित्वात् शानचि—तपमानः-तप्स्यमानः, तितप्समानः, तितप्सिष्यमाणः, इत्यादीनि रूपाण्यधिकानि भवन्ति, इति विशेषः । [A]चित्ततापी इति शुद्धाद्धातोर्णिनिप्रत्यये । ण्यन्तात् सनि इमानि रूपाणि—यथा—तितापयिषकः-षिका, तितापयिषिता-त्री, तितापयिषन्-न्ती, तितापयिषिष्यन्-न्ती-ती, तितापयिषमाणः, तितापयिषिष्यमाणः, तितापयिट्-ड्-यिषौ-यिषः ; तितापयिषितः-तवान् , तितापयिषुः, तितापयिषितव्यम् , तितापयिषणीयम् , तितापयिष्यम् , ईषत्तितापयिषः-दुस्तितापयिषः-सुतितापयिषः, तितापयिष्यमाणः, तितापयिषः, तितापयिषितुम् , तितापयिषा, तितापयिषणम् , तितापयिषित्वा, संतितापयिष्य, तितापयिषम् २, तितापयिषित्वा २.

(706) " **तमु काङ्क्षायाम्** " (IV-दिवादिः-1202. सक. सेट्. पर.)

**शमादिः । घटादिः ।** [अ]

[1]तमकः-मिका, [2]तमकः-मिका, तितमिषकः-षिका, [3]तन्तमकः-तंतमकः-मिका ;
तमिता-त्री, तमयिता-त्री, तितमिषिता-त्री, तन्तमिता-त्री ;
[4]ताम्यन्-न्ती, तमयन्-न्ती, तितमिषन्-न्ती ; ——

---

1. 'नोदात्तोपदेशस्य **मान्तस्या**नाचमेः' (7-3-34) इति वृद्धिनिषेधः । एवं घञि, णमुलि च ज्ञेयम् ।
2. 'जनीजॄष्क्नसुरञ्जो**ऽमन्ताश्च**' (ग. सू. भ्वादौ) इति मित्संज्ञायाम् , '**मितां** ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. यङन्ते, 'नुगतो**ऽनुनासिकान्तस्य**' (7-4-84) इत्यभ्यासस्य नुगागमः । तस्य 'पदान्तवद्वाच्यः' (वा. 7-4-84) इति वचनात् पदान्तवद्भावे, 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः । एवं यङन्ते सर्वत्र रूपद्वयं ज्ञेयम् ।
4. 'शमामष्टानां दीर्घः श्यनि' (7-3-74) इति दीर्घः ।

A. 'अजरद्वृषवद् विरिक्तपीडः पुनरभ्येत्य विशिष्ट**चित्ततापि** ।' धा. का. 3. 49.

[अ] 'ग्लानावेव [अस्य] प्रयोगः । **मुरारि**स्तु 'द्रष्टुं बहूत्ताम्यति ।' इति काङ्क्षायामेवाह ।' इति **धातुकाव्यव्याख्याने** [2-65] ।

तमिष्यन्-न्ती-ती, तमयिष्यन्-न्ती-ती, तितमिषिष्यन्-न्ती-ती ;
— तमयमानः, तमयिष्यमाणः, तन्तम्यमानः, तन्तमिष्यमाणः ;
[1]प्रतान्-प्रतामौ-प्रतामः ; — — —
[2]तान्तः, तमितः, तितमिषितः, तन्तमितः-तवान् ; —
तमः, [A]तमी[3], तमः, तितमिषुः, तन्तमः ;
तमितव्यम्, तमयितव्यम्, तितमिषितव्यम्, तन्तमितव्यम् ;
तमनीयम्, तमनीयम्, तितमिषणीयम्, तन्तमनीयम् ;
[4]तम्यम्, तम्यम्, तितमिष्यम्, तन्तम्यम् ;
ईषत्तमः-दुस्तमः-सुतमः ; — — —
तम्यमानः, तम्यमानः, तितमिष्यमाणः, तन्तम्यमानः,
तमः, तमः, तितमिषः, तन्तमः ;
तमितुम्, तमयितुम्, तितमिषितुम्, तन्तमितुम् ;
[5]तान्तिः, तमना, तितमिषा, तन्तमा ;
तमनम्, तमनम्, तितमिषणम्, तन्तमनम् ;
[6]तमित्वा-तान्त्वा, तमयित्वा, तितमिषित्वा, तन्तमित्वा ;
प्रतम्य, [7]प्रतमय्य, प्रतितमिष्य, प्रतन्तम्य ;

---

1. क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घे, 'मो नो धातोः' (8-2-64) इति नकारः पदान्ते। तस्य नकारस्य त्रैपादिकत्वात् 'न लोपः प्रातिपदिकान्तस्य' (8-2-7) इति लोपो न।
2. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः। 'अनुनासिकस्य क्वि—' (6-4-15) इति दीर्घः। 'मोऽनुस्वारः' (8-3-23) इत्यनुस्वारः। 'अनुस्वारस्ययि—' (8-4-58) इति परसवर्णः।
3. 'शमित्यष्टाभ्यो घिनुण् (3-2-141) इति तच्छीलादिषु कर्तृषु घिनुण्। 'नोदात्तोपदेशस्य—' (7-3-34) इति वृद्धिनिषेधः।
4. 'पोरदुपधात्' (3-1-93) इति यत्।
5. 'तितुत्र—' (7-2 9, इतीण्णिषेधः। अनुस्वारपरसवर्णौ।
6. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षे, दीर्घानुस्वारपरसवर्णाः।
7. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।

A: 'अशाम्यदात्माऽपि **तमी** नमामि दमिप्रियं श्रान्तिहरं भवन्तम्।' धा. का. 2.65.



तमम् २, तमित्वा २, तान्त्वा २, } [1]तमम् २-तामम् २, तमित्वा २-तान्त्वा २, } तितमिषम् २, तितमिषित्वा २, } तन्तमम् २ ; तन्तमित्वा २ ; }

[2]तमः, [3]तमसा [नदी], [4]ताम्रम्[A].

(707) "**तय गतौ**" (I-भ्वादिः-479. सक. सेट्. आत्म.)

तायकः-यिका, तायकः-यिका, तितयिषकः-षिका, तातयिकः-यिका ;
तयिता-त्री, ताययिता-त्री, तितयिषिता-त्री, तातयिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचयतिवत् (502) ज्ञेयानि। [B]प्रतय्य।

(708) "**तर्क भाषार्थः**" (X-चुरादिः-1781. सक. सेट्. उभ.)

**आस्वदीयः।**

'ऊहेऽप्ययमिति **मैत्रेयः**' इति मा. धा. वृत्तौ।

तर्ककः-र्किका, तितर्कयिषकः-षिका ; तर्कयिता-त्री, तितर्कयिषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि ग्रन्थधातुवत् (439) बोध्यानि। क्विपि-तर्क्-तर्कौ-तर्कः ; इति रूपाणि। णिलोपे ककारस्य संयोगान्तलोपो न। 'रात् सस्य' (8-2-24) इति नियमात्। न च णिलोपस्य स्थानिवद्भावः शङ्क्यः। पूर्वत्रासिद्धे तन्निषेधात्।

(709) "**तर्ज भर्त्सने**" (I-भ्वादिः-227. सक. सेट्. पर.)

'सन्तर्जने तर्जयते भर्त्सनार्थे तु तर्जति॥' (श्लो. 66) इति **देवः**।

तर्जकः-र्जिका, तर्जकः-र्जिका, तितर्जिषकः-षिका, तातर्जकः-र्जिका ;
तर्जिता-त्री, तर्जयिता-त्री, तितर्जिषिता-त्री, तातर्जिता-त्री ;

---

1. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः।
2. 'असुन्' [द. उ. 9-49] इत्यसुन् प्रत्ययः।
3. औणादिके [द. उ. 9-44] असच्प्रत्यये रूपम्।
4. 'असितम्योर्दीर्घश्च' [द. उ. 8-36] इति रक्प्रत्ययः, दीर्घश्च। तम्यते जनैरिति **ताम्रम्**=लोहविशेषः।

A. 'मधुरिपोर**भिताम्र**मुखी मुदं दिवि तदा वितताम शुकावलिः।' शि. व. 6.53.
B. '**प्रतय्य** किंचिन्नयितो गृहान्तिकं ददर्श धन्यः स दयालुमीश्वरम्।' धा.का. 1.62.

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककर्जधातुवत् (169) बोध्यानि । [A]तर्जितः-तवान् ।

(710) "तर्ज तर्जने" (X-चुरादिः-1682. सक. सेट्. आत्म.)

आकुस्मीयः ।

'सन्तर्जने तर्जयते भर्त्सनार्थे तु तर्जति ॥' (श्लो. 66) इति देवः । तर्जकः-र्जिका, तितर्जयिषकः-षिका, तर्जयिता-त्री, तितर्जयिषिता-त्री ; तर्जयमानः, तर्जयिष्यमाणः, तितर्जयिषमाणः, तितर्जयिषिष्यमाणः ; इत्यादीनि सर्वाण्यपि रूपाणि गन्धधातुवत् (375) ज्ञेयानि । क्विपि-तर्क्-तर्ग्-तर्जौ-तर्जः , इति रूपाणीति विशेषः ।

(711) "तर्द हिंसायाम्" (I-भ्वादिः-58. अक. सेट्. पर.)

[B]तर्दकः-र्दिका, तर्दकः-र्दिका, तितर्दिषकः-षिका, तातर्दकः-र्दिका ; तर्दिता-त्री, तर्दयिता-त्री, तितर्दिषिता-त्री, तातर्दिता-त्री ; इत्यादीनि सर्वाणि रूपाणि कर्जधातुवत् (169) ऊह्यानि ।

(712) "तल प्रतिष्ठायाम्" (X-चुरादिः-1598.सक. सेट्. उभ.)

तालकः-लिका, तितालयिषकः-षिका ; तालयिता-त्री, तितालयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि कलधातुवत् (175) बोध्यानि । पचाद्यचि-[C]तलः । 'तलम्-अच् । संज्ञापूर्वको विधिरनित्यः' (परिभाषा 95) इति वृद्ध्यभावः । मैत्रेयस्तु - 'छुषिरविशब्दने' (7-2-23) इति ज्ञापकं सामान्यमित्युक्त्वा, णिजभावे तलशब्दमाह ॥' इति मा. धा. वृत्तिः ॥

(713) "तसि अलङ्करणे" (X-चुरादिः-1730. सक. सेट्. उभ.)

'तसि भूष अलङ्कारे' इति दुर्गसम्मतः पाठ इति स्वामी । प्रायेणायम् अवपूर्वः । 'तस्यत्युपक्षयार्थे णौ, अलङ्कारे तु तंसयेत् ॥' (श्लो. 189) इति देवः ।

अवतंसकः, [1]वतंसकः तंसकः-सिका, तितंसयिषकः-षिका, तंसकः-सिका,

1. 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इति वचनेन अवतंसकः-वतंसकः, इत्युभयमपि साधु ।

A. 'स्वर्गोपमं सर्जितपुण्यसंचयो गभीरगर्जद्रथतर्जिताम्बुदः ।' धा. का. 1.30.

B. 'अतर्दकास्त्वथ विकर्दमाशयाः प्रखर्दवृत्तैरसमन्तितान्तिकाः ।' धा. का. 1.9.

C. 'दुर्दान्तचक्र पशुपचुकनमभ्यरौत्सीत् प्रक्षालितक्षितितलातुलवर्षरोधी ।' धा.का.3.21.



तितंसकः-सिका, तातंसकः-सिका ; तंसयिता-त्री, तितंसयिषिता-त्री, तंसिता-त्री, तितंसिता-त्री, तातंसिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचपिधातुवत् (499) बोध्यानि । इदित्करणात् णिचो वैकल्पिकत्वं बोध्यम् । घञि—[A]उत्तंसः ।

(714) "तसु उपक्षये" (IV-दिवादिः-1212. अक. सेट्. पर.)

'प्रक्षेपे' इति मैत्रेयः ।

'तस्यत्युपक्षयार्थे णौ, अलङ्कारे तु तंसयेत् ॥' (श्लो. 189) इति देवः । तासकः-सिका, तासकः-सिका, तितसिषकः-षिका, तातसकः-सिका ; तसिता-त्री, तासयिता-त्री, तितसिषिता-त्री, तातसिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकक्रसुधातुवत् (265) बोध्यानि । 'जनीजॄष्क्नसु-' (ग. सू. घटादौ) इति मित्त्वं नात्र प्रवर्तते, इति विशेषः । ल्युटि—[B]तसनम् ।

(715) "तायृ सन्तानपालनयोः" (I-भ्वादिः-489. सक.सेट्. आत्म.)

सन्तानम्=प्रबन्धः । आद्ये — अकर्मकः । द्वितीये — सकर्मकः । तायकः-यिका, तायकः-यिका, तितायिषकः-षिका, तातायकः-यिका ; तायिता-त्री, ताययिता-त्री, तितायिषिता-त्री, तातायिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि कासृधातुवत् (188) ज्ञेयानि । क्विपि—मित्रं तायते रक्षतीति, मित्रताः । वलि लोपे आकारान्तं प्रातिपदिकम्, इति विशेषः । अशेषताम्[C] ।

(716) "तिक गतौ च" (V-स्वादिः-1266. सक. सेट्. पर.)

चकारात् 'आस्कन्दने' इति संबध्यते ।

A. 'आक्रन्दयत्सु निभृतं नृषु लासिताशेषोत्तंसभूषणविमोक्षणयार्दिताभौ ।' धा. का. 3. 40.

B. 'अस्तायासविजस्तविश्वतसनो निर्दस्तवासैर्नुतः—भृश्यद्भ्रंशनवर्शकाक्रुशदयस्तृष्णाहरो हृष्य मे ॥' धा. का. 2.66.

C. 'अशेषतां भ्रूशलनैर्वलद्दृशा प्रवल्गमानं प्रियवल्लरीशुचम् ॥' धा. का. 1.63.

तेककः-किका, तेककः-किका[1], तितेकिषकः-तितिकिषकः-षिका, तेतितकः-तिका ;
तेकिता-त्री, तेकयिता-त्री, तितेकिषिता-तितिकिषिता-त्री, तेतिकिता-त्री ;
[2]तिक्नुवन्-ती, तेकयन्-न्ती, तितेकिषन्-तितिकिषन्-न्ती ; —
— तेकयमानः, तेकयिष्यमाणः, तेतिक्यमानः, तेतिकिष्यमाणः ;
संतिक्-संतिग्-संतिकौ-संतिकः ; — —
तेकितम्-तः, तेकितः, तितेकिषितः-तितिकिषितः, तेतिकितः-तवान् ;
[3]तिकः, तेकः, तितेकिषुः-तितिकिषुः, तेतिकः ;
तेकितव्यम्, तेकयितव्यम्, तितेकिषितव्यम्-तितिकिषितव्यम्, तेतिकितव्यम् ;
तेकनीयम्, तेकनीयम्, तितेकिषणीयम्-तितिकिषणीयम्, तेतिकनीयम् ;
तेक्यम, तेक्यम्, तितेकिष्यम्-तितिकिष्यम्, तेतिक्यम् ;
ईषत्तेकः-दुस्तेकः-सुतेकः ; — —
तिक्यमानः, तेक्यमानः, तितेकिष्यमाणः-तितिकिष्यमाणः, तेतिक्यमानः ;
तेकः, तेकः, तितेकिषः-तितिकिषः, तेतिकः ;
तेकितुम्, तेकयितुम्, तितेकिषितुम्-तितिकिषितुम्, तेतिकितुम् ;
तिक्तिः, तेकना, तितेकिषा-तितिकिषा, तेतिका ;
तेकनम्, तेकनम्, तितेकिषणम्-तितिकिषणम्, तेतिकनम् ;
तेकित्वा-तिकित्वा, तेकयित्वा, तितेकिषित्वा-तितिकिषित्वा, तेतिकित्वा ;
प्रतिक्य, [A]आतिक्य, प्रतितेकिष्य-प्रतितिकिष्य, प्रतेतिक्य ;
तेकम् २, तेकित्वा २, तिकित्वा २, } तेकम् २, तेकयित्वा २, } तितेकिषम्-तितिकिषम् २, तितेकिषित्वा-तितिकिषित्वा २, } तेतिकम् २; तेतिकित्वा २. }

1. 'रलो व्युपधाद्धलादेः संश्च' (I-2-26) इति सेटः सनः कित्त्वविकल्पः। कित्त्वपक्षे गुणनिषेधः, कित्त्वाभावपक्षे गुणः। एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या। एवं क्त्वायामपि कित्त्वविकल्पो ज्ञेयः।
2. 'स्वादिभ्यः श्नुः' (3-1-73) इति श्नुः विकरणप्रत्ययः। तस्य ङिद्वद्भावादङ्गस्य गुणो न।
3. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः।
A. 'तामातिक्य पदे पदेन चिबुके चातिग्नुवन् पाणिना
चक्रे सघ्नुवतां वधे दधृगसात्रृज्वीं मनोज्ञाकृतिम्।' धा. का. 2.70.



(717) "**तिकृ गतौ**" (I-भ्वादिः-105. सक. सेट्. आत्म.)

तेककः-किका, तेककः-किका, तितेकिषकः-तितिकिषकः-षिका, तेतिककः, किका ; तेकिता-त्री, तेकयिता-त्री, तितेकिषिता-तितिकिषिता-त्री, तेतिकिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **तिक**धातुवत् (716) ज्ञेयानि। अस्य धातोः भ्वादौ आत्मनेपदिषु पाठात् तेकमानः, तेकिष्यमाणः, तितेकिषमाणः-तितिकिषमाणः ; इत्यादीनि रूपाणि शानचि भवन्तीति विशेषः।

(718) "**तिग गतौ च**" (V-स्वादिः-1267. सक. सेट्. पर.)

**चकारात्** 'आस्कन्दने' इति संबध्यते।

तेगकः-गिका, तेगकः-गिका, तितेगिषकः-तितिगिषकः-षिका, तेतिगकः-गिका ; तेगिता-त्री, तेगयिता-त्री, तितेगिषिता-तितिगिषिता-त्री, तेतिगिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **तिक**धातुवत् (716) ऊह्यानि। शतरि—तिग्नुवन्[A]।

(719) "**तिज निशाने**" (I-भ्वादिः-971. सक. सेट्. आत्म.)

**निशानम्**=तीक्ष्णीकरणम्। '**क्षमायां च**' इति **क्षीरस्वामी**।

[1]तितिक्षकः-क्षिका, तितिक्षकः[2]-क्षिका, तितिक्षिषकः[3]-षिका, [4]तेजकः-जिका ;

1. 'गुप्तिज्किद्भ्यः सन्' (3-1-5) इति नित्यं सन्। '**सनाद्यन्ता धातवः**' (3-1-32) इति धातुसंज्ञायाम्, 'सन्यङोः' (6-1-9) इति द्वित्वम्। अभ्यासकार्याणि। 'खरि च' (8-4-55) इति चर्त्वेन जकारस्य ककारः। अस्य सनः 'धातोः' इत्यधिकृत्य विधानाभावात् नार्धधातुकत्वम्। तेन इड्गुणौ न भवतः 'तिज निशाने' इत्युक्तेऽपि, '**तिजेः क्षमायाम्**' इति **वृत्तिकार**वचनात् (3-1-5) क्षमायां नित्यसन्नन्तः प्रयोगार्हः। अर्थान्तरे तु अननुबन्धकाश्चुरादयः। अत्र, अस्यानुदात्तेत्त्वात् आत्मनेपदमेव।
2. स्वार्थसन्नन्तात् प्रयोजकणिचि, ण्वुलि, 'णेरनिटि' (6-4-52) इति णिलोपे रूपम्। एवं ण्यन्तेऽत्र सर्वत्र प्रक्रिया ज्ञेया।
3. स्वार्थसन्नन्तात् 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (3-1-7) इति इच्छासनि रूपम्। न च 'सन्नन्तान्न सनिष्यते॥' (भाष्येष्टिः 3-1-7) इत्युक्तेः कथमत्र पुनः सन्? इति शङ्कनीयम्। तत्र समानार्थकस्यैव सनः पुनरुत्पत्तिनिषेधे तात्पर्यात्। 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥' इति किल तत्रोक्तम्।
4. 'अर्थान्तरेऽननुबन्धकाश्चुरादयः' इति **सिद्धान्तकौमुद्या**दिषूक्तत्वात् निशानरूपार्थे चुरादिः। तदानीं स्वार्थसनोऽभावे रूपम्। एवमुत्तरत्रापि ज्ञेयम्।
A. 'तामातिक्य पदे पदेन चिबुके **चातिग्नुवन्** पाणिना
चक्रे सघ्नुवतां वधे दधृगसात्रृज्वीं मनोज्ञाकृतिम्।' धा. का. 2. 70.

तितिक्षिता-त्री, तितिक्षयिता-त्री, तितिक्षिषिता-त्री, तेजयिता-त्री;
— तितिक्षयन्-न्ती, तितिक्षयिष्यन्-न्ती-ती, तेजयन्, तेजयिष्यन्-न्ती-ती;
तितिक्षमाणः, तितिक्षयमाणः, तितिक्षिषमाणः, तेजयमानः;
तितिक्षिष्यमाणः, तितिक्षयिष्यमाणः, तितिक्षिषिष्यमाणः, तेजयिष्यमाणः;
[1]तितिक्-तितिग्-तितिक्षौ-तितिक्षः; — — —
[2]तेक्-तेग्-तेजौ-तेजः; — — —
तितिक्षितः-तम्, तितिक्षितः, तितिक्षिषितः, [A]तेजितः-तवान्;
[B]तितिक्षुः, तितिक्षिषुः, तितिक्षयिषुः, तेजः;
तितिक्षितव्यम्, तितिक्षयितव्यम्, तितिक्षिषितव्यम्, तेजयितव्यम्;
तितिक्षणीयम्, तितिक्षणीयम्, तितिक्षिषणीयम्, तेजनीयम्;
तितिक्ष्यम्, तितिक्ष्यम्, तितिक्षिष्यम्, तेज्यम्;
ईषत्तितिक्षः-दुस्तितिक्षः-सुतितिक्षः; — —
तितिक्ष्यमाणः, तितिक्ष्यमाणः, तितिक्षिष्यमाणः, तेज्यमानः;
तितिक्षः, तितिक्षः, तितिक्षिषः, तेजः;
[C]तितिक्षितुम्, तितिक्षयितुम्, तितिक्षिषितुम्, तेजयितुम्;
तितिक्षा, तितिक्षणा, तितिक्षिषा, तेजना;
तितिक्षणम्, तितिक्षणम्, तितिक्षिषणम्, तेजनम्;
तितिक्षित्वा, तितिक्षयित्वा, तितिक्षिषित्वा, तेजयित्वा;
प्रतितिक्ष्य, प्रतितिक्ष्य, प्रतितिक्षिष्य, प्रतेज्य;
तितिक्षम् २, तितिक्षित्वा २, } तितिक्षम् २, तितिक्षयित्वा २, } तितिक्षिषम् २, तितिक्षिषित्वा २, } तेजम् २; तेजयित्वा २; }

1. क्विपि, अतो लोपे, संयोगान्तलोपे च रूपम्।
2. स्वार्थसनोऽभावपक्षे ण्यन्ताण्णिचि क्विपि, चर्त्वविकल्पे च रूपम्।
A. 'कृष्णः प्रपञ्चरहितां धृततेजितास्त्रैः
वीरैः स्तुतां गिरमकीर्तदरातिवर्धी॥' धा. का. 3. 28.
B. 'जुगुप्सतेऽघाद् व्यसनं तितिक्षुः मीमांसते ब्रह्म च यो दृढात्मा।' धा.का.2.38.
C. 'असंविदानस्य ममेश संविदां तितिक्षितुं दुश्चरितं त्वमर्हसि।'
किरातार्जुनीये 18. 42.



[1]तीक्ष्णम्, तिग्मम्[2].

(720) "**तिज निशाने**" (X. चुरादिः-1653. सक. सेट्. उभ.)
'—शातने' इति कुत्रचित् पाठः।

तेजकः-जिका, तितेजयिषकः-षिका, तेजयिता-त्री, तितेजयिषिता-त्री; इत्यादीनि सर्वाणि रूपाणि पूर्वस्मिन् धातावेव (719) प्रदर्शितानि बोध्यानि। पूर्वं भ्वादौ पठितस्यैव स्वार्थसन्नन्तस्य धातोः अर्थान्तरे चुरादित्वस्य भाष्यादिसम्मतत्वात् चुरादिषु पाठ उन्नेयः। ण्यन्तात् सनि तु— तितेजयिषकः-षिका, तितेजयिषिता-त्री, तितेजयिषन्-न्ती, तितेजयिषिष्यन्-न्ती-ती, तितेजयिषमाणः, तितेजयिषिष्यमाणः, तितेजयिट्-यिषौ-यिषः, तितेजयिषितः-तवान्, तितेजयिषुः, तितेजयिषितव्यम्, तितेजयिषणीयम्, तितेजयिष्यम्, ईषत्तितेजयिषः-दुस्तितेजयिषः-सुतितेजयिषः, तितेजयिष्यमाणः, तितेजयिषः, तितेजयिषितुम्, तितेजयिषा, तितेजयिषणम्, तितेजयिषित्वा, प्रतितेजयिष्य, तितेजयिषम् २ तितेजयिषित्वा २. इति रूपाणीति विशेषः।

(721) "**तिपृ क्षरणार्थः**" (I-भ्वादिः-362. अक. अनि. आत्म.) [अ]

तेपकः-पिका, तेपकः-पिका, तितिप्सकः-सिका, तेतिपकः-पिका;
तेप्ता-त्री, तेपयिता-त्री, तितिप्सिता-त्री, तेतिपिता-त्री;
इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकक्षिपधातुवत् (306) ज्ञेयानि। अस्य धातोरात्मनेपदित्वात् शानचि—तेपमानः, तेप्स्यमानः, तितिप्समानः, तितिप्सिष्यमाणः; इत्यादीनि रूपाणि भवन्तीति विशेषः।

(722) "**तिम आर्द्रीभावे**" (IV-दिवादिः-1123. अक. सेट्. पर.)

तेमकः-मिका, तेमकः-मिका, तितिमिषकः-तितेमिषकः-षिका, तेतिमकः-मिका; तेमिता-त्री, तेमयिता-त्री, तितिमिषिता-तितेमिषिता-त्री, तेतिमिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककिट (190)

1. '**तिजे**र्दीर्घश्च' [द. उ. 5-50] इति क्स्नप्रत्यये दीर्घः।
2. 'युजिरुचि**तिजां** कुश्च' [द. उ. 7-33] इति मक्प्रत्ययः, तत्सन्नियोगेन कवर्गादेशश्च। **तिग्मम्**=तीक्ष्णम्।
[अ] '**क्षीरस्वामी** तु, अयं (धातुः) सेट् इति बभ्राम।' इति **सिद्धान्तकौमुदी**। यतस्तत्र (**क्षीरतरङ्गिण्यां**) क्त्वायाम्—'किति विशेषः—**तिपित्वा, तेपित्वा**' इत्युक्तम्।

धातुवत् बोध्यानि । अस्य धातोः दिवादौ पाठात् शतरि—तिम्यन्[A]-न्ती, तेमिष्यन्-न्ती-ती, इत्यादिरूपाणि भवन्तीति विशेषः ।

(723) " **तिल गतौ** " (I-भ्वादिः-534. सक. सेट्. पर.)

'**तिल्ल**' इत्येके ।

तेलकः-लिका, तेलकः-लिका, तितेलिषकः-तितिलिषकः-षिका, तेतिलकः-लिका ; तेलिता त्री, तेलयिता-त्री, तितेलिषिता-तितिलिषिता-त्री, तेतिलिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **किट**धातुवत् (190) ज्ञेयानि ।

(724) " **तिल स्नेहे** " (VI-तुदादिः-1354. सक. सेट्. पर.)

तेलकः-लिका, तेलकः-लिका, तितेलिषकः-तितिलिषकः-षिका, तेतिलकः-लिका, तेलिता-त्री, तेलयिता-त्री, तितेलिषिता-तितिलिषिता-त्री, तेतिलिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **तौदादिककिल** (193) धातुवत् ज्ञेयानि । कर्तरि कप्रत्यये—तिलः ।

(725) " **तिल स्नेहने** " (X-चुरादिः-1607. सक. सेट्. उभ.)

तेलकः-लिका, तितेलयिषकः-षिका, तेलयिता-त्री, तितेलयिषिता-त्री, तेलितम्-[B]तः ; इत्यादीनि सर्वाण्यपि रूपाणि **चित**धातुवत् (522) ज्ञेयानि । अस्य धातोः उभयपदित्वात् शतरि इमानि रूपाणि भवन्तीति विशेषः । यथा—तेलयन्-तितेलयिषन्-न्ती-ती, तेलयिष्यन्, तितेलयिषिष्यन्-न्ती-ती, इति ।

(726) " **तिल्ल गतौ** " (I-भ्वादिः-534. सक. सेट्. पर.)

'**तिल**' इत्यस्य पाठान्तरमिदम् ।

तिल्लकः-ल्लिका, तिल्लकः-ल्लिका, तितिल्लिषकः-षिका, तेतिल्लकः-ल्लिका; तिल्लिता-त्री, तिल्लयिता-त्री, तितिल्लिषिता-त्री, तेतिल्लिता-त्री ; इत्यादीनि सर्वाणि रूपाणि चिल्लधातुवत् (528) बोध्यानि ।

---

A. '**तिम्यन्**मते स्तिम्यति नाम मन्मनः स्तीम्यत्सु तद्व्रीलमृते वदाम्यहम् ।' धा. का. 2.57.

B. 'काल्यप्रवेलनकरोऽयमबेलयद्द्रागन्यांश्च **तेलित**कुपः खलु कंपचाल्यान् ।' धा. का. 3.22.



(727) " **तीकृ गतौ** " (I-भ्वादिः-106. सक. सेट्. आत्म.)

तीककः-किका, तीककः-किका, तितीकिषकः-षिका, तेतीककः-किका ; तीकिता-त्री, तीकयिता-त्री, तितीकिषिता-त्री, तेतीकिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **भौवादिकचीभृ**धातुवत् (530) ज्ञेयानि ।

(728) " **तीर कर्मसमाप्तौ** " (X-चुरादिः-1912. सक. सेट्. उभ.)

**अदन्तः ।**

तीरकः-रिका, तितीरयिषकः-षिका ; तीरयिता-त्री, तितीरयिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिककीट**धातुवत् (194) ज्ञेयानि । तीरम्, दक्षिणतीरम्, दक्षिणतारम्, उत्तरतीरम्, उत्तरतारम्, 'दिक्छब्देभ्यः **तीरस्य तारभावो** वा वक्तव्यः' (वा. 6-3-109) इति वचनेन **तीरस्य तारभावः** विकल्पेन भवति । ल्युटि-[A]तीरणम ।

(729) " **तीव स्थौल्ये** " (I-भ्वादिः-565. अक. सेट्. पर.)

तीवकः-विका, तीवकः-विका, तितीविषकः-षिका, तेतीवकः-विका ; तीविता-त्री, तीवयिता-त्री, तितीविषिता-त्री, तेतीविता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **कील**धातुवत् (195) बोध्यानि । क्विपि—[1]सुत्यूः-सुतीवौ-सुतीवः इति रूपाणि । तीवः[B] ।

(730) " **तु गतिवृद्धिहिंसासु** "

(II-अदादिः-1034-A. सक. अनि. पर.) [अ]

'तु इति सौत्रो धातुः **गतिवृद्धिहिंसासु**' इति **सि. कौमुदी** । "अत्र व्याख्यानमेव शरणम्" इति **बालमनोरमा** ।

---

1. क्विपि 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति वकारस्योठ् । यणादेशे सोः रुत्वविसर्गौ ।

A. 'दुष्पारदुश्चरित**तीरण**कृथथेशो नो चक्षमे घुटयितुं तमकत्रितोष्मा ॥' धा. का. 3.59.

B. 'अपीवितां नाप्यतिमीवितां श्रितं तनुं **सुतीवो**रुमनीवमध्यमाम् ॥' धा. का. 1.72.

[अ] अदादौ 'रु शब्दे' इत्यत्र **माधवधातुवृत्तौ** एवं दृश्यते—" '**तुरुस्तुशम्यमः**—' (7-3-95) इत्यत्र **वृत्तौ**—'तुः इति सौत्रो धातुः' इति । अत्र **न्यासे**—'वृध्यर्थं इति **एके** । हिंसार्थं इति **अपरे** ; यस्य च लुग्विकरणत्वं स्मर्यते ।' इति । **वर्धमान**श्च—'**तु** इति वृद्धिहिंसयोरदादौ स्मर्यते' इति । **हरदत्त**स्तु—वृद्धयर्थत्वमभिधाय, 'गत्यर्थ इति **एके** । हिंसार्थ **इत्यपरे** ।' इति । 'त्रिष्वपि' इति **बोधिन्यासे** ।" इति ।

तावकः-विका, तावकः-विका, [1]तुतूषकः-षिका, [2]तोतूयकः-यिका ;
तोता-त्री, तावयिता-त्री, तुतूषिता-त्री, तोतूयिता-त्री ;
[3]उत्तुवन्-ती, तावयन्-न्ती, तुतूषन्-न्ती ; —
तोष्यन्-न्ती-ती, तावयिष्यन्-न्ती-ती, तुतूषिष्यन्-न्ती-ती ; —
— तावयमानः, तावयिष्यमाणः, — तोतूयमानः, तोतूयिष्यमाणः ;
[4]संतुत्-संतुद्-संतुतौ-संतुतः ; — —
तुतम्-तुतः, तावितः, तुतूषितः, तोतूयितः-तवान् ;
तवः, तावः, तुतूषुः, तोतुवः ;
तोतव्यम्, तावयितव्यम्, तुतूषितव्यम्, तोतूयितव्यम् ;
तवनीयम्, तावनीयम्, तुतूषणीयम्, तोतूयनीयम् ;
तव्यम्, [5]अवश्यताव्यम्, ताव्यम्, तुतूष्यम्, तोतूय्यम् ;
ईषत्तवः-दुस्तवः-सुतवः ; — —

तूयमानः, ताव्यमानः, तुतूष्यमाणः, तोतूय्यमानः ;
तवः, तावः, तुतूषः, तोतूयः ;
तोतुम्, तावयितुम्, तुतूषितुम्, तोतूयितुम् ;
तुतिः, तावना, तुतूषा, तोतूया ;
तवनम्, तावनम्, तुतूषणम्, तोतूयनम् ;
तुत्वा, तावयित्वा, तुतूषित्वा, तोतूयित्वा ;
प्रतुत्य, प्रताव्य, प्रतुतूष्य, प्रतोतूय्य ;

1. 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। षत्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः । 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
3. 'लुग्विकरणेऽदादौ धातोरस्य पाठ इति **व्याख्यातृभि**रुक्तत्वात् '**अदिप्रभृतिभ्यः** शपः' (2-4-72) इति लुक् । शतुर्ङिद्वद्भावान्न गुणः । 'अचि श्नुधातुभ्रुवां—' (6-4-77) इत्युवङ् ।
4. क्विपि, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक् । एवं ल्यप्यपि ज्ञेयम् ।
5. '**ओरावश्यके**' (3-1-125) इति ण्यत् । 'लुम्पेदवश्यमः कृत्ये—' (वा. 6-3-109) इति पृषोदरादिषु पाठात् अवश्यमो मकारस्य लोपः ।



तावम् २, } तुत्वा २, } तावम् २, } तावयित्वा २, } तुतूषम् २, } तुतूषित्वा २, } तोतूयम् २ ; } तोतूयित्वा २. }

(731) "**तुज हिंसायाम्**" (I-भ्वादिः-244. सक. सेट्. पर.)

'हिंसायां शपि तुञ्जतीत्यनिदितः तस्यां तुजेः तोजति ॥' (श्लो. 66) इति **देवः** । तोजकः-जिका, तोजकः-जिका, तुतोजिषकः-तुतुजिषकः-षिका, तोतुजकः-जिका ; तुजिता-त्री, तोजयिता-त्री, तुतोजिषिता-तुतुजिषिता-त्री, तोतुजिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुचधातुवत् (200) बोध्यानि । [A]तुजितम् ।

(732) "**तुजि पालने**" (I-भ्वादिः-245. सक. सेट्. पर.)

'—अभिहिते स्वर्थे पदं तुञ्जयेत् ।' (श्लो. 66) इति **देवः** ।

तुञ्जकः-ञ्जिका, तुञ्जकः-ञ्जिका, तुतुञ्जिषकः-षिका, तोतुञ्जकः-ञ्जिका ; तुञ्जिता-त्री, तुञ्जयिता-त्री, तुतुञ्जिषिता-त्री, तोतुञ्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि कुठिधातुवत् (209) बोध्यानि । क्विपि— तुन्-तुन्जौ-तुन्जः इति रूपाणि । पचाद्यचि तुञ्जः । घञि तुङ्गः, न्यङ्क्वादित्वात् कुत्वम् ।

(733) "**तुजि हिंसाबलादाननिकेतनेषु**"
(X-चुरादिः-1566. सक. सेट्. उभ.)

'—अभिहिते स्वर्थे पदं तुञ्जयेत् ।' (श्लो. 66) इति **देवः** ।

**अभिहितोऽर्थः**=भाषणरूपः इति **पुरुषकारः** । **केचिदमुं धातुं तुज** इति पठन्ति ।

तुञ्जकः-ञ्जिका, तुतुञ्जयिषकः-षिका, तुञ्जकः-ञ्जिका, तुतुञ्जिषकः-षिका, तोतुञ्जकः-ञ्जिका ; तुञ्जयिता-त्री, तुतुञ्जयिषिता-त्री, तुञ्जिता-त्री, तुतुञ्जिषिता-त्री, तोतुञ्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचितिधातुवत् (523) ज्ञेयानि । अस्य धातोः इदित्त्वात् णिचो वैकल्पिकत्वं बोध्यम् । घञि—[B]तुञ्जः ।

A. 'जहर्ष जज्ञा**तुजित**स्थलैरसौ नृषैरतुञ्जैर्गजगञ्जिभिर्वृतम् ।' धा. का. 1. 33.
B. 'आश्वाठितारिकुल**तुञ्ज**विपिञ्जशीलः संपेशयन् गृहमसान्त्वयदेष गोपीः ।' धा. का. 3. 17.

(734) "**तुजि भाषार्थः**" (X-चुरादिः-1756. सक. सेट्. उभ.)
**आस्वदीयः ।**

'—अभिहिते स्वर्थे पदं तुञ्जयेत् ।' (श्लो. 66) इति **देवः** ।

तुञ्जकः-ञ्जिका, तुतुञ्जयिषकः-षिका, तुञ्जकः-ञ्जिका, तुतुञ्जिषकः-षिका, तोतुञ्जकः-ञ्जिका ; तुञ्जयिता-त्री, तुतुञ्जयिषिता-त्री, तुञ्जिता-त्री, तुतुञ्जिषिता-त्री, तोतुञ्जिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **कुशि** (232) धातुवत् ज्ञेयानि ।

(735) "**तुट कलहकर्मणि**" (VI-तुदादिः-1376. अक. सेट्. पर.)
**कुटादिः** ।

तोटकः-टिका, तोटकः-टिका, तुतुटिषकः-षिका, तोतुटकः-टिका ; तुटिता-त्री, तोटयिता-त्री, तुतुटिषिता-त्री, तोतुटिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि **कुट**धातुवद् (204) बोध्यानि । ल्युटि-[A]प्रतुटनम् ।

(736) "**तुड तोडने**" (VI-तुदादिः-1386. सक. सेट्. पर.) **कुटादिः**।

'तोडनार्थे तुडेस्तुण्डेः तुडेत् तोडति तुण्डते ॥' (श्लो. 88) इति **देवः** ।
'**तोडनम्**=भेदः' इति **सि. कौमुदी** । 'भेदः पृथक्करणं वा' इति **क्षीरस्वामी** ।

तोडकः-डिका, तोडकः-डिका, तुतुडिषकः-षिका, तोतुडकः-डिका ; तुडिता-त्री, तोडयिता-त्री, तुतुडिषिता-त्री, तोतुडिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुट**धातुवत् (204) ज्ञेयानि । शतरि—तुडन्[B] ।

(737) "**तुडि तोडने**" (I-भ्वादिः-276. सक. सेट्. आत्म.)

'तोडनार्थे तुडेस्तुण्डेः तुडेत् तोडति तुण्डते ॥' (श्लो. 88) इति **देवः** ।
"**तोडनं**-दारणं हिंसनं च" इति **मा. धा. वृत्तौ** ।

[C]तुण्डकः-ण्डिका, तुण्डकः-ण्डिका, तुतुण्डिषकः-षिका, तोतुण्डकः-ण्डिका ;

A. 'सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुटन्
धनुस्त्रुटनतो मनाक् **प्रतुटनाय** शालामगात् ॥' धा. का. 2. 80.

B. 'ईशश्चाघुवितस्तुडन् खलमुदं रोषं श्रुडन् प्रस्फुडन्
धाम स्वं स्फुरितो जगाम धमुषः पार्श्वं क्षणादस्फुलन् ॥' धा. का. 2. 81.

C. 'स भण्डिलो भोजनृपालपिण्डभुक् प्रमुण्डितांस्तत्र जनान**तुण्डकान्** ॥'
धा. का. 1. 36.



तुण्डिता-त्री, तुण्डयिता-त्री, तुतुण्डिषिता-त्री, तोतुण्डिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कुठि**धातुवत् (209) बोध्यानि ।

(738) "**तुड्ट तोडने**" (I-भ्वादिः-351. सक. सेट्. पर.)

'**तूड्ट**—' इति **स्वामिशाकटायनादयः** । **तोडनम्**=दारणं हिंसनं च ।
'तोडनार्थे तुडेस्तुण्डेः तुडेत् तोडति तुण्डते ॥' (श्लो. 88) इति **देवः** ।

[A]तोडकः-डिका, तोडकः-डिका, [1]तुतोडिषकः-तुतुडिषकः-षिका, तोतुडकः-डिका ;

तोडिता-त्री, तोडयिता-त्री, तुतोडिषिता-तुतुडिषिता-त्री, तोतुडिता-त्री ;
तोडन्-न्ती, [2]व्यतितोडन्, [3]तोडयन्-न्ती, तुतोडिषन्-तुतुडिषन्-न्ती ; —
तोडिष्यन्-न्ती-ती, तोडयिष्यन्-न्ती-ती, तुतोडिषिष्यन्-तुतुडिषिष्यन्-न्ती-ती ;
— तोडयमानः, तोडयिष्यमाणः, — तोतुड्यमानः, तोतुडिष्यमाणः ;
तुट्-तुड्-तुडौ-तुडः ; — — —
[4]तुडितम्-तोडितम्-तः, तोडितः, तुतोडिषितः-तुतुडिषितः, तोतुडितः-तवान् ;
तुडः, तोडः, तुतोडिषुः-तुतुडिषुः, तोतुडः ;
तोडितव्यम्, तोडयितव्यम्, तुतोडिषितव्यम्-तुतुडिषितव्यम्, तोतुडितव्यम् ;
तोडनीयम्, तोडनीयम्, तुतोडिषणीयम्-तुतुडिषणीयम्, तोतुडनीयम् ;
तोड्यम्, तोड्यम्, तुतोडिष्यम्-तुतुडिष्यम्, तोतुड्यम् ;
ईषत्तोडः-दुस्तोडः-सुतोडः ; — —
तुड्यमानः, तोड्यमानः, तुतोडिष्यमाणः-तुतुडिष्यमाणः, तोतुड्यमानः ;
तोडः, तोडः, तुतोडिषः-तुतुडिषः, तोतुडः ;

1. 'रलो व्युपधात्—' (1-2-26) इति सेटः क्त्वायाः सनश्च किस्त्वविकल्पः । तेन रूपद्वयम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. 'न गति**हिंसार्थेभ्यः**' (1-3-15) इति निषेधात् कर्मव्यतीहारेऽपि शानज् न ।
3. '**तोडनम्**=द्रावणम्' इति **क्षीरस्वामी** । एवमेव **पाणिनीयधातुपाठ**-नामके तञ्जापुरीयसरस्वतीमहाल् विमर्शनालयमुद्रिते कोशेऽपि वर्तते । तदानीं धातोः कम्पनार्थकत्वात्, ण्यन्तात्, 'निगरणचलनार्थेभ्यः—' (1-3-87) इति शतैव, न शानजिति ज्ञेयम् । हिंसाद्यर्थेषु तु शानज् भवतीति विशेषः ।
4. 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति सेटो निष्ठायाः भावकर्म-विषये किस्त्वविकल्पनाद् रूपद्वयम् ।

A. 'अकद्धरिक्रीडनधूत**तोडकान्** प्रहूडितान् होडदरोज्यभिक्षुकैः ।' धा. का. 1.46.

तोडितुम्, तोडयितुम्, तुतोडिषितुम्-तुतुडिषितुम्; तोतुडितुम्;
[1]तुड्टिः, तोडना, तुतोडिषा-तुतुडिषा, तोतुडा;
तोडनम्, तोडनम्, तुतोडिषणम्-तुतुडिषणम्, तोतुडनम्;
तोडित्वा-तुडित्वा, तोडयित्वा, तुतोडिषित्वा-तुतुडिषित्वा, तोतुडित्वा;
प्रतुड्य, प्रतोड्य, प्रतुतोडिष्य-प्रतुतुडिष्य, प्रतोतुड्य;
तोडम् २, तोडित्वा २-तुडित्वा २, } तोडम् २, तोडयित्वा २, } तुतोडिषम् २-तुतुडिषम् २, तुतोडिषित्वा २-तुतुडिषित्वा २, } तोतुडम् २; तोतुडित्वा २. }

(739) "**तुण कौटिल्ये**" (VI-तुदादिः-1332. सक. सेट्. पर.)

तोणकः-णिका, तोणकः-णिका, तुतोणिषकः-तुतुणिषकः-षिका, तोतुणकः-णिका; इत्यादीनि सर्वाण्यपि रूपाणि **गुफ**धातुवद् (409) बोध्यानि। क्विपि-प्रतूण्-प्रतूणौ-प्रतूणः; इति। शतरि तु—तुणन्-ती-न्ती; इति रूपाणीति विशेषः। घञि-[A]तोणः।

(740) "**तुत्थ आवरणे**" (X-चुरादिः-1943. सक. सेट्. उभ. अदन्तः।)[अ]

तुत्थकः-त्थिका, तुतुत्थयिषकः-षिका; तुत्थयिता-त्री, तुतुत्थयिषिता-त्री;
तुत्थयन्-न्ती, तुतुत्थयिषन्-न्ती; तुत्थयिष्यन्-न्ती-ती, तुतुत्थयिषिष्यन्-न्ती-ती; तुत्थयमानः, तुतुत्थयिषमाणः; तुत्थयिष्यमाणः, तुतुत्थयिषिष्यमाणः;
तुत्-तुत्थौ-तुत्थः; [B]तुत्थितः-तम्-तवान्, तुतुत्थयिषितः-तवान्;
तुत्थः, तुतुत्थयिषुः; तुत्थयितव्यम्, तुतुत्थयिषितव्यम्;
तुत्थनीयम्, तुतुत्थयिषणीयम्; तुत्थ्यम्, तुतुत्थयिष्यम्;
ईषत्तुत्थः-दुस्तुत्थः-सुतुत्थः; तुत्थ्यमानः, तुतुत्थयिष्यमाणः;

1. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वम्।

A. 'नार्यः संमृडदालिकेलिपृडिता यस्मिन् पृणन्त्यः प्रियान्
नित्यं तैर्वृणिता मृणालकमनीयाङ्गयो वितोणाशयाः॥' धा. का. 2. 75.

B 'प्रपर्णितदिशं रुचा क्षपितभूभृतोऽस्यानुजाः
सदोनिवसितं हरिं ययुरतूत्थिताङ्गाः कथा।' धा. का. 3.64.

[अ] धातुकाव्ये (3-64) '**अतूत्थि**ताङ्गाः—' इत्युदाहरणदर्शनात् '**तूत्थ**' इति तत्सम्मतः पाठ इति ज्ञायते।



तुत्थः, तुतुत्थयिषः; तुत्थयितुम्, तुतुत्थयिषितुम्;
तुत्थना, तुतुत्थयिषा; तुत्थनम्, तुतुत्थयिषणम्;
तुत्थयित्वा, तुतुत्थयिषित्वा; प्रतुत्थ्य, प्रतुतुत्थयिष्य;
तुत्थम् २, तुत्थयित्वा २, } तुतुत्थयिषम् २; तुतुत्थयिषित्वा २. }

(741) "**तुद व्यथने**" (VI-तुदादिः-1281. सक. अनि. उभ.)

तोदकः-दिका, तोदकः-दिका, [1]तुतुत्सकः-त्सिका, तोतुदकः-दिका;
तोत्ता-त्री, तोदयिता-त्री, तुतुत्सिता-त्री, तोतुदिता-त्री;
[A]तुदन्-न्ती-ती, तोदयन्-न्ती, तुतुत्सन्-न्ती; —
तोत्स्यन्-न्ती-ती, तोदयिष्यन्-न्ती-ती, तुतुत्सिष्यन्-न्ती-ती; —
तुदमानः, तोदयमानः, तुतुत्समानः, तोतुद्यमानः;
तोत्स्यमानः, तोदयिष्यमाणः, तुतुत्सिष्यमाणः, तोतुदिष्यमाणः;
तुत्-तुद्-तुदौ-तुदः; — — —
[2]तुन्नम्-तुन्नः-तुन्नवान्, तोदितः, तुतुत्सितः, तोतुदितः-तवान्;
तुदः, [3]विधुन्तुदः[B]-[C]अरुन्तुदः-[4]तिलन्तुदः, तोदः, तुतुत्सुः, तोतुदः;
तोत्तव्यम्, तोदयितव्यम्, तुतुत्सितव्यम्, तोतुदितव्यम्;
तोदनीयम्, तोदनीयम्, तुतुत्सनीयम्, तोतुदनीयम्;

1. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्। तेनाङ्गस्य गुणो न। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
2. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वम्।
3. 'विध्वरुषोस्तुदः' (3-2-35) इति खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' (6-3-67) इति मुम्। **विधुन्तुदः**=राहुः। 'संयोगान्तस्य लोपः' (8-2-23) इति अरुषः सकारस्य लोपः। अरुः=मर्म तुदति=व्यथतीति **अरुन्तुदः**=मर्मवित्।
4. 'वातशुनीतिलशर्धेषु अजधेट्तुदजहातीनामुपसंख्यानम्' (वा. 3-2-28) इति खश्। 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुमागमः। **तिलन्तुदः**=वणिजां तैलनिष्पादकं दारु।

A. '**तुदन्** कुचरितान् शुभे प्रणुदमान इष्टं दिशन्
प्रमृष्टपललान् क्षिपन् अरिमतिं कृषन् माधवः।' धा. का. 2.72.

B. 'अथ मुहुर्बहुनिन्दितचन्द्रया स्तुत**विधुन्तुदया** च तया बहु।' नैषधे. 4. 43.

C. '**अरुन्तुद**मिवालानमनिर्वाणस्य दन्तिनः॥' रघुवंशे 1.71.

तोद्यम् , तोद्यम् , तुतुत्स्यम् , तोतुद्यम् ;
ईषत्तोदः-दुस्तोदः-सुतोदः ; — —
तुद्यमानः, तोद्यमानः, तुतुत्स्यमानः, तोतुद्यमानः ;
[1]प्रतोदः, तोदः, तुतुत्सः, तोतुदः ;
तोत्तुम् , तोदयितुम् , तुतुत्सितुम् , तोतुदितुम् ;
तुत्तिः, तोदना, तुतुत्सा, तोतुदा ;
[2]तोत्त्रम्-तोत्त्री, तोदनम् , तोदनम् , तुतुत्सनम् , तोतुदनम् ;
तुत्त्वा, तोदयित्वा, तुतुत्सित्वा, तोतुदित्वा ;
प्रतुद्य, प्रतोद्य, प्रतुतुत्स्य, प्रतोतुद्य ;
तोदम् २, तोदम् २, तुतुत्सम् २, तोतुदम् २ ;
तुत्त्वा २, तोदयित्वा २, तुतुत्सित्वा २, तोतुदित्वा २.

(742) "**तुन्प हिंसार्थः**" (I-भ्वादिः-405. सक. सेट्. पर.)

'शपि तोपति हिंसायां तत्रैव तुपतीति शे ॥' (श्लो. 138)

'तत्रैव शशपोस्तुम्पेद् अर्दने तुम्पयेण्णिचि ।' (श्लो. 139) इति देवः ।

तोपकः-पिका, तोपकः-पिका, तुतुम्पिषकः-षिका, [3]तोतुपकः-पिका ;
तुम्पिता-त्री, तुम्पयिता-त्री, तुतुम्पिषिता-त्री, तोतुपिता-त्री ;
तुम्पन्-न्ती, प्रस्तुम्पन् [गौः वर्तते], तुम्पयन्-न्ती, तुतुम्पिषन्-न्ती ; —
तुम्पिष्यन्-न्ती-ती, तुम्पयिष्यन्-न्ती-ती, तुतुम्पिषिष्यन्-न्ती-ती ; —
— तुम्पयमानः, तुम्पयिष्यमाणः, — तोतुप्यमानः, तोतुपिष्यमाणः ;
तुप्-तुब्-तुपौ-तुपः ; — — —
तुपितम्-तः, तुम्पितः, तुतुम्पिषितः, तोतुपितः-तवान् ;
तुम्पः, तुम्पः, तुतुम्पिषुः, तोतुम्पः ;
तुम्पितव्यम् , तुम्पयितव्यम् , तुतुम्पिषितव्यम् , तोतुपितव्यम् ;
तुम्पनीयम् , तुम्पनीयम् , तुतुम्पिषणीयम् , तोतुपनीयम् ;

---

1. प्रतुद्यतेऽनयेति करणे 'हलश्च' (3-3-121) इति संज्ञायां घञ् ।
2. 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' (3-2-182) इति करणे ष्ट्रन् प्रत्ययो भवति । षित्त्वात् स्त्रियां ङीष् ।
3. नोपधोऽयं धातुः । तेन यङि, 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति नकारलोपः । एवं यङन्ते सर्वत्र ज्ञेयम् ।



तुप्यम् , तुम्प्यम् , तुतुम्पिष्यम् , तोतुप्यम् ;
ईषत्तुम्पः-दुस्तुम्पः-सुतुम्पः ; — —
तुप्यमानः, तुम्प्यमानः, तुतुम्पिष्यमाणः, तोतुप्यमानः ;
तुम्पः, [1]प्रस्तुम्पः-तुम्पः, तुतुम्पिषः, तोतुपः ;
तुम्पितुम् , तुम्पयितुम् , तुतुम्पिषितुम् , तोतुपितुम् ;
तुम्पा, तुम्पना, तुतुम्पिषा, तोतुपा ;
तुम्पनम् , तुम्पनम् , तुतुम्पिषणम् , तोतुपनम् ;
[2]तुम्पित्वा, तुम्पयित्वा, तुतुम्पिषित्वा, तोतुपित्वा ;
प्रतुप्य, प्रतुम्प्य, प्रतुतुम्पिष्य, प्रतोतुप्य ;
तुम्पम् २, तुम्पम् २, तुतुम्पिषम् २, तोतुपम् २ ;
तुम्पित्वा २, तुम्पयित्वा २, तुतुम्पिषित्वा २, तोतुपित्वा २.

(743) "**तुन्प हिंसार्थः**" (VI-तुदादिः-1310. सक. सेट्. पर.)

'शपि तोपति हिंसायां तत्रैव तुपतीति शे ॥' (श्लो. 138)

'तत्रैव शशपोस्तुम्पेद् , अर्दने तुम्पयेण्णिचि ।' (श्लो. 139) इति देवः ।

[A]तुम्पकः-म्पिका, तुम्पकः-म्पिका, तुतुम्पिषकः-षिका, तोतुपकः-पिका ; तुम्पिता-त्री, तुम्पयिता-त्री, तुतुम्पिषिता-त्री, तोतुपिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतुन्पधातुवत् (742) ज्ञेयानि । अस्य धातोः तुदादित्वात् शतरि—'तुदादिभ्यः शः' (3-1-77) इति शः विकरणप्रत्ययः । तस्य 'सार्वधातुकमपित्' (1-2-4) इति ङिद्वद्भावेन 'अनिदिताम्—' (6-4-24) इति धातोरुपधाभूतस्य नकारस्य शप्रत्यये परतः लोपेऽपि 'शे तृम्फादीनाम्' (वा. 7-1-59) इति वचनेन नुमि तुम्पन् इत्येव रूपम् ।

---

1. 'प्रात् तुम्पतौ गवि कर्तरि' (ग. सू. 6-1-157) इति पारस्करादिषु पाठात् प्रपूर्वकादस्मात् गवि कर्तरि सुट् । एवं 'प्रस्तुम्पन् गौः वर्तते' इत्यादिष्वपि सुट् ज्ञेयः ।
2. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् उपधानकारलोपो न ।

A. 'शत्रूल्लोभकरेफरीढितुपिता तृम्फाय तोपार्थिनो राज्ञा नित्यमतुम्पकान् वितुफती बन्धूंश्च सन्तुम्फती' धा. का. 2.74.

स्त्रियां तुम्पती-न्ती, इति रूपद्वयम् । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः । [1]प्रस्तुम्पन् ।

(744) "तुन्फ हिंसार्थः" (I-भ्वादिः-409. सक. सेट्. पर.)

तुम्फकः-म्फिका, तुम्फकः-म्फिका, तुतुम्फिषकः-षिका, तोतुफकः-फिका ; तुम्फिता-त्री, तुम्फयिता-त्री, तुतुम्फिषिता-त्री, तोतुफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतुन्पधातुवत् (742) बोध्यानि । क्त्वायां 'न क्त्वा सेट्' (1-2-18) इत्यस्यापवादतया 'नोपधात् थफान्ताद्वा' (1-2-23) इति कित्त्वस्य विकल्पितत्वात् कित्त्वपक्षे 'अनिदिताम्—' (6-4-24) इति नलोपे तुफित्वा इति रूपम् , कित्त्वाभावपक्षे तुम्फित्वा इति रूपद्वयं भवतीति विशेषः । घञि [A]प्रतुम्फः ।

(745) "तुन्फ हिंसार्थः" (VI-तुदादिः-1312. सक. सेट्. पर.)

तृम्फादिः ।

तुम्फकः-म्फिका, तुम्फकः-म्फिका, तुतुम्फिषकः-षिका, तोतुफकः-फिका ; तुम्फिता-त्री, तुम्फयिता-त्री, तुतुम्फिषिता-त्री, तोतुफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि गुन्फधातुवत् (407) ज्ञेयानि । शतरि सन्तुम्फन्-[B]ती-न्ती ।

(746) "तुप हिंसार्थः" (I-भ्वादिः-404. सक. सेट्. पर.)

'शपि तोपति हिंसायां तत्रैव तुपतीति शे ॥' (श्लो. 138) इति देवः । तोपकः-पिका, तोपकः-पिका, तुतोपिषकः-तुतुपिषकः-षिका, तोतुपकः-पिका ; तोपिता-त्री, तोपयिता-त्री, तुतोपिषिता-तुतुपिषिता-त्री, तोतुपिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि कुचधातुवत् (200) ज्ञेयानि ।

---

1. 'प्रात् तुम्पतौ गवि कर्तरि' (ग. सू. 6-1-157) इति पारस्करादिषु पाठात् प्रपूर्वकादस्मात् गवि कर्तरि सुट् । एवं तव्यदादिष्वपि ज्ञेयम् ।

A. 'अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान् मिलतोऽथ राक्षसान् ।' धा. का. 1. 53.

B. '—राज्ञो नित्यमतुम्पकान् वितुफती बन्धूंश्च सन्तुम्फती ।' धा. का. 2. 74.



(747) "तुप हिंसार्थः" (VI-तुदादिः-1309. सक. सेट्. पर.)

'शपि तोपति हिंसायां तत्रैव तुपतीति शे ॥' (श्लो. 138) इति देवः । तोपकः-पिका, तोपकः-पिका, तुतुपिषकः-तुतोपिषकः-षिका, तोतुपकः-पिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुचतिवत् (200) ज्ञेयानि । अस्य धातोः तुदादित्वात् शतरि—तुपन् इति रूपम् । स्त्रियां—तुपन्ती-तुपती इति रूपद्वयमिति विशेषः । क्त्वप्रत्यये 'उदुपधात्—' (1-2-21) इति कित्त्वविकल्पो न भवति, 'शब्विकरणेभ्यः एव इष्यते' इति भाष्यकारवचनात् । तेन तुपितः इत्येव ।

(748) "तुफ हिंसार्थः" (I-भ्वादिः-408. सक. सेट्. पर.)

तोफकः-फिका, तोफकः-फिका, तुतुफिषकः-तुतोफिषकः-षिका, तोतुफकः-फिका ; तोफिता-त्री, तोफयिता-त्री, तुतुफिषिता-तुतोफिषिता-त्री, तोतुफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुचतिवत् (200) ज्ञेयानि । [A]प्रतोफितुम् ।

(749) "तुफ हिंसार्थः" (VI-तुदादिः-1311. सक. सेट्. पर.)

तोफकः-फिका, तोफकः-फिका, तुतुफिषकः-तुतोफिषकः-षिका, तोतुफकः-फिका ; तोफिता-त्री, तोफयिता-त्री, तुतुफिषिता-तुतोफिषिता-त्री, तोतुफिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि कुरधातुवत् (229) बोध्यानि।

(750) "तुबि अर्दने" (I-भ्वादिः-428. सक. सेट्. पर.)

'लुम्बयेत् तुम्बयेदर्दे शपि लुम्बति तुम्बति ॥' (श्लो. 139) इति देवः ।

तुम्बकः-म्बिका, तुम्बकः-म्बिका, तुतुम्बिषकः-षिका, तोतुम्बकः-म्बिका ; तुम्बिता-त्री, तुम्बयिता-त्री, तुतुम्बिषिता-त्री, तोतुम्बिता-त्री ; इत्यादीनि सर्वाण्यपि भौवादिककुठिधातुवत् (209) ज्ञेयानि । [B]सन्तुम्बितः ।

---

A. 'अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान् मिलतोऽथ राक्षसान् ।' धा. का. 1. 53.

B. 'वियोगसन्तुम्बितकोकचुम्बिता सन्तापलब्धाऽपि जगाद तद्वधूः ।' धा. का. 1.56.

**(751) "तुबि अदर्शने"** (X-चुरादिः-1658. सक. सेट्. उभ.)

अर्दने इति केचित् । इदित्करणात् णिचः पाक्षिकत्वम् ।

'लुम्बयेत् तुम्बयेदर्दे शपि लुम्बति तुम्बति ॥' (श्लो. 139) इति देवः । 'तुपि अर्दने' इति मैत्रेयदुर्गसंमतपाठमनुसृत्य दैवश्लोके—'अर्दने तुम्पयेण्णिचि ।' (श्लो. 139) इत्यंशस्य उपपत्तिर्बोध्या ।

तुम्बकः-म्बिका, तुतुम्बयिषकः-षिका, तुम्बकः-म्बिका, तुतुम्बिषकः-षिका, तोतुम्बकः-म्बिका ; तुम्बयिता-त्री, तुतुम्बयिषिता-त्री, तुम्बिता-त्री, तुतुम्बिषिता-त्री, तोतुम्बिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि भाषार्थककुशिधातुवत् (232) बोध्यानि । तुम्बः-तुम्बी=[अलाबूः] । गौरादिपाठात् ङीष् । [A]तुम्बितम् ।

**(752) "तुभ हिंसायाम्"** (I-भ्वादिः-753. सक. सेट्. आत्म.)

[B]तोभकः-भिका, तोभकः-भिका, तुतुभिषकः-तुतोभिषकः-षिका, तोतुभकः-भिका ; तोभिता-त्री, तोभयिता-त्री, तुतुभिषिता-तुतोभिषिता-त्री, तोतुभिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि क्षुभ (316) धातुवज्ज्ञेयानि ।

**(753) "तुभ हिंसायाम्"** (IV-दिवादिः-1241. सक. सेट्. पर.)

तोभकः-भिका, तोभकः-भिका, तुतुभिषकः-तुतोभिषकः-षिका, तोतुभकः-भिका ; तोभिता-त्री, तोभयिता-त्री, तुतुभिषिता-तुतोभिषिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकगुधधातुवत् (405) बोध्यानि। क्त्वायां तुभित्वा-तोभित्वा इति रूपद्वयं बोध्यम् ।

**(754) "तुभ हिंसायाम्"** (IX-क्र्यादिः-1521. सक. सेट्. पर.)

तोभकः-भिका, तोभकः-भिका, तुतुभिषकः-तुतोभिषकः-षिका, तोतुभकः-भिका ; तोभिता-त्री, तोभयिता-त्री, तुतुभिषिता-तुतोभिषिता-त्री, तोतु-

A. 'किं कुम्ब्यते सदसि लुम्बितवैभवोऽहं
बालोऽस्मि तुम्बितविरोधिभयाश्च यूयम् ।' धा. का. 3.29.

B. 'अनभ्यसन्तोभककंसजीवस्तंसाय पापध्वदयं प्रतस्थे ॥' धा. का. 2. 2.



भिता-त्री ; इत्यादीनि सर्वाण्यपि रूपाणि कुषधातुवत् (233) बोध्यानि । शतरि—[A]तुभ्नन्-ती ।

**(755) "तुर त्वरणे"** (III-जुहोत्यादिः-1102. अक. सेट्. पर.)

छान्दसः ।

तोरकः-रिका, तोरकः-रिका, तुतुरिषकः-तुतोरिषकः-षिका, तोतुरकः-रिका ; तोरिता-त्री, तोरयिता-त्री, तुतुरिषिता-तुतोरिषिता-त्री, तोतुरिता-त्री ; [1]तुतुरत्-ती, तोरयन्-न्ती, तुतुरिषन्-तुतोरिषन्-न्ती ; तोरिष्यन्-न्ती-ती, तोरयिष्यन्, तुतुरिषिष्यन्-तुतोरिषिष्यन्-न्ती-ती ; तोरयमाणः, तोरयिष्यमाणः, [2]तोतूर्यमाणः, तोतुरिष्यमाणः ; [3]प्रतूः-प्रतुरौ-प्रतुरः ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककुरधातुवत् (229) बोध्यानि । [4]तुरः[B] । प्रतूर्य ।

**(756) "तुर्वी हिंसायाम्"** (I-भ्वादिः-570-सक. सेट्. पर)

[5]तूर्वकः-र्विका, तूर्वकः-र्विका, तुतूर्विषकः-षिका, तोतूर्वकः-र्विका ; तूर्विता-त्री, तूर्वयिता-त्री, तुतूर्विषिता-त्री, तोतूर्विता-त्री ; तूर्वन्-न्ती, तूर्वयन्-न्ती, तुतूर्विषन्-न्ती ; — तूर्विष्यन्-न्ती-ती, तूर्वयिष्यन्-न्ती-ती, तुतूर्विषिष्यन्-न्ती ती ; — — तूर्वयमाणः, तूर्वयिष्यमाणः, — तोतूर्व्यमाणः, तोतूर्विष्यमाणः ; [6]प्रतूः-प्रतुरौ-प्रतुरः ; — — —

1. धातोरस्य जुहोत्यादित्वात् 'जुहोत्यादिभ्यः श्लुः' (2-4-75) इति शपः श्लुः । 'श्लौ' (6-1-17) इति द्विर्वचनम् । 'सार्वधातुकमपित्' (1-2-4) इति श्लोर्ङिद्वद्भावादङ्गस्य गुणो न । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः ।
2. 'हलि च' (8-2-77) इति दीर्घः ।
3. क्विपि, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः । विसर्गः ।
4. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः ।
5. 'उपधायां च' (8-2-78) इति सर्वत्र दीर्घः ।
6. 'राल्लोपः' (6-4-21) इति वकारस्य लोपे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे, विसर्गः ।

A. 'आधोरणानपि च दन्तवरेण तुभ्नन्
क्लिश्नन् मतिं पलसुरादिकमश्नतां सः ।' धा. का. 3.11.

B. 'घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥' धा. का. 2. 55.

[1]तूर्णम् - [A]तूर्णः-तूर्णवान्, तूर्वितः, तुतूर्विषितः, तोतूर्वितः-तवान्;
तूर्वः, तूर्वः, तुतूर्विषुः, तोतूर्वः;
तूर्वितव्यम्, तूर्वयितव्यम्, तुतूर्विषितव्यम्, तोतूर्वितव्यम्;
तूर्वणीयम्, तूर्वणीयम्, तुतूर्विषणीयम्, तोतूर्वणीयम्;
[2]तूर्व्यम्, तूर्व्यम्, तुतूर्विष्यम्, तोतूर्व्यम्; —
ईषत्तूर्वः-दुस्तूर्वः-सुतूर्वः; — — —
तूर्व्यमाणः, तूर्व्यमाणः, तुतूर्विष्यमाणः, तोतूर्व्यमाणः;
तूर्वः, तूर्वः, तुतूर्विषः, तोतूर्वः;
तूर्वितुम्, तूर्वयितुम्, तुतूर्विषितुम्, तोतूर्वितुम्;
[3]तूर्वा, तूर्वणा, तुतूर्विषा, तोतूर्वा;
तूर्वणम्, तूर्वणम्, तुतूर्विषणम्, तोतूर्वणम्;
तूर्वित्वा, तूर्वयित्वा, तुतूर्विषित्वा, तोतूर्वित्वा;
प्रतूर्व्य, प्रतूर्व्य, प्रतुतूर्विष्य, प्रतोतूर्व्य;
तूर्वम् २, तूर्वित्वा २, } तूर्वम् २, तूर्वयित्वा २, } तुतूर्विषम् २, तुतूर्विषित्वा २, } तोतूर्वम् २; तोतूर्वित्वा २. }

(757) **"तुल उन्माने"** (X-चुरादिः-1599. सक. सेट्. उभ.)

तोलकः-लिका, तुतोलयिषकः-षिका; तोलयिता-त्री, तुतोलयिषिता-त्री; तोलयन्-न्ती, तुतोलयिषन्-न्ती; तोलयिष्यन्-न्ती-ती, तुतोलयिषिष्यन्-न्ती-ती; तोलयमानः, तुतोलयिषमाणः; तोलयिष्यमाणः, तुतोलयिषिष्यमाणः; प्रतोल्-प्रतोलौ-प्रतोलः; तोलितम्-तः-तवान्, तुतोलयिषितः-तवान्; तोलः, [4]तुलः[B], तुतोलयिषुः; तोलयितव्यम्, तुतोलयिषितव्यम्;

1. '**श्वीदितो** निष्ठायाम्' (7-2-14) इतीण्णिषेधः। 'राल्लोपः' (6-4-21) इति वकारस्य लोपः। 'हलि च' (8-2-77) इति दीर्घः। 'रदाभ्यां निष्ठातो नः—' (8-2-42) इति निष्ठानत्वम्। णत्वम्।
2. 'हलो यमां यमि लोपः' (8-4-64) इत्यत्र यथासंख्यविज्ञानान्न लोपः।
3. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः।
4. 'चुरादिणिचोऽनित्यत्वात् तदभावः।' इति **धातुकाव्यव्याख्याने** (3-21) प्रोक्तम्।

A. 'प्रक्ष्यूतगोपीशुचमूर्णपूतनं **तूर्णा**नसं थूर्णबकादिदानवम्।' धा. का. 1.73.
B. 'दुर्दान्तचक्र पशुपचुक्रनमप्यरौत्सीत्
प्रक्षालितक्षितितला**तुल**शर्षरोधी।' धा. का. 3.21.



तोलनीयम्, तुतोलयिषणीयम्; तोल्यम्, तुतोलयिष्यम्; ईषत्तोलः-दुस्तोलः-सुतोलः; तोल्यमानः, तुतोलयिष्यमाणः; तोलः, तुतोलयिषः; तोलयितुम्, तुतोलयिषितुम्; तोलना-[1]तुलना, तुला, तुतोलयिषा; तोलनम्, तुतोलयिषणम्; तोलयित्वा, तुतोलयिषित्वा; प्रतोल्य, प्रतुतोलयिष्य; तोलम् २, तोलयित्वा २, } तुतोलयिषम् २; तुतोलयिषित्वा २. }

(758) **"तुष प्रीतौ"** (IV-दिवादिः-1184. अक. अनि. पर.)

**प्रीतिः**=तृप्तिः।

तोषकः-षिका, तोषकः-षिका, [2]तुतुक्षकः-क्षिका, तोतुषकः-षिका;
तोष्टा-ष्ट्री, तोषयिता-त्री, तुतुक्षिता-त्री, तोतुषिता-त्री;
[3]तुष्यन्-न्ती, तोषयन्-न्ती, तुतुक्षन्-न्ती; —
[4]तोक्ष्यन्-न्ती-ती, [5]तोषयिष्यन्-न्ती-ती, तुतुक्षिष्यन्-न्ती-ती; —
— तोषयमाणः, तोषयिष्यमाणः, — तोतुष्यमाणः, तोतुषिष्यमाणः;
तुट्-तुषौ-तुषः; — — —
तुष्टम्-ष्टः-ष्टवान्, तोषितः, तुतुक्षितः, तोतुषितः-तवान्;
तुषः, तोषः, तुतुक्षुः, तोतुषः;
तोष्टव्यम्, तोषयितव्यम्, तुतुक्षितव्यम्, तोतुषितव्यम्;
तोषणीयम्, तोषणीयम्, तुतुक्षणीयम्, तोतुषणीयम्;

1. बाहुलकाद् गुणाभावे रूपम्। 'चिन्तिपूजि—' (3-3-105) इत्यत्र **चकारात् तुला**' इति **क्षीरस्वामी**। **माधवधातुवृत्तौ** तु—'**तुला** इति 'णिचोऽनित्यत्वात्' इति **मैत्रेयः**। **अन्ये** तु 'णिजभावे प्रमाणाभावात् 'तुल्यार्थैः—' (2-3-62) इत्यादौ **तुला** इति निपातनादङि णिलुकि **तुला** इति।' इत्युक्तम्।
2. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्। 'षढोः कः सि' (8-2-41) इति धातुषकारस्य ककारः। एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
3. 'दिवादिभ्यः—' (3-1-69) इति श्यन् विकरणप्रत्ययः। तस्य ङिद्वद्भावादङ्गस्य गुणो न।
4. 'षढोः कः सि' (8-2-41) इति धातुषकारस्य ककारः।
5. 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इत्यनेन ण्यन्तात् चित्तवत्कर्तृकत्वे परस्मैपदमेव। अचित्तवत्कर्तृकत्वे तु आत्मनेपदमपि भवति।

तोष्यम्, तोष्यम्, तुतुक्ष्यम्, तोतुष्यम्;
ईषत्तोषः-दुस्तोषः-सुतोषः; — — —
तुष्यमाणः, तोष्यमाणः, तुतुक्ष्यमाणः, तोतुष्यमाणः;
संतोषः, [A]तोषः, तोषः, तुतुक्षः, तोतुषः,
तोष्टुम्, तोषयितुम्, तुतुक्षितुम्, तोतुषितुम्;
संतुष्टिः, तोषणा, तुतुक्षा, तोतुषा;
तोषणम्, तोषणम्, तुतुक्षणम्, तोतुषणम्;
तुष्ट्वा, तोषयित्वा, तुतुक्षित्वा, तोतुषित्वा;
संतुष्य, प्रतोष्य, प्रतुतुक्ष्य, सन्तोतुष्य;
तोषम् २, तुष्ट्वा २, } तोषम् २, तोषयित्वा २, } तुतुक्षम् २, तुतुक्षित्वा २, } तोतुषम् २; तोतुषित्वा २. }

(759) "तुस शब्दे" (I-भ्वादिः-710. अक. सेट्. पर.)

तोसकः-सिका, तोसकः-सिका, तुतुसिषकः-तुतोसिषकः-षिका, तोतुसकः-सिका; तोसिता-त्री, तोसयिता-त्री, तुतुसिषिता-तुतोसिषिता-त्री, तोतुसिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुचधातुवत् (200) ज्ञेयानि। क्विपि—तूः-तुसौ-तुसः, इति रूपाणीति विशेषः। घञि [B]तोसः।

(760) "तुहिर् अर्दने" (I-भ्वादिः. 737. सक. सेट्. पर.)

तोहकः-हिका, तोहकः-हिका, [1]तुतोहिषकः-तुतुहिषकः-षिका, तोतुहकः-हिका;
तोहिता-त्री, तोहयिता-त्री, तुतोहिषिता-तुतुहिषिता-त्री, तोतुहिता-त्री;
तोहन्-न्ती, [2]व्यतितोहन्, तोहयन्-न्ती, तुतोहिषन्-तुतुहिषन्-न्ती; —
तोहिष्यन्-न्ती-ती, तोहयिष्यन्-न्ती-ती, तुतोहिषिष्यन्-तुतुहिषिष्यन्-न्ती-ती;

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सेटः सनः क्त्वायाश्च कित्त्वविकल्पः। तेन रूपद्वयम्। एवं सन्नन्ते सर्वत्र, क्त्वायामपि ज्ञेयम्।
2. 'न गतिहिंसार्थेभ्यः' (1-3-15) इति निषेधात् कर्मव्यतीहारे गम्यमानेऽपि शानच् न भवति।
A. 'राध्यद्वेषगुणोऽथ वायकवराद् दैत्याविदेषोऽपुष-
कच्छोषं तोषकृतोऽस्य दोषविततेराश्लिष्टलक्ष्मीस्तनः।' धा. का. 2.63.
B. '—तोसहासविहीनशङ्खजनितह्लासाद् रसद्दिक्तटम्॥' धा. का. 1.88.



— तोह्यमानः, तोहयिष्यमाणः, — तोतुह्यमानः; तोतुहिष्यमाणः;
[1]तुट्-तुड्-तुहौ-तुहः; — — —
[2]तुहितम्-तोहितम्-तः-तवान्, तोहितः, तुतोहिषितः-तुतुहिषितः, तोतुहितः-तवान्;
तुहः, तोहः, तुतोहिषुः-तुतुहिषुः, तोतुहः;
तोहितव्यम्, तोहयितव्यम्, तुतोहिषितव्यम्-तुतुहिषितव्यम्, तोतुहितव्यम्;
तोहनीयम्, तोहनीयम्, तुतोहिषणीयम्-तुतुहिषणीयम्, तोतुहनीयम्;
तोह्यम्, तोह्यम्, तुतोहिष्यम्-तुतुहिष्यम्, तोतुह्यम्;
ईषत्तोहः-दुस्तोहः-सुतोहः; — —
तुह्यमानः, तोह्यमानः, तुतोहिष्यमाणः-तुतुहिष्यमाणः, तोतुह्यमानः;
तोहः, तोहः, तुतोहिषः-तुतुहिषः, तोतुहः;
तोहितुम्, तोहयितुम्, तुतोहिषितुम्-तुतुहिषितुम्, तोतुहितुम्;
[3]तूढिः, तोहना, तुतोहिषा-तुतुहिषा, तोतुहा;
तोहनम्, तोहनम्, तुतोहिषणम्-तुतुहिषणम्, तोतुहनम्;
तोहित्वा-तुहित्वा, तोहयित्वा, तुतोहिषित्वा-तुतुहिषित्वा, तोतुहित्वा;
सन्तुह्य, प्रतोह्य, प्रतुतोहिष्य-प्रतुतुहिष्य, प्रतोतुह्य;
तोहम् २, तोहित्वा २-तुहित्वा २, } तोहम् २, तोहयित्वा २, } तुतोहिषम् २-तुतुहिषम् २, तुतोहिषित्वा २-तुतुहिषित्वा २, } तोतुहम् २; तोतुहित्वा २; }
[4]तुहिनम्[A].

(761) "तूण पूरणे" (X-चुरादिः-1690. सक. सेट्. आत्म.)

आकुस्मीयः।

1. क्विपि, 'हो ढः' (8-2-31) इति ढत्वे, जश्त्वचर्त्वयोश्च रूपम्।
2. 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति निष्ठायाः भावे आदिकर्मणि च कित्त्वविकल्पनाद्रूपद्वयम्।
3. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, ढत्व-धत्व-ष्टुत्व-ढलोप-दीर्घेषु रूपम्।
4. 'वेपितुह्योर्ह्रस्वश्च' [द. उ. 5-18] इति इनन्प्रत्ययः। तस्य कित्त्वाद् गुणो न। तोहति जनान् इति, तुह्यतेऽर्केणेति वा तुहिनम्=हिमम्, अन्धकारश्च।
A. 'गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्दोहिनं
प्रोहिष्यन् जगदर्हणीयमहिमा मोदेन निन्ये निशाम्॥' धा. का. 1. 92.

तूणकः-णिका, तुतूणयिषकः-षिका ; तूणयिता-त्री, तुतूणयिषिता-त्री ; [A]तूणितम्-तः-तवान्, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककूटयतिवत्-(240) ज्ञेयानि ।

(762) **" तूरी गतित्वरणहिंसनयोः "**

(X-दिवादिः-1152. अक. सेट्. आत्म.)

' गतेः त्वरणे, हिंसने च ' इति **क्षीरस्वामी** । ' तूर ' इति **दुर्गः** । ' त्वरणहिंसनयोः ' इति **मैत्रेयः** । ' त्वरणमात्रे च **द्रुमे** ।' इति **धा. का. व्याख्यायाम्** (2.59) ।

तूरकः-रिका, तूरकः-रिका, तुतूरिषकः-षिका, तोतूरकः-रिका ; इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकगूर्यतिवत् (419) ज्ञेयानि । [B]तूर्णम्-कर्मणि क्तः ।

(763) **" तूल निष्कर्षे "** (I-भ्वादिः-527. सक. सेट्. पर.)

**निष्कर्षः**=निष्कोषणम् । तच्च, अन्तर्गतस्य बहिर्निस्सारणम् ।

तूलकः-लिका, तूलकः-लिका, तुतूलिषकः-षिका, तोतूलकः-लिका ;
तूलिता-त्री, तूलयिता-त्री, तुतूलिषिता-त्री, तोतूलिता-त्री ;
तूलन्-न्ती, तूलयन्-न्ती, तुतूलिषन्-न्ती ; —
तूलिष्यन्-न्ती-ती, तूलयिष्यन्-न्ती-ती, तुतूलिषिष्यन्-न्ती-ती ; —
— तूल्यमानः, — तोतूल्यमानः ;
— तूलयिष्यमाणः, — तोतूलिष्यमाणः ;
तूल्-तूलौ-तूलः ; — — —
तूलितम्-तः, तूलितः, तुतूलिषितः, तोतूलितः-तवान् ;
तूलः, [1]इषीकतूलम्, तूलः, तुतूलिषुः, तोतूलः ;
तूलितव्यम्, तूलयितव्यम्, तुतूलिषितव्यम्, तोतूलितव्यम् ;
तूलनीयम्, तूलनीयम, तुतूलिषणीयम्, तोतूलनीयम् ;

1. इगुपधलक्षणे कप्रत्यये ' इष्टकेषीकामालानां चिततूलभारिषु ' (6-3-65) इति पूर्वपदस्य ह्रस्वः । पदाधिकारत्वात् ' पदाङ्गाधिकारे तस्य च तदन्तस्य च ' (परिभाषा 30) इति वचनात् ' **मुञ्जेषीकतूलम्** ' इत्यत्रापि पूर्वपदस्य ह्रस्वः ।
A. ' आकुणिताक्षमपि च स्मित**तूणिता**स्यं भ्रणस्य शाव्यजनयक्ष्यमवेक्ष्य गात्रम् ।' धा. का. 3. 35.
B. ' धर्मावसायजनदः खलु योऽजनिष्ट दीप्तोष्मपूर्णभुज**तूर्ण**विघूर्णवैरी ॥' धा.का. 2.59.



तूल्यम्, तूल्यम्, तुतूलिष्यम्, तोतूल्यम् ;
ईषत्तूलः-दुस्तूलः-सुतूलः ; — —
तूल्यमानः, तूल्यमानः, तुतूलिष्यमाणः, तोतूल्यमानः ;
[A]तूलः, तूलः, तुतूलिषः, तोतूलः ;
तूलितुम्, तूलयितुम्, तुतूलिषितुम्, तोतूलितुम् ;
तूला, [1]तूलिका[B], तूलना, तुतूलिषा, तोतूला ;
तूलनम्, तूलनम्, तुतूलिषणम्, तोतूलनम् ;
तूलित्वा, तूलयित्वा, तुतूलिषित्वा, तोतूलित्वा ;
प्रतूल्य, प्रतूल्य, प्रतुतूलिष्य, प्रतोतूल्य ;
तूलम् २, } तूलम् २, } तुतूलिषम् २, } तोतूलम् २ ; }
तूलित्वा २, } तूलयित्वा २, } तुतूलिषित्वा २, } तोतूलित्वा २. }

(764) **" तूष तुष्टौ "** (I-भ्वादिः-674. अक. सेट्. पर.)

तूषकः-षिका, तूषकः-षिका, तुतूषिषकः-षिका, तोतूषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचूषतिवत् (553) ज्ञेयानि । [C]तूषः—घञ् ।

(765) **" तृक्ष गतौ "** (I-भ्वादिः-660. सक. सेट्. पर.)

तृक्षकः-क्षिका, तृक्षकः-क्षिका, तितृक्षिषकः-क्षिका, [2]तरीतृक्षकः-क्षिका ;
तृक्षिता-त्री, तृक्षयिता-त्री, तितृक्षिषिता-त्री, तरीतृक्षिता-त्री ;
तृक्षन्-न्ती, तृक्षयन्-न्ती, तितृक्षिषन्-न्ती ; —
तृक्षिष्यन्-न्ती-ती, तृक्षयिष्यन्-न्ती-ती, तितृक्षिषिष्यन्-न्ती-ती ; —

1. स्त्रियां भावादौ ' संज्ञायाम् ' (3-3-109) इति ण्वुल् । ' **तूलं तूलिस्तूल**-शय्या शलाकायां तु **तूलिका** ।' इति **क्षीरतरङ्गिण्यां** कोशवाक्यमुद्धृतम् ।
2. यङन्ते, ' रीगृत्वत इति वक्तव्यम् ' (वा. 7-4-90) इति अभ्यासे रीगागमः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
A. ' सन्मार्गसङ्कुलिषु शूलदायिनं दहन्तमेनांसि च **तूल**पूलवत् ।' धा. का. 1.68.
B. ' क्रीडा**तूलिकया** स्वस्मिन् कृपारूषितया स्वयम् ।' यादवाभ्युदये 1-9.
C. ' **तूषं** तनोषि कमलस्य यथैव पूषा
खेदं च मूषसि कृपारसरूषितात्मन् ।' धा. का. 1. 86.

— तृक्षयमाणः, — तरीतृक्ष्यमाणः ;

— तृक्षयिष्यमाणः, — तरीतृक्षिष्यमाणः ;

[1]तृट्-तृड्-तृक्षौ-तृक्षः ; [2]तृक्-तृग्-तृक्षौ तृक्षः ; —

तृक्षितम्-[A]तः-तवान्, तृक्षितः, तितृक्षिषितः, तरीतृक्षितः-तवान् ;

तृक्षः, [3]तार्क्ष्यः, तृक्षः, तितृक्षिषुः, तरीतृक्षः ;

तृक्षितव्यम्, तृक्षयितव्यम्, तितृक्षिषितव्यम्, तरीतृक्षितव्यम् ;

तृक्षणीयम्, तृक्षणीयम्, तितृक्षिषणीयम्, तरीतृक्षणीयम् ;

तृक्ष्यम्, तृक्ष्यम्, तितृक्षिष्यम्, तरीतृक्ष्यम् ;

ईषत्तृक्षः-दुस्तृक्षः-सुतृक्षः ; — —

तृक्ष्यमाणः, तृक्ष्यमाणः, तितृक्षिष्यमाणः, तरीतृक्ष्यमाणः ;

तृक्षः, तृक्षः, तितृक्षिषः, तरीतृक्षः ;

तृक्षितुम्, तृक्षयितुम्, तितृक्षिषितुम्, तरीतृक्षितुम् ;

[4]तृक्षा, तृक्षणा, तितृक्षिषा, तरीतृक्षा ;

तृक्षणम्, तृक्षणम्, तितृक्षिषणम्, तरीतृक्षणम् ;

तृक्षित्वा, तृक्षयित्वा, तितृक्षिषित्वा, तरीतृक्षित्वा ;

प्रतृक्ष्य, प्रतृक्ष्य, प्रतितृक्षिष्य, प्रतरीतृक्ष्य ;

तृक्षम् २, तृक्षित्वा २, } तृक्षम् २, तृक्षयित्वा २, } तितृक्षिषम् २, तितृक्षिषित्वा २, } तरीतृक्षम् २ ; तरीतृक्षित्वा २. }

## (766) " तृणु अदने " (VIII-तनादिः-1468. सक. सेट्. उभ.)

तर्णकः-र्णिका, तर्णकः-र्णिकः, तितर्णिषकः-षिका, [5]तरीतृणकः-णिका ;

1. क्विपि, 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति ककारलोपे, जश्त्वे, चर्त्वविकल्पे च रूपम् ।
2. ण्यन्तात् क्विपि तु णिलोपस्य स्थानिवद्भावेन, 'स्कोः—' (8-2-29) इति ककारलोपो न भवति । 'संयोगान्तस्य—' (8-2-23) इति षकारलोपे, जश्त्वे च रूपमेवमिति ज्ञेयम् ।
3. पचाद्यचि, तृक्षस्यापत्यमित्यर्थे, 'गर्गादिभ्यो यञ्' (4-1-105) इति यञ्प्रत्यये रूपम् ।
4. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः ।
5. 'रीगृदुपधस्य च' (7-4-90) इति यङन्तेऽभ्यासस्य रीगागमः । अनुनासिकान्तत्वादत्राभ्यासस्य नुगागमो न शङ्क्यः ; परत्वात् रीगागमेन तस्य बाधात् ।

A. 'उक्षणेनं मन्दहासेन रक्षन् विश्वं निक्षन् वल्वीस्तृक्षिताघाः ॥' धा. का. 1.83.



तर्णिता-त्री, तर्णयिता-त्री, तितर्णिषिता-त्री, तरीतृणिता-त्री ;

[1]तर्णुवन्-तृण्वन्-ती, [2]तर्णयन्-न्ती, तितर्णिषन्-न्ती ; —

तर्णिष्यन्-न्ती-ती, तर्णयिष्यन्-न्ती-ती, तितर्णिषिष्यन्-न्ती-ती ; —

तर्णुवानः, — तितर्णिषमाणः, तरीतृण्यमानः ;

तर्णिष्यमाणः, तितर्णिषिष्यमाणः, तरीतृणिष्यमाणः ; —

[3]तृण्-तृणौ-तृणः, [4]तृन्-तृतौ-तृतः ; — —

[5]तृतम्-तः-तवान्, तर्णितः, तितर्णिषितः, तरीतृणितः-तवान् ;

तृणः, [6]तर्णकः, [A]तर्णः, तितृर्णिषुः, तरीतृणः ;

तर्णितव्यम्, तर्णयितव्यम्, तितर्णिषितव्यम्, तरीतृणितव्यम् ;

तर्णनीयम्, तर्णनीयम्, तितर्णिषणीयम्, तरीतृणनीयम् ;

[7]तृण्यम्, तर्ण्यम्, तितर्णिष्यम्, तरीतृण्यम् ;

ईषत्तर्णः-दुस्तर्णः-सुतर्णः ; — — —

तृण्यमानः, तर्ण्यमानः, तितर्णिष्यमाणः, तरीतृण्यमानः ;

[8]तृणम्, [9]कत्तृणम्, तर्णः, तितर्णिषः, तरीतृणः ;

1. '**तनादि**कृञ्भ्य उः' (3-1-79) इति उः विकरणप्रत्ययः । गुणः । 'अचि श्नुधातु—' (6-4-77) इत्युवङ् । स्त्रियां उगित्त्वेन ङीप् । **आत्रेयादयस्तु** 'संज्ञापूर्वको विधिरनित्यः' (परिभाषा 94) इत्याश्रित्य गुणाभावं मत्वा, **तृण्वन्-ती** इति रूपमाहुः ।
2. ण्यन्तात्, '**निगरण**चलनार्थेभ्यश्च' (1-3-87) इति परस्मैपदमेव । तेन शानच् न भवति ।
3. विचि रूपमेवम् । तेन अनुनासिकलोपो न भवति ।
4. क्विपि तु, 'गमः क्वौ' (6-4-40) इत्यत्र '**गमादीना**मिति वक्तव्यम्' (वा. 6-4-40) इति वार्तिकात्, अनुनासिकलोपे, तुकि रूपमेवं भवति । **गमादयः**=गमप्रकाराः इति सर्वैः व्याख्यातत्वात् न दोषः ।
5. 'अनुदात्तोपदेशवनति**तनोत्यादीना**मनुनासिकलोपो झलि क्ङिति' (6-4-37) इत्यनुनासिकलोपे रूपम् ।
6. 'आशिषि च' (3-1-150) इति वुन् ।
7. '**ऋदुपधा**च्चाक्लृपिचृतेः' (3-1-110) इति क्यप् ।
8. 'घञर्थे कविधानम्' (वा. 3-3-58) इति कप्रत्ययः । कित्त्वान्न गुणः ।
9. '**तृणे** च जातौ' (6-3-103) इति तत्पुरुषे कद्भावः ।

A. 'गावः पिबन्तु गणशः कलशाम्बुराशिं किं तेन **तर्णक**गणाश्चिरमादधानाः ॥'

देवनायकपञ्चाशत्,—5.

तर्णितुम्, तर्णयितुम्, तितर्णिषितुम्, तरीतृणितुम्;
[1]तृतिः, [2]तृण्टिः, तर्णना, तितर्णिषा, तरीतृणा;
तर्णनम्, तर्णनम्, तितर्णिषणम्, तरीतृणनम्;
[3]तृर्णित्वा-तृत्वा, तर्णयित्वा, तितर्णिषित्वा, तरीतृणित्वा;
[4]प्रतृत्य-प्रतृण्य, प्रतर्ण्य, प्रतितर्णिष्य, प्रतरीतृण्य;
तर्णम् २, तर्णित्वा २-तृत्वा २, } तर्णम् २, तर्णयित्वा २, } तितर्णिषम् २, तितर्णिषित्वा २, } तरीतृणम् २; तरीतृणित्वा २. }

## (767) "उ तृदिर् हिंसानादरयोः"

(VII रुधादिः-1446. सक. सेट्. उभ.)

तर्दकः-र्दिका, तर्दकः-र्दिका, [5]तितर्दिषकः-षिका-[6]तितृत्सकः-त्सिका, [7]तरीतृदकः-दिका;
तर्दिता-त्री, तर्दयिता-त्री, तितर्दिषिता-तितृत्सिता-त्री, तरीतृदिता-त्री;

---

1. क्तिनि, 'अनुदात्तोपदेशवनतितनोत्यादीनाम्—' (6-4-37) इत्यनुनासिकलोपे रूपम्।
2. क्तिचि तु, 'न क्तिचि दीर्घश्च' (6-4-39) इति सूत्रेण दीर्घस्य, अनुनासिकलोपस्य च निषेधः। 'ष्टुना ष्टुः' (8-4-41) इति तकारस्य ष्टुत्वेन टकारः। 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति वचनादत्र धातौ **तृणु** इत्यत्र णत्वं भवति, **नकारान्तत्वमेवास्यौपदेशिकम्**—इति **केचित्**। तेषां पक्षे तु, **तृन्तिः** इति रूपं भवति।
3. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणे **तर्णित्वा** इति रूपम्। इडभावपक्षे, अनुनासिकलोपे गुणाभावः।
4. 'वा ल्यपि' (6-4-38) इति अनुनासिकलोपविकल्पः। लोपपक्षे तुकि **प्रतृत्य** इति रूपम्।
5. 'सेऽसिचि कृतचृतछृदतृदनृतः' (7-2-57) इति सादेरार्धधातुकस्य इड्विकल्पः। इट्पक्षे सर्वत्र एवं रूपं ज्ञेयम्।
6. इडभावपक्षे, 'इको झल्' (1-2-9) इति सनः कित्त्वादङ्गस्य न गुणः। 'खरि च' (8-4-55) इति दकारस्य चर्त्वेन तकारः। एवम् इडभावपक्षे सर्वत्र ज्ञेयम्।
7. यङन्ते 'रीगृदुपधस्य च' (7-4-90) इति रीगागमः। एवं सर्वत्र ज्ञेयम्।



[1]तृन्दन्-तृन्दती, तर्दयन्-न्ती, तितर्दिषन्-तितृत्सन्-न्ती; —
[2]तर्दिष्यन्-तर्त्स्यन्-न्ती-ती, तर्दयिष्यन्-न्ती-ती, तितर्दिषिष्यन्-तितृत्सिष्यन्-न्ती-ती; —
तृन्दानः, तर्दयमानः, तितर्दिषमाणः-तितृत्समानः, तरीतृद्यमानः;
तर्दिष्यमाणः-तर्त्स्यमानः, तितर्दिषिष्यमाणः-तितृत्सिष्यमाणः, तरीतृदिष्यमाणः;
[3]वितृत्-वितृद्-वितृदौ-वितृदः; — — —
[4]तृण्णम्-तृण्णः-तृण्णवान्, तर्दितः, तितर्दिषितः-तितृत्सितः, तरीतृदितः-तवान्;
[5]वितृदः,[A] [6]शात्रवतर्दी,[B] तर्दः, तितर्दिषुः-तितृत्सुः, तरीतृदः;
तर्दितव्यम्, तर्दयितव्यम्, तितर्दिषितव्यम्-तितृत्सितव्यम्, तरीतृदितव्यम्;
तर्दनीयम्, तर्दनीयम्, तितर्दिषणीयम्-तितृत्सनीयम्, तरीतृदनीयम्;
[7]तृद्यम्, तर्द्यम्, तितर्दिष्यम्-तितृत्स्यम्, तरीतृद्यम्;
ईषत्तर्दः-दुस्तर्दः-सुतर्दः; — —

---

1. शतरि, '**रुधादिभ्यः**—' (3-1-78) इति श्नम् विकरणप्रत्ययः। तस्य मित्त्वेन अन्त्यादचः परो भवति। श्नमः शित्त्वेन सार्वधातुकत्वादङ्गस्य गुणो न। 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपः। एवं **तृन्दानः** इत्यत्रापि प्रक्रिया ज्ञेया।
2. 'सेऽसिचि कृतचृतछृदतृदनृतः' (7-2-57) इति स्यप्रत्ययस्येड्विकल्पः। तेन रूपद्वयम्। इडभावपक्षे धातुदकारस्य चर्त्वेन तकारः।
3. क्विपि चर्त्वविकल्पे रूपद्वयं ज्ञेयम्।
4. धातोरस्योदित्त्वेन क्त्वायामिड्विकल्पनात्, सादेरार्धधातुकस्येड्विकल्पनाद्वा, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इण्णिषेधः। 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वम्। पूर्वस्य नकारस्य 'ऋवर्णान्नस्य—' (वा. 8-4-1) इति णत्वम्। उत्तरस्य नकारस्य तु 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेनेति ज्ञेयम्।
5. '**इगुपध**ज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः।
6. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः।
7. '**ऋदुपधा**च्चाक्लृपिचृतेः' (3-1-110) इति क्यप्।

A. 'पक्षिभि**र्वितृदै**र्यूनां शाखिभिः कुसुमोत्करैः।' भ. का. 6. 77.
B. 'सञ्छृण्णगात्रमथ **शात्रवतर्दि**नस्ते
चाणूरमुष्टिकमुखा वसनान्यकृन्तन्।' धा. का. 3. 2.

तृद्यमानः, तर्द्यमानः, तितर्दिष्यमाणः-तितृत्स्यमानः, तरीतृद्यमानः;
तर्दः, तर्दः, तितर्दिषः-तितृत्सः, तरीतृदः;
तर्दितुम्, तर्दयितुम्, तितर्दिषितुम् तितृत्सितुम्, तरीतृदितुम्;
तृत्तिः, [1]वितर्दिका,[A] तर्दना, तितर्दिषा-तितृत्सा, तरीतृदा;
तर्दनम्, तर्दनम्, तितर्दिषणम्-तितृत्सनम्, तरीतृदनम्;
[2]तर्दित्वा-तृत्त्वा, तर्दयित्वा, तितर्दिषित्वा-तितृत्सित्वा, तरीतृदित्वा;
वितृद्य, वितर्द्य, वितितर्दिष्य-वितितृत्स्य, वितरीतृद्य;
[3]दण्डोपतर्दं दण्डेनोपतर्दं वा गाः कालयति।
तर्दम् २, तर्दित्वा २-तृत्त्वा २, } तर्दम् २, तर्दयित्वा २, } तितर्दिषम् २-तितृत्सम् २, तितर्दिषित्वा २-तितृत्सित्वा २, } तरीतृदम् २; तरीतृदित्वा २. }

## (768) "तृन्फ तृप्तौ" (VI-तुदादिः-1308. सक. सेट्. पर.)

### तृम्फादिः।

'प्रीणने—' इति द्रुमे। इति धा. का. व्याख्यायाम् (2-27)।
[4]तृम्फकः-म्फिका, तृम्फकः-म्फिका, तितृम्फिषकः-षिका, [5]तरीतृफकः-फिका;
तृम्फिता-त्री, तृम्फयिता-त्री, तितृम्फिषिता-त्री, तरीतृफिता-त्री;

1. 'संज्ञायाम्' (3-3-109) इति स्त्रियां भावादौ ण्वुल्। **वितर्दिका**=वेदिः।
2. '**उदितो** वा' (7-2-56) इति इड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणो भवति। इडभावपक्षे चर्त्वे रूपम्।
3. '**हिंसार्थानां** च समानकर्मकाणाम्' (3-4-48) इति णमुल्। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः।
4. नोपधोऽयं धातुः। नकारस्य, 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारे, 'अनुस्वारस्य ययि परसवर्णः' (8-4-58) इति परसवर्णो मकारः। एवं सर्वत्र ज्ञेयम्।
5. यङन्तेऽभ्यासस्य, 'रीगृत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीगागमः। यङ्निमित्तकः सर्वत्र, 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति नकारलोपः।

A. 'दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः।' वैराग्यपञ्चके 3.



[1]तृम्फन्-न्ती-ती, [2]तृम्फयन्-न्ती, तितृम्फिषन्-न्ती; —
तृम्फिष्यन्-न्ती-ती, तृम्फयिष्यन्-न्ती-ती, तितृम्फिषिष्यन्-न्ती-ती;
[3]व्यतितृम्फमाणः, — — तरीतृफ्यमाणः;
व्यतितृम्फिष्यमाणः, — — तरीतृफिष्यमाणः;
[4]सन्तृप्-सन्तृब्-सन्तृफौ-सन्तृफः; — —
[5]तृफितम्-तः, तृम्फितः, तितृम्फिषितः, तरीतृफितः-तवान्;
तृम्फः, तृम्फः, तितृम्फिषुः, [6]तरीतृम्फः;
तृम्फितव्यम्, तृम्फयितव्यम्, तितृम्फिषितव्यम्, तरीतृफितव्यम्;
तृम्फणीयम्, तृम्फणीयम्, तितृम्फिषणीयम्, तरीतृफणीयम्;
तृम्फ्यम्, तृम्फ्यम्, तितृम्फिष्यम्, तरीतृफ्यम्;
ईषत्तृम्फः-दुस्तृम्फः-सुतृम्फः; — — —
[7]तृफ्यमाणः, तृम्फ्यमाणः, तितृम्फिष्यमाणः, तरीतृफ्यमाणः;
[A]तृम्फः, तृम्फः, तितृम्फिषः, तरीतृफः;
तृम्फितुम्, तृम्फयितुम्, तितृम्फिषितुम्, तरीतृफितुम्;
[8]तृम्फा, तृम्फणा, तितृम्फिषा, तरीतृफा;

1. '**तुदादिभ्यः—**' (3-1-77) इति शः विकरणप्रत्ययः। शस्य सार्वधातुकत्वेन ङिद्वद्भावात्, 'अनिदितां—' (6-4-24) इत्युपधानकारलोपः। 'शे **तृम्फादीना**मिति वक्तव्यम्' (वा. 7-1-59) इति नुम्। **तृम्फादयः**=येऽत्र (तुदादौ) सानुषङ्गाः पठ्यन्ते ते इति **व्याख्यातारः**। 'प्रकारवाची आदिशब्दः। प्रकारश्च सादृश्यम्। तच्च नकारानुषक्ततया—' इति **हरदत्तः**।
2. 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इत्यनेन ण्यन्तात् परस्मैपदमेव। न शानच्।
3. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
4. क्विपि, 'अनिदिताम्—' (6-4-24) इति नकारलोपे, चर्त्वजश्त्वयो रूपम्।
5. निष्ठायाम्, नकारलोपे रूपम्।
6. यङन्तात् पचाद्यचि, 'यङोऽचि च' (2-4-74) इति यङो लुकि रूपम्। लुका लुप्तत्वेन स्थानिवद्भावनिषेधादुपधानकारलोपो न।
7. यकि, उपधानकारलोपे, 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति णत्वम्।
8. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादावकारप्रत्ययः।

A. 'शत्रूल्लोभकरेफरीढितृपिता **तृम्फाय** तोपार्थिनो
राज्ञो नित्यमतुम्पकान् वितुफती बन्धूंश्च सन्तुम्फती।' धा. का. 2.74.

तृम्फणम्, तृम्फणम्, तितृम्फिषणम्, तरीतृफणम्;
[1]तृफित्वा-तृम्फित्वा, तृम्फयित्वा, तितृम्फिषित्वा, तरीतृफित्वा;
प्रतृफ्य, प्रतृम्फ्य, प्रतितृम्फिष्य, प्रतरीतृफ्य;
तृम्फम् २, तृफित्वा २-तृम्फित्वा २, } तृम्फम् २, तृम्फयित्वा २, } तितृम्फिषम् २, तितृम्फिषित्वा २, } तरीतृफम् २; तरीतृफित्वा २. }

(769) "**तृन्हू हिंसार्थः**" (VI-तुदादिः-1350. अक. वेट्. पर.)

'श्रे तृणेढीति हिंसायाम्, तृहतीत्यूदितस्तृहेः ॥' (श्लो. 195) इति **देवः**।
[2]तृंहकः-हिका, तृंहकः-हिका, [3]तितृंहिषकः-षिका-तितृक्षकः-क्षिका, [4]तरीतृहकः-हिका;
तृंहिता-त्री-[5]तृण्ढा-ढ्री, तृंहयिता-त्री, तितृंहिषिता-तितृक्षिता-त्री, तरीतृहिता-त्री;
[6]तृहन्-न्ती-ती, तृंहयन्-न्ती, तितृंहिषन्-तितृक्षन्-न्ती; —
तृंहिष्यन्-[7]तृङ्क्ष्यन्-न्ती-ती, तृंहयिष्यन्-न्ती-ती, तितृंहिषिष्यन्-तितृक्षिष्यन्-न्ती-ती; —

---

1. '**नोपधात् थफान्ताद्वा**' (1-2-23) इति कित्त्वविकल्पः। कित्त्वपक्षे उपधानकारलोपो भवति। कित्त्वाभावपक्षे, नकारलोपो न।
2. नोपधोऽयं धातुः। 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारः। एवं सर्वत्र ज्ञेयम्।
3. ऊदित्त्वेनेड्विकल्पः, इट्पक्षे एवं रूपम्। इडभावपक्षे, 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः। 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः। 'हो ढः' (8-2-31) इति हकारस्य ढकारः। 'षढोः कः सि' (8-2-41) इति ढकारस्य ककारः। एवमिडभावपक्षे सनि सर्वत्र ज्ञेयम्।
4. यङन्ते ण्वुलि, यङ्निमित्तक उपधानकारलोपः। अभ्यासे, 'रीगृत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीगागमः। एवं यङन्ते सर्वत्र ज्ञेयम्।
5. ऊदित्त्वेन वलाद्यार्धधातुकेष्विड्विकल्पः। इडभावपक्षे, 'हो ढः' (8-2-31) इति ढत्वे, धत्वष्टुत्वढलोपानुस्वारपरसवर्णाः। एवं तव्यदादिष्वपि ज्ञेयम्।
6. '**तुदादिभ्यः—**' (3-1-77) इति शः विकरणप्रत्ययः। शस्य सार्वधातुकत्वेन ङिद्वद्भावात्, 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः, अङ्गस्य च गुणाभावः।
7. स्यप्रत्यये, इडभावपक्षे, 'हो ढः' (8-2-31) इति ढत्वे, 'षढोः कः सि' (8-2.41) इति ढकरस्य ककारे, उपधानकारस्यानुस्वारपरसवर्णयोश्च रूपम्।



— तृंह्यमाणः, — तरीतृह्यमाणः;
— तृंहयिष्यमाणः, — तरीतृहिष्यमाणः;
[1]प्रतृट्-प्रतृड्-प्रतृहौ-प्रतृहः; — —
[2]तृढम्-तृढः-तृढवान्, तृंहितः, तितृंहिषितः-तितृक्षितः, तरीतृहितः-तवान्;
तृंहः, तृंहः, तितृंहिषुः-तितृक्षुः, तरीतृंहः;
तृंहितव्यम्-तृण्ढव्यम्, तृंहयितव्यम्, तितृंहिषितव्यम्-तितृक्षितव्यम्, तरीतृहितव्यम्;
तृंहणीयम्, तृंहणीयम्, तितृंहिषणीयम्-तितृक्षणीयम्, तरीतृहणीयम्;
तृंह्यम्, तृंह्यम्, तितृंहिष्यम्-तितृक्ष्यम्, तरीतृह्यम्;
ईषत्तृंहः-दुस्तृंहः-सुतृंहः; — —
तृह्यमाणः, तृंह्यमाणः, तितृंहिष्यमाणः-तितृक्ष्यमाणः, तरीतृह्यमाणः;
[A]तृंहः, तृंहः, तितृंहिषः-तितृक्षः, तरीतृहः;
तृंहितुम्-तृण्ढुम्, तृंहयितुम्, तितृंहिषितुम्-तितृक्षितुम्, तरीतृहितुम्;
[3]तृंहा, तृंहणा, तितृंहिषा-तितृक्षा, तरीतृहा;
तृंहणम्, तृंहणम्, तितृंहिषणम्-तितृक्षणम्, तरीतृहणम्;
[4]तृंहित्वा-तृढ्वा, तृंहयित्वा, तितृंहिषित्वा-तितृक्षित्वा, तरीतृहित्वा;
प्रतृह्य, प्रतृंह्य, प्रतितृंहिष्य-प्रतितृक्ष्य, प्रतरीतृह्य;
तृंहम् २, तृंहित्वा २-तृढ्वा २, } तृंहम् २, तृंहयित्वा २, } तितृंहिषम् २-तितृक्षम् २, तितृंहिषित्वा २-तितृक्षित्वा २, } तरीतृहम् २; तरीतृहित्वा २. }

(770) "**तृप प्रीणने**" (IV-दिवादिः-1195. सक. वेट्. पर.) रधादिः।
**प्रीणनम्**=तृप्तिः, तर्पणं च। आद्येऽकर्मकः, द्वितीये—सकर्मकः।

---

1. क्विपि, उपधानकारलोपे, ढत्वे, चर्त्वजश्त्वयोश्च रूपम्।
2. निष्ठायामुपधानकारलोपे, ढत्वधत्वष्टुत्वढलोपाः।
3. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः।
4. इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधादुपधानकारलोपो न। इडभावपक्षे, ढत्वधत्वष्टुत्वढलोपाः।

A. 'कंसः स्थितो यत्र ततर्ह लोकं स्तृढामरः तृंहकरान भीच्छन् ॥' धा. का. 2. 77.

'तृप्नोति तृप्यतीत्येते प्रीणने श्नौ श्यनि क्रमात् ।
तृपावन्यतरस्यां णौ स्यातां तर्पति तर्पयेत ॥' (श्लो. 133) इति **देवः** ।

[1]तर्पकः-र्पिका, तर्पकः-र्पिका, [2]तितर्पिषकः-षिका, तितृप्सकः-प्सिका, [3]तरीतृपकः-पिका ;

[4]तर्पिता-तर्प्ता-त्रप्ता-त्री, [A]तर्पयिता-त्री, तितर्पिषिता-तितृप्सिता-त्री, तरीतृपिता-त्री ;

[5]तृप्यन्-[B]न्ती, तर्पयन्-न्ती, तितर्पिषन्-तितृप्सन्-न्ती ; —

तर्पिष्यन्-तर्प्स्यन्-[6]त्रप्स्यन्-न्ती-ती, तर्पयिष्यन्-न्ती-ती, तितर्पिषिष्यन्-तितृप्सिष्यन्-न्ती-ती ;

[7]व्यतितृप्यमाणः, तर्पयमाणः, [8]व्यतितितर्पिषमाणः-व्यतितितृप्समानः, [9]तरीतृप्यमाणः ;

1. 'सार्वधातुकार्धधातुकयोः' (7-3-84) इति गुणः । स च 'उरण् रपरः' (1-1-51) इति रेफविशिष्टो भवति । एवमुत्तरत्रापि ज्ञेयम् ।
2. 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इत्यत्रानिट्कारिकासु, '—लिपिं लुपिं **तृप्यति**दृप्यती स्वपिम् ।' (काशिका 7-2-10) इति पाठात् वलाद्यार्धधातुकेषु इडागमोऽस्य धातोर्यद्यपि न भवेत्—तथापि, '**रधादिभ्यश्च**' (7-2-45) इत्यत्र पाठात् इड्विकल्पः । अनुदात्तत्वफलं तु अमागम इति ज्ञेयम् । इट्पक्षे तु—'इको झल्' (1-2-9) इति सनः कित्वान्न गुणः, नापि अमागमः, अमागमविधायके सूत्रे, 'सृजिदृशोः—' (6-1-58) इत्यतः, 'अकिति' इत्यनुवृत्तेः ।
3. 'रीगृदुपधस्य च' (7-4-90) इति रीगागमः । एवं यङन्ते सर्वत्र बोध्यम् ।
4. '**रधादिभ्यश्च**' (7-2-45) इतीड्विकल्पः । इडभावपक्षे, 'अनुदात्तस्य च **ऋदुपधस्या**न्यतरस्याम्' (6-1-59) इति अमागमविकल्पः । 'मिदचोऽन्त्यात् परः' (1-1-47) इति अम् ऋकारात् परो भवति । 'इको यणचि' (6-1-77) इति यण् । लघूपधगुणापवादोऽयममागमः । एवं तव्यदादिष्वपि ज्ञेयम् ।
5. '**दिवादिभ्यः—**' (3-1-69) इति श्यन् विकरणप्रत्ययः । तस्य सार्वधातुकत्वेन ङिद्वद्भावादङ्गस्य गुणो न ।
6. स्यप्रत्ययेऽपि अकित्वात् अमागमो भवति । अमागमपक्षे रूपमेवम् ।
7. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानचि रूपम् ।
8. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् शानचि रूपम् ।
9. यङन्ताच्छानचि, 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति णत्वम् ।

A. 'दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन् ।' भ. का. 18.40.

B. 'रक्षार्ये सोऽयमनश्वराय **तृप्यन्**मना दत्तजनद्रुहेऽस्मै ।' धा. का. 2.64.



व्यतितर्पिष्यमाणः-व्यतितर्प्स्यमानः-व्यतित्रप्स्यमानः, तर्पयिष्यमाणः, व्यतितितर्पिषिष्यमाणः-व्यतितितृप्सिष्यमाणः, तरीतृपिष्यमाणः ;

सुतृप्-सुतृब्-सुतृपौ-सुतृपः ; — — —

[1]तृप्तम्-[फलानां] [2]तृप्तः-तृप्तवान्, तर्पितः, तितर्पिषितः-तितृप्सितः, तरीतृपितः-तवान् ;

तृपः, [3]सन्तर्पी, तर्पः, तितर्पिषुः-तितृप्सुः, तरीतृपः ;

तर्पितव्यम्-तर्प्तव्यम्-त्रप्तव्यम्, तर्पयितव्यम्, तितर्पिषितव्यम्-तितृप्सितव्यम्, तरीतृपितव्यम् ;

तर्पणीयम्, तर्पणीयम्, तितर्पिषणीयम्-तितृप्सनीयम्, तरीतृपणीयम्;

[4]तृप्यम्, तर्प्यम्, तितर्पिष्यम्-तितृप्स्यम्, तरीतृप्यम्,

ईषत्तर्पः-दुस्तर्पः-सुतर्पः ; — —

तृप्यमाणः, तर्प्यमाणः, तितर्पिष्यमाणः-तितृप्स्यमानः, तरीतृप्यमाणः ;

तर्पः, तर्पः, तितर्पिषः-तितृप्सः, तरीतृपः ;

तर्पितुम्-तर्प्तुम्-त्रप्तुम्, तर्पयितुम्, तितर्पिषितुम्-तितृप्सितुम्, तरीतृपितुम् ;

तृप्तिः, तर्पणा, तितर्पिषा-तितृप्सा, तरीतृपा ;

[A]तर्पणम्, तर्पणम्, तितर्पिषणम्-तितृप्सनम्, तरीतृपणम् ;

[5]तर्पित्वा-तृप्त्वा, तर्पयित्वा, तितर्पिषित्वा-तितृप्सित्वा, तरीतृपित्वा ;

सन्तृप्य, सन्तर्प्य, प्रतितर्पिष्य-प्रतितृप्स्य, प्रतरीतृप्य ;

तर्पम् २, तर्पित्वा २-तृप्त्वा २, } तर्पम् २, तर्पयित्वा २, } तितर्पिषम् २-तितृप्सम् २, तितर्पिषित्वा २-तितृप्सित्वा २, }

1. रधादित्वेनास्य धातोर्वलाद्यार्धधातुकेषु वैकल्पिकेट्कत्वात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।
2. 'फलानां **तृप्तः**' इत्यत्र, 'पूरणगुण**सुहितार्थ—**' (2-2-11) इत्यादिना षष्ठीसमासनिषेधः । **सुहितार्थः**=तृप्त्यर्थः ।
3. ताच्छील्ये णिनिप्रत्ययः ।
4. '**ऋदुपधा**च्चाक्लृपिचृतेः' (3-1-110) इति क्यपि रूपम् ।
5. रधादित्वेनेड्विकल्पः । इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्वनिषेधात् गुणो भवति । इडभावपक्षे प्रत्ययस्य कित्वेन गुणोऽमागमश्च न ।

A. 'जमदग्निसुतपितृ**तर्पणी**रपो वहति स्म या त्रिरुशीं रक्ता इव ॥' शि. व. 13.52.

तरीतृपम् २ ; } [1]तृप्रः, [2]तृपला.
तरीतृपित्वा २ ;}

(771) " **तृप प्रीणने** " (V-स्वादिः-1271. सक. सेट्. पर.) [अ]

'**तृप्नोति** तृप्यतीत्येते प्रीणने श्नौ श्यनि क्रमात् ।
तृप्तावन्यतरस्यां णौ स्याताम् तर्पति तर्पयेत् ॥' (श्लो. 133) इति **देवः** ।

तर्पकः-र्पिका, तर्पकः-र्पिका, तितर्पिषकः-षिका, तरीतृपकः-पिका ;
तर्पिता-त्री, तर्पयिता-त्री, तितर्पिषिता-त्री, तरीतृपिता-त्री ;
[3]तृप्नुवन्-ती, तर्पयन्-न्ती, तितर्पिषन्-न्ती ; —
तर्पिष्यन्-न्ती-ती, तर्पयिष्यन्-न्ती-ती, तितर्पिषिष्यन्-न्ती-ती ; —
— तर्पयमाणः, तर्पयिष्यमाणः, — तरीतृप्यमाणः, तरीतृपिष्यमाणः ;
प्रतृप्-प्रतृब्-प्रतृपौ-प्रतृपः ; — — —
तृपितम्-तः, तर्पितः, तितर्पिषितः, तरीतृपितः-तवान् ;
तृपः, तर्पः, तितर्पिषुः, तरीतर्पः ;
तर्पितव्यम्, तर्पयितव्यम्, तितर्पिषितव्यम्, तरीतृपितव्यम् ;
तर्पणीयम्, तर्पणीयम्, तितर्पिषणीयम्, तरीतृपणीयम् ;
[4]तृप्यम्, तर्प्यम्, तितर्पिष्यम्, तरीतृप्यम् ;
ईषत्तर्पः-दुस्तर्पः-सुतर्पः ; — — —

---

1. 'स्फायितञ्चि—' [द. उ. 8-31] इति रक्प्रत्ययः । **तृप्रः**=पुरोडाशः ।
2. '**कलस्तृपश्च**' [द. उ. 8-107] इति कलप्रत्ययः । **तृपला**=लताविशेषः ।
3. शतरि, 'स्वादिभ्यः—' (3-1-73) इति श्नुः विकरणप्रत्ययः । 'अचि श्नुधातु—' (6-4-77) इत्युवङ् । 'क्षुभ्नादिषु च' (8-4-39) इति णत्वनिषेधः ।
4. '**ऋदुपधा**च्चाक्लृपिचृतेः' (3-1-110) इति क्यप्प्रत्ययः ।

[अ] स्वादिषु केषाञ्चिन्मतेनास्य धातोः पाठः । 'स्वादौ क्षुभ्नादित्वात् (8-4-39) पाठ उन्नेयः ।' इति **क्षीरस्वामी** । **देवो**ऽपि स्वादिषु पाठमनुमेने । अनिट्कारिकासु '**तृप्यति**दृप्यती सृपिम्' (काशिका 7-2-10) इति श्यना निर्देशव्यावर्त्यत्वेन 'तुदादिषु यौ **तृपि**दृपी, तावुदात्तौ' इति **वृत्तिकारेणा**भिधानात् तदनुसारिणो **न्यासकारादयः** स्वादिपाठं नेच्छन्ति । क्षुभ्नादिषु णत्वनिषेधार्थं '**तृप्नु**' इति पाठे व्यत्ययेन श्नुः इति **न्यासकारादीनां** मतम् । **देव**श्लोकपरामर्शनेन देवस्य तुदादिष्वेव पाठोऽस्य धातोरनभिमत इति प्रतीयते । **सिद्धान्तकौमुद्या**द्यनुसारेणास्माभिरयं धातुर्लिखितः ।



तृप्यमाणः, तर्प्यमाणः, तितर्पिष्यमाणः, तरीतृप्यमाणः ;
तर्पः, तर्पः, तितर्पिषः, तरीतृपः ;
तर्पितुम्, तर्पयितुम्, तितर्पिषितुम्, तरीतृपितुम् ;
[1]तृप्तिः, तर्पणा, तितर्पिषा, तरीतृपा ;
तर्पणम्, तर्पणम्, तितर्पिषणम्, तरीतृपणम् ;
[2]तर्पित्वा, तर्पयित्वा, तितर्पिषित्वा, तरीतृपित्वा ;
सन्तृप्य, सन्तर्प्य, प्रतितर्पिष्य, प्रतरीतृप्य ;
तर्पम् २, } तर्पम् २, } तितर्पिषम् २, } तरीतृपम् २ ; }
तर्पित्वा २,} तर्पयित्वा २,} तितर्पिषित्वा २,} तरीतृपित्वा २.}

(772) " **तृप तृप्तौ** " (VI-तुदादिः-1307. अक. सेट्. पर.)

'**तृफ**' इति **क्षीरस्वामिप्रभृतयः** पठन्ति ।

'तृप्नोति तृप्यतीत्येके प्रीणने श्नौ श्यनि क्रमात् ।' (श्लो. 133) इति **देवः** ।
अत्र **पुरुषकारे**—'तृप तृप्तौ' तुदादिश्चायम् ।' इत्युक्तम् ।

तर्पकः-र्पिका, तर्पकः-र्पिका, तितर्पिषकः-षिका, तरीतृपकः-पिका ;
तर्पिता-त्री, तर्पयिता-त्री, तितर्पिषिता-त्री, तरीतृपिता-त्री ;
[3]तृपन्-न्ती-ती, तर्पयन्-न्ती, तितर्पिषन्-न्ती ; —
तर्पिष्यन्-न्ती-ती, तर्पयिष्यन्-न्ती-ती, तितर्पिषिष्यन्-न्ती-ती ; —
[4]व्यतितृपमाणः, तर्पयमाणः, — तरीतृप्यमाणः ;
व्यतितृपिष्यमाणः, तर्पयिष्यमाणः, — तरीतृपिष्यमाणः ;
सुतृप्-सुतृब्-सुतृपौ-सुतृपः ; — —
तृपितम्-[A]तः, तर्पितः, तितर्पिषितः, तरीतृपितः-तवान् ;

---

1. 'तितुत्र—' (7-2-9) इति इण्णिषेधः ।
2. धातोरस्य सेट्त्वात्, क्त्वायाम्, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः ।
3. '**तुदादिभ्यः**—' (3-1-77) इति शः विकरणप्रत्ययः । तस्य ङिद्वद्भावादङ्गस्य गुणो न ।
4. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।

A. 'शत्रूल्लोभकरेफरीढि**तृपिता** तृम्फाय तोफार्थिनो
राज्ञो नित्यमतुम्पकात् वितुफती बन्धूंश्च सन्तुम्फती ।' धा. का. 2.74.

तृपः, सन्तर्पी, तृपः, तितर्पिषुः, तरीतृपः ;
तर्पितव्यम् , तर्पयितव्यम् , तितर्पिषितव्यम् , तरीतृपितव्यम् ;
तर्पणीयम् , तर्पणीयम् , तितर्पिषणीयम् , तरीतृपणीयम् ;
[1]तृप्यम् , तर्प्यम् , तितर्पिष्यम् , तरीतृप्यम् ;
ईषत्तर्पः-दुस्तर्पः-सुतर्पः ; — —
तृप्यमाणः, तर्प्यमाणः, तितर्पिष्यमाणः, तरीतृप्यमाणः ;
तर्पः, तर्पः, तितर्पिषः, तरीतृपः ;
तर्पितुम् , तर्पयितुम् , तितर्पिषितुम् , तरीतृपितुम् ;
तृप्तिः, तर्पणा, तितर्पिषा, तरीतृपा ;
तर्पणम् , तर्पणम् , तितर्पिषणम् , तरीतृपणम् ;
तर्पित्वा, तर्पयित्वा, तितर्पिषित्वा, तरीतृपित्वा ;
प्रतृप्य, प्रतर्प्य, प्रतितर्पिष्य, प्रतरीतृप्य ;
तृपम् २, तर्पित्वा २, } तर्पम् २, तर्पयित्वा २, } तितर्पिषम् २, तितर्पिषित्वा २, } तरीतृपम् २ ; तरीतृपित्वा २. }

(773) " **तृप तृप्तौ** " (X-चुरादिः-1820. सक. सेट्. उभ.) **आधृषीयः।**

'तृप्तावन्यतरस्यां णौ स्यातां तर्पति **तर्पयेत्** ॥' (श्लो. 133) इति **देवः** । 'प्रीणने च' इति **कविकल्पद्रुमे** । 'सन्दीपने' इति **क्षीरस्वामी** । आधृषीयत्वेनास्य धातोर्णिज्विकल्पः । तर्पकः-र्पिका, तितर्पयिषकः-षिका, तर्पकः-र्पिका, तितर्पिषकः-षिका, तरीतृपकः-पिका ; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिकचर्पयतिवत्** (554) ज्ञेयानि । णिजभावपक्षे शुद्धाद्धातोः 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदं शता भवतीति विशेषः । [A]तर्पन्-न्ती इति रूपम् ।

(774) " **तृफ तृप्तौ** " (VI-तुदादिः-1307. सक. सेट्. पर.)

'**तृप**' इत्यस्य धातोः पाठान्तरमिदम् ।

तर्फकः-र्फिका, तर्फकः-र्फिका, तितर्फिषकः-षिका, तरीतृफकः-फिका ; इत्यादीनि सर्वाण्यपि **तौदादिकतृपतिवत्** (772) ज्ञेयानि ।

1. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति भावकर्मणोः क्यप् ।
A. 'प्रजहार हरिं रणेऽन्तर्पन् सुहृदं छर्दितमन्युरप्रदर्भन् ॥' धा. का. 3-49.



(775) " **ञि तृष पिपासायाम्** "

(IV-दिवादिः-1228. अक. सेट्. पर.)

तर्षकः-र्षिका, तर्षकः-र्षिका, तितर्षिषकः-षिका, तरीतृषकः-षिका ;
तर्षिता-त्री, तर्षयिता-त्री, तितर्षिषिता-त्री, तरीतृषिता-त्री ;
[1]तृष्यन्-न्ती, तर्षयन्-न्ती, तितर्षिषन्-न्ती ; —
तर्षिष्यन्-न्ती-ती, तर्षयिष्यन्-न्ती-ती, तितर्षिषिष्यन्-न्ती-ती ; —
— तर्षयमाणः, — तरीतृष्यमाणः ;
— तर्षयिष्यमाणः, — तरीतृषिष्यमाणः ;
[2]तृट्-तृड्-तृषौ-तृषः ; — — —
[3]तृषितम्-[4]तृषितः-तृषितवान् , तर्षितः, तितर्षिषितः, तरीतृषितः-तवान् ;
तृषः, [5]तृष्णक्[A], प्रतर्षी, तर्षः, तितर्षिषुः, [6]तरीतर्षः ;
तर्षितव्यम् , तर्षयितव्यम् , तितर्षिषितव्यम् , तरीतृषितव्यम् ;
तर्षणीयम् , तर्षणीयम् , तितर्षिषणीयम् , तरीतृषणीयम् ;
[7]तृष्यम् , तर्ष्यम्, तितर्षिष्यम् , तरीतृष्यम् ;
ईषत्तर्षः-दुस्तर्षः-सुतर्षः ; — — —

1. '**दिवादिभ्यः**—' (3-1-69) इति श्यन् विकरणप्रत्ययः । 'शप्श्यनोर्नित्यम्' (7-1-81) इति नित्यं नुमागमः ।
2. कर्तरि क्विपि, षकारस्य जश्त्वचर्त्वयो रूपमेवम् ।
3. '**ञि तृषा** पिपासायाम्' इति **सिद्धान्तकौमुद्यां** मुद्रितः पाठो दृश्यते । तदानीं धातोरादित्त्वेन, 'आदितश्च' (7-2-16) इति निष्ठायां नित्यमिण्णिषेधे, ष्टुत्वे च **तृष्टम्-तृष्टवान्** इति रूपं स्यात् । एवम् , भावे आदिकर्मणि च 'विभाषा भावादिकर्मणोः' (7-2-17) इति सूत्रेण निष्ठाया इड्विकल्पोऽपि स्यात् । परं तु **क्षीरतरङ्गिणी-माधवधातुवृत्ति-धातुकाव्यव्याख्यान**ादिपरामर्शनेन **तृष** इति पाठ एव साधुरिति प्रतिभाति । अस्य धातोरादित्त्वफलं चिन्त्यमेव ।
4. 'ञीतः क्तः' (3-2-187) इति वर्तमाने क्तप्रत्ययः ।
5. 'स्वपितृषोर्नजिङ्' (3-2-172) इति तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययः । 'चोः कुः' (8-2-30) इति कुत्वम् । 'रषाभ्यां नो णः समानपदे' (8-4-1) इति णत्वम् । प्रत्ययस्य ङित्वाद् गुणनिषेधः ।
6. 'यङोऽचि च' (2-4-74) इति यङो लुकि गुणः ।
7. '**ऋदुपधात्**—' (3-1-110) इति भावकर्मणोः क्यप् ।
A. 'जिह्मं नुनुद्रेऽवतं तया दिशा सिञ्चन्नुत्सं गोतमाय तृष्णजे ।' ऋग्वेदे 1.85-11.

तृष्यमाणः, तर्ष्यमाणः, तितर्षिष्यमाणः, तरीतृष्यमाणः ;
तर्षः, तर्षः, तितर्षिषः, तरीतृषः ;
तर्षितुम्, तर्षयितुम्, तितर्षिषितुम्, तरीतृषितुम् ;
[1]तृष्टिः, [2]तृट्, तर्षणा, तितर्षिषा, तरीतृषा ;
तर्षणम्, तर्षणम्, तितर्षिषणम्, तरीतृषणम् ;
[3]तर्षित्वा-तृषित्वा, तर्षयित्वा, तितर्षिषित्वा, तरीतृषित्वा ;
प्रतृष्य, प्रतर्ष्य, प्रतितर्षिष्य, प्रतरीतृष्य;
[4]द्व्यहतर्षं द्व्यहं तर्षं द्व्यहेन तर्षं वा गाः पाययति ।
तर्षम् २, तर्षित्वा २-तृषित्वा २, } तर्षम् २, तर्षयित्वा २, } तितर्षिषम् २, तितर्षिषित्वा २, } तरीतृषम् २ ; तरीतृषित्वा २ ; }
[5]तृष्णा.

(776) " तृह हिंसायाम् " (VII-रुधादिः-1455. अक. सेट्. पर.) [अ]

' श्ने तृणेढीति हिंसायां तृहतीत्यूदितस्तृहेः ॥' (श्लो-195) इति देवः ।

तर्हकः-र्हिका, तर्हकः-र्हिका, तितर्हिषकः-षिका, तरीतृहकः-हिका ;
तर्हिता-त्री, तर्हयिता-त्री, तितर्हिषिता-त्री, तरीतृहिता-त्री ;
[6]तृंहन्-न्ती, [7]व्यतितृंहन्-न्ती, तर्हयन्-न्ती, तितर्हिषन्-न्ती ;

---

1. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वे च रूपम्
2. स्त्रियाम्, 'सम्पदादिभ्यः—' (वा. 3-3-94) इति भावे क्विपि रूपम् ।
3. 'तृषिमृषिकृशेः काश्यपस्य' (1-2-25) इति क्त्वायां कित्त्वविकल्पः। कित्त्व-पक्षे गुणनिषेधः ।
4. 'अस्यतितृषोः क्रियान्तरे कालेषु' (3-4-57) इति णमुल् । 'तृतीयाप्र-भृतीनि—' (2-2-21) इति समासविकल्पः । अद्य गाः पाययित्वा, द्व्यहमति-क्रम्य पाययति, इत्यर्थः ।
5. 'तृषिशुषिरसिभ्यः कित्' [द. उ. 5.44] इति नप्रत्ययो भवति किच्च । तृष्णा=पिपासा ।
6. 'रुधादिभ्यः श्नम्' (3-1-78) इति श्नम् विकरणप्रत्ययः । तस्य मित्त्वात् अन्त्यादचः परो भवति । 'श्नसोरल्लोपः' (6-4-111) इति अल्लोपः । 'नश्चा-पदान्तस्य झलि' (8-3-24) इति नकारस्यानुस्वारः ।
7. 'न गतिहिंसार्थेभ्यः—' (1-3-15) इति कर्मव्यतीहारे शानचो निषेधः ।

[अ] क्षीरस्वामी 'तृहि' इति इदितं धातुं पठति । तदानीं 'इदितो नुम् धातोः' (7-1-58) इति नुमि, तृंहकः-हिका, तृंहकः-हिका, तितृंहिषकः-षिका, तरीतृंहकः-हिका, इत्यादीनि नुम्घटितानि रूपाणि सर्वत्र ज्ञेयानीति विशेषः ।



तर्हिष्यन्-न्ती-ती, तर्हयिष्यन्-न्ती-ती, तितर्हिषिष्यन्-न्ती-ती ; —
— तर्ह्यमाणः, तर्हयिष्यमाणः — तरीतृह्यमाणः, तरीतृहिष्यमाणः ;
[1]तृट्-तृड्-तृहौ-तृहः ; — — —
तृहितम्-तः-तवान्, तर्हितः, तितर्हिषितः, तरीतृहितः-तवान् ;
तृहः, तर्हः, तितर्हिषुः, तरीतर्हः ;
तर्हितव्यम्, तर्हयितव्यम्, तितर्हिषितव्यम्, तरीतृहितव्यम् ;
तर्हणीयम्, तर्हणीयम्, तितर्हिषणीयम्, तरीतृहणीयम् ;
[2]तृह्यम्, तर्ह्यम्, तितर्हिष्यम्, तरीतृह्यम् ;
ईषत्तर्हः-दुस्तर्हः-सुतर्हः ; — — —
तृह्यमाणः, तर्ह्यमाणः, तितर्हिष्यमाणः, तरीतृह्यमाणः ;
तर्हः, तर्हः, तितर्हिषः, तरीतृहः ;
तर्हितुम्, तर्हयितुम्, तितर्हिषितुम्, तरीतृहितुम् ;
[3]तृढिः, तर्हणा, तितर्हिषा, तरीतृहा ;
तर्हणम्, तर्हणम्, तितर्हिषणम्, तरीतृहणम् ;
[4]तर्हित्वा, तर्हयित्वा, तितर्हिषित्वा, तरीतृहित्वा ;
प्रतृह्य, प्रतर्ह्य, प्रतितर्हिष्य, प्रतरीतृह्य ;
तर्हम् २, तर्हित्वा २, } तर्हम् २, तर्हयित्वा २, } तितर्हिषम् २, तितर्हिषित्वा २, } तरीतृहम् २ ; तरीतृहित्वा २. }

(777) " तृहू हिंसायाम् " (VI-तुदादिः-1348. सक. वेट्. पर.)

' श्ने तृणेढीति हिंसायाम्, तृहतीत्यूदितस्तृहेः ॥' (श्लो. 195) देवः ।

तर्हकः-र्हिका, तर्हकः-र्हिका, [5]तितर्हिषकः-षिका, तितृक्षकः-क्षिका, तरीतृहकः-हिका ;

---

1. क्विपि, 'हो ढः' (8-2-31) इति ढत्वे, जश्त्वचर्त्वयो रूपम् ।
2. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति भावकर्मणोः क्यप् ।
3. 'तितुत्र—' (7-2-9) इतीण्णिषेधे, ढत्वधत्वष्टुत्वढलोपाः ।
4. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः ।
5. 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति इड्विकल्पः । इडभावपक्षे 'इको झल्' (1-2-9) इति सनः कित्वम् । 'हो ढः' (8-2-31) इति ढत्वे, 'षढोः कः सि' (8-2-41) इति ढकारस्य ककारे, 'इण्कोः' (8-3-57) इति षत्वे च रूपम् । एवमिडभावपक्षे सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।

तर्हिता-त्री, [1]तर्ढा-र्ढ्री, तर्हयिता-त्री, तितर्हिषिता-तितृक्षिता-त्री, तरीतृहिता-त्री ;

[2]व्यतितृहन्-न्ती-ती, तर्हयन्-न्ती, तितर्हिषन्-तितृक्षन्-न्ती ; —
तर्हिष्यन्-न्ती-ती, तर्क्ष्यन्-न्ती-ती, तितर्हिषिष्यन्-तितृक्षिष्यन्-न्ती-ती ; —
— तर्हयमाणः, तर्हयिष्यमाणः, — तरीतृह्यमाणः, तरीतृहिष्यमाणः ;
सुतृट्-सुतृड्-सुतृहौ-सुतृहः ; — — —
[3]तृढम्-तृढः-तृढवान्, तर्हितः, तितर्हिषितः-तितृक्षितः, तरीतृहितः-तवान् ;
तृहः, प्रतर्हौ, तर्हः, तितर्हिषुः-तितृक्षुः, तरीतर्हः ;
तर्हितव्यम्-तर्ढव्यम्, तर्हयितव्यम्, तितर्हिषितव्यम्-तितृक्षितव्यम् ; तरीतृहितव्यम् ;
तर्हणीयम्, तर्हणीयम्, तितर्हिषणीयम्-तितृक्षणीयम्, तरीतृहणीयम्,
तृह्यम्, तर्ह्यम्, तितर्हिष्यम्-तितृक्ष्यम्, तरीतृह्यम्,
ईषत्तर्हः-दुस्तर्हः-सुतर्हः ; — — —
तृह्यमाणः, तर्ह्यमाणः, तितर्हिष्यमाणः-तितृक्ष्यमाणः, तरीतृह्यमाणः ;
तर्हः, तर्हः, तितर्हिषः-तितृक्षः, तरीतृहः ;
तर्हितुम्-तर्ढुम्, तर्हयितुम्, तितर्हिषितुम्-तितृक्षितुम्, तरीतृहितुम् ;
तृढिः, तर्हणा, तितर्हिषा-तितृक्षा, तरीतृहा ;
तर्हणम्, तर्हणम्, तितर्हिषणम्-तितृक्षणम्, तरीतृहणम् ;
[4]तर्हित्वा-तृढ्वा, तर्हयित्वा, तितर्हिषित्वा-तितृक्षित्वा, तरीतृहित्वा ;
प्रतृह्य, प्रतर्ह्य, प्रतितर्हिष्य-प्रतितृक्ष्य, प्रतरीतृह्य ;
तर्हम् २, तर्हित्वा २-तृढ्वा, } तर्हम् २, तर्हयित्वा, } तितर्हिषम् २-तितृक्षम् २, तितर्हिषित्वा २-तितृक्षित्वा २, } तरीतृहम् २ ; तरीतृहित्वा २. }

---

1. ऊदित्त्वेनेड्विकल्पः। इडभावपक्षे ढत्वधत्वष्टुत्वढलोपाः। एवं तव्यदादिष्वपि।
2. 'न गतिहिंसार्थेभ्यः' (1-3-15) इति कर्मव्यतिहारे शानचो निषेधः। 'तुदादिभ्यः—' (3-1-77) इति शः विकरणप्रत्ययः। शस्य सार्वधातुकत्वेन ङिद्वद्भावादङ्गस्य गुणो न भवति।
3. ऊदित्त्वेनेड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधे, ढत्वादिकं भवति।
4. इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणो भवति।



(778) "तॄ प्लवनतरणयोः" (I-भ्वादिः-969. सक. सेट्. पर.)

प्लवनम्=मज्जनम्, तरणम्=लङ्घनम्। 'अभिभवे च' इति **कविकल्पद्रुमे**।

[1]तारकः-रिका, [2]तारका, तारकः-रिका, [3]तितरिषकः-तितरीषकः-तितीर्षकः-र्षिका, [4]तेतिरकः-रिका ;
तरिता-तरीता-त्री, तारयिता-त्री, तितरिषिता-तितरीषिता-तितीर्षिता-त्री, तेतिरिता-त्री ;
[5]तरन्-[A]समुत्तरन्-न्ती, तारयन्-न्ती, तितरिषन्-[B]तितरीषन्-तितीर्षन्-न्ती ;
तरिष्यन्-तरीष्यन्-न्ती-ती, तारयिष्यन्-न्ती-ती, तितरिषिष्यन्-तितरीषिष्यन्-तितीर्षिष्यन्-न्ती-ती ; —
[6]व्यतितरमाणः, तारयमाणः, तारयिष्यमाणः, — तेतीर्यमाणः, तेतिरिष्यमाणः ;
[7]तीः-तिरौ-तिरः ; — — —

---

1. ण्वुलि, 'इस्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा. 7-1-102) इति वृद्धिः। 'उरण् रपरः' (1-1-51) इति रपरः सन् वृद्धिर्भवति। एवं घञादिष्वपि बोध्यम्।
2. '**तारका** ज्योतिषि' (वा. 7-3-45) इति वचनात् ज्योतिषि वाच्ये, 'प्रत्ययस्थात्—' (7-3-44) इति इत्वं न भवति। अन्यत्र इत्वे **तारिका**=दासी।
3. धातोः ऋदन्तत्वेन 'इट् सनि वा' (7-2-41) इतीड्विकल्पः। इट्पक्षे, '**वृतो** वा' (7-2-38) इतीटो दीर्घविकल्पः। इडभावपक्षे, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, '**ॠत** इद्धातोः' (7-1-100) इति इत्वे, 'हलि च' (8-2-77) इति दीर्घे च **तितीर्षकः** इति रूपम्। एवं सन्नन्ते सर्वत्र रूपत्रयं बोध्यम्।
4. '**ॠत** इद् धातोः' (7-1-100) इति इत्वम्। रपरत्वम्। द्वित्वम्। अभ्यासे, 'गुणो यङ्लुकोः' (7-4-82) इति गुणः। 'यस्य हलः' (6-4-49) इति यकारलोपः। एवं यङन्ते सर्वत्र ज्ञेयम्। **धातुरूपप्रकाशिकायां** तु 'न धातुलोप—' (1-1-4) इति सूत्रस्थोद्योतकारपक्षमवलम्ब्य **तेतीरकः-रिका** इत्यादीनि यङन्ते दीर्घघटितानि रूपाणि प्रदर्शितानि।
5. शतरि, 'कर्तरि शप्' (3-1-68) इति शपि, शतुः सार्वधातुकत्वेन ङिद्वद्भावात् धातोरित्वे प्राप्ते, 'इस्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा. 7-1-102) इति गुणे रूपम्।
6. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानचि, णत्वम्।
7. क्विपि, इत्वे रपरत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे विसर्गः।

A. '**समुत्तरन्ता**वव्यथ्यौ नदान् भियोद्वयसन्निभान्। सिध्यत**ता**रामिव ख्यातां शबरीमापतुर्वने ॥' भ. का. 6.60.

B. 'अध्यास्त यं नक्रकुलं स्थवीयो द्विपोऽप्यमङ्क्त्वा न **यमुत्ततार**। नभःस्पृगूर्मि**स्तितरीषतो**ऽस्य हरेर्दधस्यैकपदीमवात् सः ॥' वा. वि. 3. 38.

[1]उत्तीर्णम्-तीर्णः-तीर्णवान्, तारितः, तितरिषितः-तितरीषितः-तितीर्षितः-तवान्, तेतिरितः-तवान्;

तरः, [2]तेरिवान्, [3]सुतर्मा, [4]रथन्तरं (साम), तारः-तितरिषुः-तितरीषुः-[A]तितीर्षुः-तेतिरः;

तरितव्यम्-तरीतव्यम्, तारयितव्यम्, तितरिषितव्यम्-तितरीषितव्यम्-तितीर्षितव्यम्, तेतिरितव्यम्;

तरणीयम्, तारणीयम्, तितरिषणीयम्-तितरीषणीयम्-तितीर्षणीयम्, तेतिरणीयम्;

[5]तार्यम्, तार्यम्, तितरिष्यम्-तितरीष्यम्-तितीर्ष्यम्, तेतीर्यम्;

ईषत्तरः-दुस्तरः-सुतरः; — —

तीर्यमाणः, तार्यमाणः, तितरिष्यमाणः-तितरीष्यमाणः-तितीर्ष्यमाणः, तेतीर्यमाणः;

---

1. सनि विकल्पितेट्कत्वात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधे, इत्वे रपरत्वे, दीर्घे, 'रदाभ्यां निष्ठातो नः—' (8-2-42) इति निष्ठानत्वे, 'रषाभ्यां नो णः—' (8-4-1) इति णत्वे च रूपम्।
2. 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4-3-24) इत्यत्र **भाष्ये 'पपुष आगतं पपिवद्रूप्यम्।'** इति प्रयोगात् क्वसुर्लोकेऽपि क्वचिद्भवति। अस्य क्वसौ, 'तॄफलभजत्रपश्च' (6-4-122) इत्येत्वाभ्यासलोपयोः, 'वस्वेकाजाद्घसाम्' (7-2-67) इतीडागमे च रूपम्। 'छन्दस्युभयथा' (3-4-117) इत्यनेनास्य सार्वधातुकसंज्ञायां तु 'ऋच्छत्यॄताम्' (7-4-11) इति गुणम्, एत्वाभ्यासलोपम्, इडागमं च बाधित्वा, **तितीर्वान्** इत्येव रूपमिति स्फुटं **बृहच्छब्देन्दुशेखरे।**
3. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिन्प्रत्ययः। 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधः, गुणः।
4. 'संज्ञायां भृतॄ—' (3-2 46) इत्यादिना संज्ञायां खच्प्रत्ययः। **रथन्तरं**=साम। **'इह रथेन तरती**ति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः।' इति **सि. कौमुदी।**
   'अरुर्द्विषदजन्तस्य—' (6-3-67) इति पूर्वपदस्य मुमागमः।
   'विश्वम्भरा, साम **रथन्तरा**ख्यं पतिंवरा चापि धनञ्जयश्च।
   शत्रुंसहः कोऽपि वसुन्धरा च शत्रुंतपोऽरिन्दम एवमूह्यम्॥' इति **प्र. सर्वस्वे।**
5. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्।

A. '**तितीर्षुर्दुस्तरं** मोहादुडुपेनास्मि सागरम्॥' रघुवंशे 1.2.



[1]तरः, [2]अवतारः, तारः, तितरिषः-तितरीषः-तितीर्षः, तेतिरः;

तरितुम्-[A]अवतरीतुम्, तारयितुम्, तितरिषितुम्-तितरीषितुम्-तितीर्षितुम्, तेतिरितुम्;

[3]तीर्णिः, [4]तारा, तारणा, तितरिषा-तितरीषा-तितीर्षा, तेतिरा;

तरणम्, तारणम्, तितरिषणम्-तितरीषणम्-तितीर्षणम्, तेतिरणम्;

[5]तीर्त्वा, तारयित्वा, तितरिषित्वा-तितरीषित्वा-तितीर्षित्वा, तेतिरित्वा;

वितीर्य, वितार्य, वितितरिष्य-वितितरीष्य-वितितीर्ष्य, वितेतीर्य;

तारम् २, तीर्त्वा २, } तारम् २, तारयित्वा २, } तितरिषम् २-तितरीषम् २-तितीर्षम् २, तितरिषित्वा २-तितरीषित्वा २-तितीर्षित्वा २, } तेतिरम् २; तेतिरित्वा २; }

[6]तरणिः, [7]तरुः, [8]तरीः, [9]तरुणः.

## (779) "तेज पालने" (I-भ्वादिः-231. सक. सेट्. पर.)

तेजकः-जिका, तेजकः-जिका, तितेजिषकः-षिका, तेतेजकः-जिका;

तेजिता-त्री, तेजयिता-त्री, तितेजिषिता-त्री, तेतेजिता-त्री;

इत्यादीनि सर्वाणि रूपाणि भौवादिककेलतिवत् (262) बोध्यानि। तेजितम्[B]।

---

1. '**ऋदोरप्**' (3-3-57) इति भावेऽप् प्रत्ययः। घञपवादः।
2. '**अवे** तॄस्त्रोर्घञ्, (3-3-120) इति करणाधिकरणयोर्घञ्।
3. क्तिनि, इत्वरपरत्वयोः, 'ऋल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नकारः। णत्वम्।
4. भिदादिषु (3-3-104) **तारा** इति पाठात् ज्योतिषि वाच्ये वृद्धिर्भवति। न तु इत्वमिति ज्ञेयम्।
5. 'श्र्युकः किति' (7-2-11) इतीण्णिषेधे, इत्वरपरत्वदीर्घेषु रूपम्।
6. 'अशावतॄभ्योऽनिः' [द. उ. 1.1.] इत्यनिप्रत्यये गुणः। **तरणिः**=सूर्यः।
7. 'भृमृशीतॄ—' [द. उ. 1-92] इत्युप्रत्ययः। छायापुष्पफलार्थिनोऽमुं तरन्तीति **तरुः**=वृक्षः।
8. 'अवितॄ—' [द. उ. 1-82] इति ईप्रत्ययः। **तरीः**=प्लवो वायुश्च।
9. 'कॄवृतॄदारिभ्य उनन्' [द. उ. 5-52] इत्युनन्प्रत्ययः। **तरुणः**=वायुर्युवा च।

A. 'अवलोक एव नृपतेः स्म दूरतो रभसाद् रथा**दवतरीतु**मिच्छतः।
**अवतीर्णवान्** प्रथममात्मना हरिर्विनयं विशेषयति सम्भ्रमेण सः॥'
शि. व. 13.7.

B. 'अकर्जितोऽसौ हरिखर्जनोत्कधीरजत्पशुव्रातमजेन **तेजितम्।**' धा. का. 1. 31.

(780) " तेपृ क्षरणार्थः " (I-भ्वादिः-363. अक. सेट्. आत्म.)

'कम्पने च' इति क्षीरस्वाम्यादयः ।

तेपकः-पिका, तेपकः-पिका, तितेपिषकः-षिका, तेतेपकः-पिका ; इत्यादीनि सर्वाण्यपि रूपाणि केपृधातुवत् (261) ज्ञेयानि । तेपितम्[A] । [1]तेपनः । तृचि गणकार्यस्यानित्यत्वात् तेप्ता इति क्षीरस्वामी ।

(781) " तेवृ देवने " (I-भ्वादिः-499. अक. सेट्. आत्म.)

तेवकः-विका, तेवकः-विका, तितेविषकः-षिका, तेतेवकः-विका ; इत्यादीनि सर्वाणि रूपाणि केपतिवत् (261) बोध्यानि । क्विपि-[B]तयूः[2]-तय्वौ-तय्वः इति विशेषः ।

(782) " त्यज हानौ " (I-भ्वादिः-986. सक. अनि. पर.)

हानिः=उत्सर्गः इति बालमनोरमा । त्यागः इति क्षीरस्वामी ।

त्याजकः-जिका, त्याजकः-जिका, [3]तित्यक्षकः-क्षिका, [4]तात्यजकः-जिका ;
[5]त्यक्ता-त्री, त्याजिता-त्री, तित्यक्षिता-त्री, तात्यजिता-त्री ;
त्यजन्-न्ती, त्याजयन्-न्ती, तित्यक्षन्-न्ती ; —
त्यक्ष्यन्-न्ती-ती, त्याजयिष्यन्-न्ती-ती, तित्यक्षिष्यन्-न्ती-ती ; —
[6]व्यतित्यजमानः, त्याजयमानः, तित्यक्ष्यमाणः, तात्यज्यमानः ;
— त्याजयिष्यमाणः, तित्यक्षिष्यमाणः, तात्यजिष्यमाणः ;
[7]त्यक्-त्यग्-त्यजौ-त्यजः ; — —

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।
2. 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति ऊठि गुणे अयादेशे च रूपम् ।
3. सनि, झलि परतः 'चो कुः' (8-2-30) इति कुत्वे, षत्वे च रूपम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
4. यङन्तेऽभ्यासस्य, 'दीर्घोऽकितः' (7-4-83) इति दीर्घः । एवं सर्वत्र ज्ञेयम् ।
5. जकारस्य कुत्वेन चकारः । एवं तव्यदादिष्वपि ज्ञेयम् ।
6. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
7. क्विपि, कुत्वे, जश्त्वे च रूपम् ।

A. 'अतिप्त हर्षाश्रु धृतिश्च तेपिता गृहानिमान् प्रस्तिपितार्ति पश्यतः ।' धा. का. 1. 47.

B. 'कलोरुकल्लोलकलिन्दजाजले बालैस्तयूभिः सह देवनोत्सुकम् ॥' धा. का. 1.64.



त्यक्तम्-क्तः-क्तवान्, [1]त्याजितः, तित्यक्षितः, तात्यजितः-तवान् ;
त्यजः, [2]त्यागी, [3]संत्याजी, त्याजः, तित्यक्षुः, तात्यजः ;
त्यक्तव्यम्, त्याजयितव्यम्, तित्यक्षितव्यम्, तात्यजितव्यम् ;
त्याजनीयम्, त्याजनीयम्, तित्यक्षणीयम्, तात्यजनीयम् ;
[4]त्याज्यम्, त्याज्यम्, तित्यक्ष्यम्, तात्यज्यम् ;
ईषत्त्यजः-दुस्त्यजः-सुत्यजः ; — —
त्यज्यमानः, त्याज्यमानः, तित्यक्ष्यमाणः, तात्यज्यमानः ;
त्यागः, त्याजः, तित्यक्षः, तात्यजः ;
त्यक्तुम्, त्याजयितुम्, तित्यक्षितुम्, तात्यजितुम् ;
त्यक्तिः, त्याजना, तित्यक्षा, तात्यजा ;
त्यजनम्, त्याजनम्, तित्यक्षणम्, तात्यजनम् ;
त्यक्त्वा, त्याजयित्वा, तित्यक्षित्वा, तात्यजित्वा ;
परित्यज्य, प्रत्याजयिष्य, प्रतित्यक्ष्य, प्रतात्यज्य ;
त्याजम् २ } त्याजम् २ } तित्यक्षम् २ } तात्यजम् २ ; }
त्यक्त्वा २ } त्याजयित्वा २ } तित्यक्षित्वा २ } तात्यजित्वा २. }

(783) " त्रकि गत्यर्थः " (I-भ्वादिः-97. सक. सेट्. आत्म.)

त्रखि इति चन्द्र-सम्मताकारादीनां मतेन पाठः ।

त्रङ्ककः-ङ्किका, त्रङ्ककः-ङ्किका, तित्रङ्किषकः-षिका, तात्रङ्ककः-ङ्किका ; इत्यादीनि सर्वाणि रूपाणि भौवादिककङ्कतिवत् (140) बोध्यानि । कर्तरि क्तप्रत्यये [A]त्रङ्कितः इति भवति ।

1. 'तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः ।' (मा. धा. वृत्तिः 'नाथ' धातौ) इति वचनात्, 'त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।' (रघुवंशे 4-33) इत्यादिप्रयोगाच्च ण्यन्तस्य द्विकर्मकत्वं ज्ञेयम् ।
2. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यज—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययः । उपधावृद्धिः । 'चजोः कु घिण्ण्यतोः' (7-3-52) इति जकारस्य कुत्वेन गकारः ।
3. ताच्छील्ये णिनिः । अस्य घित्त्वाभावात् कुत्वं न ।
4. 'विप्रतिषेधे त्यजेरुपसंख्यानं कर्तव्यम्' (भाष्यम् 7-3-69) इति वचनात् 'चजोः—' (7-3-52) इति प्राप्तं कुत्वं न भवति ।

A. 'प्रश्वङ्कनोत्त्रङ्कितत्रस्थस्वनाद्ढौकि भीतैरपि नो शिखावलैः ।' धा. का. 1. 14.

(784) " त्रक्ष गतौ " (I-भ्वादिः-660. अक. सेट्. पर.)

त्रक्षकः-क्षिका, त्रक्षकः-क्षिका, तित्रक्षिषकः-षिका, तात्रक्षकः-क्षिका; त्रक्षिता-त्री, त्रक्षयिता-त्री, तित्रक्षिषिता-त्री, तात्रक्षिता-त्री; इत्यादीनि सर्वाणि रूपाणि **तक्षतिवत्** (691) बोध्यानि । शतरि त्रक्षन्-न्ती इति विशेषः । '**त्रक्ष** ष्ट्रक्ष णक्ष गतौ' इति पठित्वा, 'त्रयोऽप्यकारमध्याः' इति **बालमनोरमायामुक्तत्वादत्रापि** अकारमध्योऽयं पठितः । सर्वेऽपि प्राचीना **माधवधातुवृत्तिकारादयः तृक्ष** इत्येव पठन्ति ।

(785) " त्रख गतौ " (I-भ्वादिः-155. सक. सेट्. पर.)

'त्रखि' इति **चन्द्रः** ।

त्राखकः-खिका, त्राखकः-खिका, तित्रखिषकः-षिका, तात्रखकः-खिका; इत्यादीनि सर्वाण्यपि रूपाणि **कखतिवत्** (141) ज्ञेयानि । क्विपि तु — सुत्रक्-सुत्रग्-सुत्रखौ-सुत्रखः इति विशेषः ।

(786) " त्रदि चेष्टायाम् " (I-भ्वादिः-69. अक. सेट्. पर.)

त्रन्दकः-न्दिका, त्रन्दकः-न्दिका, तित्रन्दिषकः-षिका, तात्रन्दकः-न्दिका; इत्यादीनि सर्वाण्यपि रूपाणि **भौवादिककन्दतिवत्** (163) ज्ञेयानि । [A]त्रन्दनम् ।

(787) " त्रपूष् लज्जायाम् " (I-भ्वादिः. 374. अक. वेट्. आत्म.)

**घटादिः ।**

त्रापकः-पिका, [1]त्रपकः-पिका, [2]त्रापकः-पिका, [3]तित्रपिषकः-षिका,

1. **भोज**मतेनास्य धातोः घटादिषु पाठः । तदानीं 'घटादयो मितः' (ग. सू. भ्वादौ) इति मित्त्वात्, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
2. **भोजाद्** अन्येषां सर्वेषां मतेनास्य धातोः घटादिपाठो न । तदानीं मित्त्वाभावेनोपधाह्रस्वाभावे रूपमेवम् । एवं तृजादिष्वपि **त्रापयिता-त्री** इत्यादीनि रूपाण्यूह्यानि ।
3. ऊदित्त्वेन, 'स्वरतिसूतिसूयतिधूञ्**ऊदितो** वा' (7-2-44) इति वलाद्यार्धधातुकेषु इड्विकल्पः । इट्पक्षे रूपमेवम् । इडभावपक्षे **तित्रप्सकः** इत्यादीनि रूपाणि, इति ज्ञेयम् । तव्यदादिप्रत्ययेष्वप्येवमिड्विकल्पो ज्ञेयः ।

A. 'पराक्रम**त्रन्दन**कन्दितासुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥' धा. का. 1.10.



तित्रप्सकः-प्सिका, [1]तात्रपकः-पिका;

त्रपिता-त्रप्ता-त्री, त्रपयिता-त्री, तित्रपिषिता-तित्रप्सिता-त्री, तात्रपिता-त्री;

— त्रपयन्-न्ती, त्रपयिष्यन्-न्ती-ती; — —

त्रपमाणः, त्रपयमाणः, तित्रपिषमाणः-तित्रप्समानः, तात्रप्यमानः;

त्रपिष्यमाणः-त्रप्स्यमानः, त्रपयिष्यमाणः, तित्रपिषिष्यमाणः-तित्रप्सिष्यमाणः, तात्रपिष्यमाणः;

त्रप्-त्रपौ-त्रपः; — — —

[2]त्रप्तम्-त्रप्तः-त्रप्तवान्, त्रपितः, तित्रपिषितः-तित्रप्सितः, तात्रपितः-तवान्;

त्रपः, [3]अपत्रपिष्णुः[A], [4]त्रेपिवान्, त्रपः, तित्रपिषुः-तित्रप्सुः; तात्रपः;

त्रपितव्यम्-त्रप्तव्यम्, त्रपयितव्यम्, तित्रपिषितव्यम्-तित्रप्सितव्यम्, तात्रपितव्यम्;

त्रपणीयम्, त्रपणीयम्, तित्रपिषणीयम्-तित्रप्सनीयम्, तात्रपणीयम्;

[5]त्राप्यम्, त्रप्यम्, तित्रपिष्यम्-तित्रप्स्यम्, तात्रप्यम्;

ईषत्त्रपः-दुस्त्रपः-सुत्रपः; — —

त्रप्यमाणः, त्रप्यमाणः, तित्रपिष्यमाणः-तित्रप्स्यमानः, तात्रप्यमाणः;

त्रापः, त्रपः, तित्रपिषः-तित्रप्सः, तात्रपः;

त्रपितुम्-त्रप्तुम्, त्रपयितुम्, तित्रपिषितुम्-तित्रप्सितुम्, तात्रपितुम्;

[6]त्रपा, त्रपणा, तित्रपिषा-तित्रप्सा, तात्रपा;

त्रपणम्, त्रपणम्, तित्रपिषणम्-तित्रप्सनम्, तात्रपणम्;

त्रपित्वा-त्रप्त्वा, त्रपयित्वा, तित्रपिषित्वा-तित्रप्सित्वा, तात्रपित्वा;

1. यङन्ते, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः । एवं सर्वत्र ज्ञेयम् ।
2. ऊदित्त्वेनेड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा (7-2-15) इति इण्णिषेधः ।
3. 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्य**पत्रप**वृतु—' (3-2-136) इत्यादिना तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु कर्तरि इष्णुच् प्रत्ययः ।
4. क्वसुप्रत्यये, 'तॄफलभज**त्रप**श्च' (6-4-122) इत्येत्वाभ्यासलोपे च रूपम् । 'पपुष आगतम्—पपिवद्रूप्यम्' इति 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4-3-24) इति सूत्रे **भाष्यकार**प्रयोगात् छन्दसि विहितोऽपि क्वसुः भाषायामपि क्वचिद् भवति ।
5. 'आसुयुवपिरपि**त्रपि**चमश्च' (3-1-126) इति यदपवादो ण्यत् ।
6. धातोरस्य षित्त्वात् स्त्रियाम्, '**षिद्भि**दादिभ्योऽङ्' (3-3-104) इत्यङ् भावे ।

A. 'पर्यङ्के मरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुराव**पत्रपिष्णोः**' । शि. व. 8.46.

अपत्रप्य, [1]अपत्रपय्य, प्रतित्रपिष्य-प्रतित्रप्स्य, प्रतात्रप्य ;

त्रापम् २, त्रपित्वा २, त्रप्त्वा २, | [2]त्रपम् २-त्रापम् २, त्रपयित्वा २, | तित्रपिषम् २-तित्रप्सम् २, तित्रपिषित्वा २-तित्रप्सित्वा २, | तात्रपम् २ ; तात्रपित्वा २ ;

[3]त्रपु.

## (788) "त्रस धारणे" (X-चुरादिः-1742. सक. सेट्. उभ.)

'ग्रहणे' इति **नन्दी**। '**धारणम्**=वारणम्' इति **मैत्रेयः**। 'वारणे' इत्येव **शाकटायनः**।

'भाषणे त्रंसयेत् त्रंसेर्धारणे त्रासयेण्णिचि।
त्रसति त्रस्यतीत्येवमुद्वेगार्थे तु वा श्यनि॥' (श्लो. 191) इति **देवः**।

त्रासकः-सिका, तित्रासयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**ग्रासयति**वत् (439) ज्ञेयानि।

## (789) "त्रसि भाषार्थः" (X-चुरादिः-1762. सक. सेट्. उभ.)

'**भासार्थः**' इति कुत्रचित् पाठः।

'भाषणे त्रंसयेत् त्रंसेर्धारणे त्रासयेण्णिचि।' (श्लो. 191) इति **देवः**।

'आस्वदः सकर्मकात्' (ग. सू. चुरादौ) इति णिज्विकल्पः। तेन णिजभावपक्षे धातोः सन्नन्तात् यङन्ताच्च रूपाणि भवन्ति। तथा च— त्रंसकः-सिका, तित्रंसयिषकः-षिका, त्रंसकः-सिका, तित्रंसिषकः-षिका, तात्रंसकः-सिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**कुंशयति**वत् (232) ज्ञेयानि।

## (790) "त्रसी उद्वेगे" (IV-दिवादिः-1117. सक. सेट्. पर.)

**उद्वेगः**=भयम् इति **क्षीरस्वामी**।

'त्रसति त्रस्यतीत्येवमुद्वेगार्थे तु वा श्यनि॥' (श्लो. 191) इति **देवः**।

| | | | |
|---|---|---|---|
| त्रासकः-सिका, | त्रासकः-सिका, | तित्रसिषकः-षिका, | तात्रसकः-सिका ; |
| त्रसिता-त्री, | त्रासयिता-त्री, | तित्रसिषिता-त्री, | तात्रसिता-त्री ; |

1. ण्यन्ताल्ल्यपि, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
2. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः।
3. 'शृस्वृस्निहित्रपि—' [द. उ. 1-95] इत्यादिना उप्रत्ययः। अग्निं दृष्ट्वा त्रपते=लज्जते इव इति **त्रपु**=सीसम्।



[1]त्रस्यन्-[A]त्रसन्-न्ती, त्रासयन्-न्ती, तित्रसिषन्-न्ती ; —

त्रसिष्यन्-न्ती-ती, त्रासयिष्यन्-न्ती-ती, तित्रसिषिष्यन्-न्ती-ती ; —

— त्रासयमानः, त्रासयिष्यमाणः, — तात्रस्यमानः, तात्रसिष्यमाणः ;

[2]सुत्रः-सुत्रसौ-सुत्रसः ; — — —

[3]त्रस्तम्, [4]तरङ्गापत्रस्तः-त्रस्तवान्, त्रासितः, तित्रसिषितः, तात्रसितः-तवान् ;

त्रसः, वित्रासी, [5]तत्रसिवान्-त्रेसिवान्, [6]त्रस्नुः, [B]त्रासः, तित्रसिषुः, तात्रसः ;

| | | | |
|---|---|---|---|
| त्रसितव्यम्, | त्रासयितव्यम्, | तित्रसिषितव्यम्, | तात्रसितव्यम् ; |
| त्रसनीयम्, | त्रासनीयम्, | तित्रसिषणीयम्, | तात्रसनीयम् ; |
| त्रास्यम्, | त्रास्यम्, | तित्रसिष्यम्, | तात्रस्यम् ; |
| ईषत्त्रसः-दुस्त्रसः-सुत्रसः ; | | — | — |
| त्रस्यमानः, | त्रास्यमानः, | तित्रसिष्यमाणः, | तात्रस्यमानः ; |
| [7]त्रासः, | त्रासः, | तित्रसिषः, | तात्रसः ; |
| त्रसितुम्, | [C]त्रासयितुम्, | तित्रसिषितुम्, | तात्रसितुम् ; |
| त्रस्तिः, | त्रासना, | तित्रसिषा, | तात्रसा ; |
| त्रसनम्, | त्रासनम्, | तित्रसिषणम्, | तात्रसनम् ; |
| त्रसित्वा, | त्रासयित्वा, | तित्रसिषित्वा, | तात्रसित्वा ; |
| प्रत्रस्य, | प्रत्रास्य, | प्रतित्रसिष्य, | प्रतात्रस्य ; |
| त्रासम् २, त्रसित्वा २, | त्रासम् २, त्रासयित्वा २, | तित्रसिषम् २, तित्रसिषित्वा २, | तात्रसम् २ ; तात्रसित्वा २. |

1. 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमु**त्रसि**त्रुटिलषः' (3-1-70) इति श्यन्विकल्पः। तेन रूपद्वयम्। प्राप्तविभाषेयम्, तेन पक्षे शप् भवति।
2. क्विपि, सकारस्य रुत्वविसर्गौ भवतः।
3. '**श्वीदितो** निष्ठायाम्' (7-2-14) इति इण्णिषेधः।
4. 'अपेतापोढमुक्तपतित**तापत्रस्तै**रल्पशः' (2-1-38) इति समासः।
5. क्वसौ 'वा जॄभ्रमु**त्रसाम्**' (6-4-124) इति एत्वाभ्यासलोपः। छान्दसोऽपि क्वसुर्भाषायामपि प्रयुज्यत इत्यसकृत् प्रमाणप्रदर्शनपूर्वकमुक्तम्।
6. '**त्रसि**गृधिधृषिक्षिपेः क्नुः' (3-2-140) इति ताच्छीलिकः क्नुप्रत्ययः। 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधः।
7. 'हलश्च' (3-3-121) इति संज्ञायां घञ्। **त्रासः**=भयम्, मणिदोषो वा।

A. 'उपेक्षिता देवगणै**स्त्रसद्भि**र्निशाचरैर्वीतभयैर्निकृत्ताः।' भ. का. 11.43.
B. 'अथानुकूलश्रवणप्रतीतामत्र**स्नुभि**र्मुक्तधुरं तुरङ्गैः।' रघुवंशे 14.47.
C. 'फणावत**स्त्रासयितुं** रसायास्तलं विविक्षन् इव पन्नगारिः॥' शि. व. 3.23.

(791) "त्रिखि गत्यर्थः" (I-भ्वादिः-155. सक. सेट्. पर.)
भौवादिककन्दतिवत् (163) सर्वाणि रूपाणि ज्ञेयानि। केषाञ्चिन्मतेनास्य धातोः पाठः।

(792) "त्रिसि भासार्थः" (X-चुरादिः-1762. सक. सेट्. उभ.)
आस्वदीयः।

'त्रसि' इत्यस्य केषाञ्चिन्मतेन एवं पाठः। चौरादिककुंशयतिवत् (232) सर्वाणि रूपाण्यूह्यानि।

(793) "त्रुट छेदने" (VI-तुदादिः-1375. सक. सेट्. पर.)
कुटादिः।

त्रोटकः-टिका, त्रोटकः-टिका, तुत्रुटिषकः-षिका, तोत्रुटकः-टिका; इत्यादीनि सर्वाणि रूपाणि तौदादिककुटतिवत् (204) ज्ञेयानि। [1]त्रुट्यन्-त्रुटन्-न्ती-ती, इति शतरि रूपद्वयमस्येति विशेषः।

(794) "त्रुट छेदने" (X-चुरादिः-1699.सक.सेट्.आत्म.) आकुस्मीयः। चौरादिककोटयतिवत् (205) सर्वाणि रूपाण्यूह्यानि।

(795) "त्रुन्प हिंसार्थः" (I-भ्वादिः-407. सक. सेट्. पर.)
त्रुम्पकः-म्पिका, त्रुम्पकः-म्पिका, तुत्रुम्पिषकः-षिका, तोत्रुम्पकः-पिका; इत्यादीनि सर्वाण्यपि रूपाणि तुम्पतिवत् (742) ज्ञेयानि। [A]त्रुम्प्यम्।

(796) "त्रुन्फ हिंसार्थः" (I-भ्वादिः-411. सक. सेट्. पर.)
सर्वाण्यपि रूपाणि भौवादिकतुम्पतिवत् (742) ज्ञेयानि। [2]त्रुफित्वा-त्रुम्फित्वा इति क्त्वायां रूपद्वयमिति विशेषः।

(797) "त्रुप हिंसार्थः" (I-भ्वादिः-406. सक. सेट्. पर.)
सर्वाण्यपि रूपाणि भौवादिककोचतिवत् (200) ज्ञेयानि।

---

1. 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' (3-1-70) इति श्यन्विकल्पः। अप्राप्तविभाषेयम्। तेन पक्षे शप्रत्ययोऽपि भवति।
2. 'नोपधात् थफान्ताद् वा' (1-2-23) इति कित्वविकल्पः। तेन रूपद्वयम्।
A. 'अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान् मिलतोऽथ राक्षसान्।'
धा. का. 1.53.



(798) "त्रुफ हिंसार्थः" (I-भ्वादिः-410. सक. सेट्. पर.)
सर्वाण्यपि रूपाणि भौवादिककोचतिवत् (200) ज्ञेयानि।

(799) "त्रैङ् पालने" (I-भ्वादिः-965. सक. अनि. आत्म.)
[1]त्रायकः-यिका, [2]त्रापकः-पिका, तित्रासकः-सिका, तात्रायकः-यिका;
त्राता-त्रात्री, त्रापयिता-त्री, तित्रासिता-त्री, तात्रायिता-त्री;
— त्रापयन्-न्ती, त्रापयिष्यन्-न्ती-ती; — —
[3]त्रायमाणः, [[4]चोरात्] त्रायमाणः, त्रापयमाणः, तित्रासमानः, तात्राय्यमाणः;
त्रास्यमानः, त्रापयिष्यमाणः, तित्रासिष्यमाणः, तात्रायिष्यमाणः;
सुत्राः-सुत्रौ-सुत्राः; — — —
[5]त्रातम्-त्राणम्-त्रातः-त्राणः-त्रातवान्-त्राणवान्, [6]देवत्रातः-भवत्रातः,
त्रापितः, तित्रासितः, तात्रायितः-तवान्;
[7]गोत्रः, [8]सुत्रः, आतपत्रम्, अङ्गुलित्रम्,[A] [9]सुत्रायी, [10]त्रायः,

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यात्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवमात्वं सर्वत्र, युगागमस्तु घञादिषु च इति ज्ञेयम्।
2. आदन्तलक्षणः पुगागमो ण्यन्ते सर्वत्र ज्ञेयः।
3. शानचि, आत्वाभावे, आयादेशे च रूपम्।
4. 'भीत्रार्थानां भयहेतुः' (1-4-25) इति अपादानसंज्ञा चोरस्य।
5. 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (8-2-56) इति निष्ठानत्वविकल्पः।
6. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्ययः। 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥' (भाष्यम्–7-4-41) इति व्यवस्थितविभाषाश्रयणाद् अत्र निष्ठानत्वं न। देवत्रात इत्युपलक्षणम्, संज्ञायामन्योपपदेऽपि भवतीति ज्ञापनाय भवत्रात इत्यप्युक्तम्।
7. 'आतोऽनुपसर्गे कः' (3-2-3) इति कर्मण्युपपदेऽणपवादः कप्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। एवम्, पार्ष्णित्रम्, तनुत्रम्, आतपत्रम् इत्यादिकमपि बोध्यम्।
8. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः।
9. ताच्छील्ये णिनिप्रत्ययः। युगागमः।
10. 'श्याऽऽद्व्यध—' (3-1-141) इति कर्तरि णप्रत्यये रूपमेवम्।
A. 'व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे
कथमपि गुरुशोकान्मा रुदन् माङ्गलिक्यः॥' भ. का. 1.26.

[1]पार्ष्णिसंत्रायः, [2]सुत्रामा,[A] त्रापः, तित्रासुः, तात्रः ;
त्रातव्यम्, त्रापयितव्यम्, तित्रासितव्यम्, तात्रायितव्यम् ;
त्राणीयम्, त्रापणीयम्, तित्रासनीयम्, तात्रायणीयम् ;
[3]त्रेयम्, त्राप्यम्, तित्रास्यम्, तात्राय्यम् ;
[4]ईषत्त्राणः-दुस्त्राणः-सुत्राणः ; — —
त्रायमाणः, त्राप्यमाणः, तित्रास्यमानः, तात्रायमाणः ;
त्रायः, त्रापः, तित्रासः, तात्रायः ;
त्रातुम्, त्रापयितुम्, तित्रासितुम्, तात्रायितुम् ;
त्रातिः, [5]सुत्रा, त्रापणा, तित्रासा, तात्राया ;
त्राणम्, त्रापणम्, तित्रासनम्, तात्रायणम् ;
त्रात्वा, त्रापयित्वा, तित्रासित्वा, तात्रायित्वा ;
प्रत्राय, प्रत्राप्य, प्रतित्रास्य, प्रतात्राय्य ;
त्रायम् २, } त्रापम् २, } तित्रासम् २, } तात्रायम् २ ; }
त्रात्वा २, } त्रापयित्वा २, } तित्रासित्वा २, } तात्रायित्वा २. }

(800) "**त्रौकृ गत्यर्थः**" (I-भ्वादिः-99. सक. सेट्. आत्म.)
भौवादिक**ढौकति**वत् (653) सर्वाणि रूपाण्यूह्यानि । त्रौकितम्[B] ।

(801) "**त्वक्षू तनूकरणे**" (I-भ्वादिः-656. सक. वेट्. पर.)
भौवादिक**तक्षति**वत् (692) सर्वाणि रूपाण्यस्योह्यानि । [6]त्वष्टा ।

---

1. सोपसर्गे कर्मण्युपपदे तु कप्रत्ययं बाधित्वा औत्सर्गिकः 'कर्मण्यण्' (3-2-1) इत्यणेव भवति ।
2. '**आतो** मनिन्—' (3-2-74) इति मनिन्प्रत्ययः । **सुत्रामा**=इन्द्रः ।
3. 'अचो यत्' (3-1-97) इति यत् । 'ईद् यति' (6-4-65) इति ईत्वे गुणे च रूपम् ।
4. ईषदाद्युपपदेषु खलपवादः '**आतो** युच्' (3-3-128) इति युच् ।
5. '**आत**श्चोपसर्गे' (3-3-106) इति स्त्रियां भावादावङ् ।
6. 'अप्तृन्तृच्स्वसृनप्तृनेष्टृ**त्वष्टृ**—' (6-4-11) इत्यनेन तृन्नन्तो निपातितः तच्छील-तद्धर्मतत्साधुकारिष्वर्थेषु । सूत्रे निपातादेव तृन्नन्तेऽत्र कदाचित् इड्घटितप्रयोगो न सम्भवति ।

A. '**सुत्राम**पुत्रारिशिलीमुखानां स्मृत्वा गणस्तत्र वलीमुखानाम् ।' च. रा. 4.44.
B. 'विष्वक्**परित्रौकित**लोचनैः स्थितं विष्वक्कमाणाम्बुदनादशङ्कया ॥' धा. का. 1.14.



(802) "**त्वगि गत्यर्थः**" (I-भ्वादिः-150-अक. सेट्. पर.)
भौवादिक**कन्दति**वत् (163) सर्वाण्यपि रूपाणि ज्ञेयानि ।

(803) "**त्वच संवरणे**" (VI-तुदादिः-1301. सक. सेट्. पर.)

'संवरणम्=आच्छादनम्' इति **क्षीरस्वामी** ।

त्वाचकः-चिका, त्वाचकः-चिका, तित्वचिषकः-षिका, तात्वचकः-चिका ;
त्वचिता-त्री, त्वाचयिता-त्री, तित्वचिषिता-त्री, तात्वचिता-त्री ;
त्वचन्-न्ती-ती, त्वाचयन्-[1]त्वचयन्-न्ती, तित्वचिषन्-न्ती ; —
त्वचिष्यन्-न्ती-ती, त्वाचयिष्यन्-न्ती-ती, तित्वचिषिष्यन्-न्ती-ती ; —
—त्वाचयमानः, त्वाचयिष्यमाणः, —तात्वच्यमानः, तात्वचिष्यमाणः ;
[2]त्वक्-त्वग्-त्वचौ-त्वचः ; — — —
त्वचितम्-तः, त्वाचितः, तित्वचिषितः, तात्वचितः-तवान् ;
[3]त्वचः, त्वाचः, तित्वचिषुः, तात्वचः ;
त्वचितव्यम्, त्वाचयितव्यम्, तित्वचिषितव्यम् तात्वचितव्यम् ;
त्वचनीयम्, त्वाचनीयम्, तित्वचिषणीयम्, तात्वचनीयम् ;
त्वाच्यम्, त्वाच्यम्, तित्वचिष्यम्, तात्वच्यम् ;
ईषत्त्वचः-दुस्त्वचः-सुत्वचः ; — —
त्वच्यमानः, त्वाच्यमानः, तित्वचिषमाणः, तात्वच्यमानः,
त्वाचः, त्वाचः, तित्वचिषः, तात्वचः ;
त्वचितुम्, त्वाचयितुम्, तित्वचिषितुम्, तात्वचितुम् ;
[4]त्वक्तिः-त्वक्, त्वाचना, तित्वचिषा, तात्वचा ;
त्वचनम्, त्वाचनम्, तित्वचिषणम्, तात्वचनम् ;

---

1. 'सत्यापपाशरूपवीणातूलश्लोकसेनालोम**त्वच**वर्मवर्णचूर्णचुरादिभ्यो णिच्' (3-1-25) इति **त्वचं** गृह्णातीत्यर्थे **त्वक्**शब्दाण्णिचि, 'णाविष्ठवत् प्रातिपदिकस्य' (भाष्येष्टिः) इति इष्ठवद्भावादिषु कृतेषु, अल्लोपणिलोपयोः शतरि रूपम् ।
2. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति कर्तरि क्विप् ।
3. पचादित्वात् कर्तर्यच्प्रत्ययः ।
4. क्तिनि, चर्त्वे च रूपम् । भावे, 'सम्पदादिभ्यः—' (वा. 3-3-94) इति क्विपि तु **त्वक्** इति रूपम् ।

| | | | |
|---|---|---|---|
| [A]त्वचित्वा, | त्वाचयित्वा, | तित्वचिषित्वा, | तात्वचित्वा ; |
| प्रत्वच्य, | प्रत्वाच्य, | प्रतित्वचिष्य, | प्रतात्वच्य ; |
| त्वाचम् २, त्वचित्वा २, | त्वाचम् २, त्वाचयित्वा २, | तित्वचिषम् २, तित्वचिषित्वा २, | तात्वचम् २ ; तात्वचित्वा २. |

(804) " त्वन्चु गत्यर्थः " (I-भ्वादिः-192. सक. सेट्. पर.)

त्वञ्चकः-ञ्चिका, त्वञ्चकः-ञ्चिका, तित्वञ्चिषकः-षिका, तात्वञ्चकः-ञ्चिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचञ्चतिवत् (496) ज्ञेयानि। [B]त्वञ्चन्-न्ती ।

(805) " ञि त्वरा सम्भ्रमे " (I-भ्वादिः-775. अक. सेट्. आत्म.)

घटादिः, षिच्च ।

' सम्भ्रमः=आशुकारिता ' इति क्षीरस्वामी ।

| | | | |
|---|---|---|---|
| त्वारकः-रिका | [1]त्वरकः-रिका, | तित्वरिषकः-षिका, | तात्वरकः-रिका ; |
| त्वरिता-त्री, | त्वरयिता-त्री, | तित्वरिषिता-त्री, | तात्वरिता-त्री ; |
| — | [2]त्वरयन्-न्ती, | त्वरयिष्यन्-न्ती-ती ; | — |
| त्वरमाणः, | — | तित्वरिषमाणः; | तात्वर्यमाणः ; |
| त्वरिष्यमाणः, | — | तित्वरिषिष्यमाणः, | तात्वरिष्यमाणः ; |
| [3]तूः-तूरौ-तूरः ; | — | — | — |

1. ' घटादयो मितः ' (ग. सू. भ्वादौ) इति वचनात् मित्त्वम् । तेन ण्यन्ते, ' मितां ह्रस्वः ' (6-4-92) इति उपधाह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
2. ' अणावकर्मकात् चित्तवत्कर्तृकात् ' (1-3-88) इति ण्यन्तात् परस्मैपदमेव ।
3. क्विपि, ' ज्वरत्वरश्रिव्यविमवामुपधायाश्च ' (6-4-20) इति उपधावकारयोरूठ् । सवर्णदीर्घः, विसर्गश्च ।

A. ' चर्वन्ती कटु झर्झती बुधजनं दोषं त्वचित्वर्चती
नित्यं भूपतिमुब्जनोज्झितमना यत्रास्त खल्या सुखम् ॥ ' धा. का. 2.73.

B. ' आवक्रचञ्चूपुटतञ्जदारवत्वञ्चत्खग ुक्तशिखैर्लताद्रुमैः । ' धा. का. 1.26.



[1]तूर्णम्[A] [2][अनेन] [3]तूर्णः-तूर्णवान्-त्वरितम् [अनेन]-तः-तवान्, त्वरितः, तित्वरिषितः, तात्वरितः-तवान् ;

| | | | |
|---|---|---|---|
| त्वरः, | त्वरः, | तित्वरिषुः, | तात्वरः ; |
| त्वरितव्यम्, | त्वरयितव्यम्, | तित्वरिषितव्यम्, | तात्वरितव्यम् ; |
| त्वरणीयम्, | त्वरणीयम्, | तित्वरिषणीयम्, | तात्वरणीयम् ; |
| त्वार्यम्, | त्वर्यम्, | तित्वरिष्यम्, | तात्वर्यम् ; |
| ईषत्त्वरः-दुस्त्वरः-सुत्वरः ; | | — | — |
| त्वर्यमाणः, | त्वर्यमाणः, | तित्वरिष्यमाणः, | तात्वर्यमाणः ; |
| त्वारः, | त्वरः, | तित्वरिषः, | तात्वरः ; |
| त्वरितुम्, | त्वरयितुम्, | तित्वरिषितुम्, | तात्वरितुम् ; |
| [4]त्वरा, तूर्तिः, | त्वरणा, | तित्वरिषा, | तात्वरा ; |
| त्वरणम्, | त्वरणम्, | तित्वरिषणम्, | तात्वरणम् ; |
| त्वरित्वा, | त्वरयित्वा, | तित्वरिषित्वा, | तात्वरित्वा ; |
| सन्त्वर्य, | [5]प्रत्वरय्य, | प्रतित्वरिष्य, | प्रतात्वर्य ; |

1. ' आदितश्च ' (7-2-16) इति सूत्रेण निष्ठायामिण्णिषेधे प्राप्ते, ' रुष्यमत्वरसंघुषाऽऽस्वनाम् ' (7-2-28) इति निषेधविकल्पः । तेन इड्विकल्पः । इडभावपक्षे ' ज्वरत्वर— ' (6-4-20) इत्युपधावकारयोरूठि दीर्घे, ' रदाभ्यां निष्ठातो नः— ' (8-2-42) इति निष्ठानत्वे, णत्वे च तूर्णम् इत्यादिरूपम् । इट्पक्षे त्वरितम् इत्यादि भवति । एतच्च निष्ठायाः भावार्थे बोध्यम् ।
2. भावकर्मार्थयोस्तु, ' विभाषा भावादिकर्मणोः ' (7-2-17) इतीण्णिषेधविकल्पः । तूर्णमनेन, त्वरितमनेन इति प्रयोगो भवति ।
3. ' ञीतः क्तः ' (3-2-187) इति कर्तरि क्तप्रत्ययः । कर्त्रर्थेऽपि ' रुष्यमत्वर— ' (7-2-28) इति इण्णिषेधविकल्पः । " अस्य [धातोः] आदित्त्वम्, अस्य सूत्रस्य (7-2-28) भावादिकर्मणोरप्रवृत्तिज्ञापनार्थम् । तथा च विकल्पप्रवृत्त्या तच्चरितार्थम् । तेनान्येषां तयोर्विकल्पो न । " इति बृहच्छब्देन्दुशेखरे व्याख्यातम् ।
4. धातोरस्य षित्त्वात्, ' त्वरत्यन्ता घटादयस्त्रयोदश षितः ' (सि. कौ. भ्वादिः) इति वचनात्, ' षिद्भिदादिभ्योऽङ् ' (3-3-104) इति स्त्रियां भावादावङ् । प्रयोगबाहुल्यात् क्तिनि, ऊठि तूर्तिरित्यपि भवति । प्रक्रियाकौमुद्यां तु स्त्रियां भावादौ निप्रत्यये तूर्णिः इति रूपमित्युक्तम् । ' बाहुलकात् ऊठ् ' इति तद्व्याख्याने ।
5. ण्यन्ताल्ल्यपि, ' ल्यपि लघुपूर्वात् ' (6-4-56) इति णेरयादेशः ।

A. ' जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ ' भ. का. 9.20.

त्वरम् २, [1]त्वरम् २-त्वारम् २, तित्वरिषम् २, तात्वरम् २ ;
त्वरित्वा २, त्वरयित्वा २, तित्वरिषित्वा २, तात्वरित्वा २.

(806) "**त्विष दीप्तौ**" (I-भ्वादिः-1001. अक. अनि. उभ.)

त्वेषकः-षिका, त्वेषकः-षिका, [2]तित्विक्षकः-क्षिका, [3]तेत्विषकः-षिका ;
त्वेष्टा-ष्ट्री, त्वेषयिता-त्री, तित्विक्षिता-त्री, तेत्विषिता-त्री ;
[A]त्वेषन्-न्ती, त्वेषयन्-न्ती, तित्विक्षन्-न्ती ; —
[4]त्वेक्ष्यन्-न्ती-ती, त्वेषयिष्यन्-न्ती-ती, तित्विक्षिष्यन्-न्ती-ती ; —
त्वेषमाणः, त्वेषयमाणः, तित्विक्षमाणः, तेत्विष्यमाणः ;
त्वेक्ष्यमाणः, त्वेषयिष्यमाणः, तित्विक्षिष्यमाणः, तेत्विषिष्यमाणः ;
[5]त्विट्-त्विड्-त्विषौ-त्विषः ; — —
त्विष्टम्-त्विष्टः-त्विष्टवान्, त्वेषितः, तित्विक्षितः, तेत्विषितः-तवान् ;
त्विषः, [6]त्वष्टा[B], त्वेषः, तित्विक्षुः, तेत्विषः ;
त्वेष्टव्यम्, त्वेषयितव्यम्, तित्विक्षितव्यम्, तेत्विषितव्यम् ;
त्वेषणीयम्, त्वेषणीयम्, तित्विक्षणीयम्, तेत्विषणीयम् ;
त्वेष्यम्, त्वेष्यम्, तित्विक्ष्यम्, तेत्विष्यम् ;
ईषत्त्वेषः-दुस्त्वेषः-सुत्वेषः ; — —
त्विष्यमाणः, त्वेष्यमाणः, तित्विक्ष्यमाणः, तेत्विष्यमाणः ;
त्वेषः, त्वेषः, तित्विक्षः, तेत्विषः ;
त्वेष्टुम्, त्वेषयितुम्, तित्विक्षितुम्, तेत्विषितुम् ;
त्विष्टिः, [7]त्विट्, त्वेषणा, तित्विक्षा, तेत्विषा ;

1. णमुल्परे णौ, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः।
2. धातोरनिट्त्वेन, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, गुणनिषेधे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, षत्वे च रूपम्। एवं सन्नन्ते सर्वत्रोह्यम्।
3. यङन्ते, अभ्यासस्य 'गुणो यङ्लुकोः' (7-4-82) इति गुणः सर्वत्र ज्ञेयः।
4. लृटः स्यप्रत्यये, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे षत्वे च रूपम्।
5. 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे चर्त्वविकल्पे च रूपम्।
6. 'तृन्' (3-2-135) इति ताच्छीलिके तृनि, 'त्विषेर्देवतायामकारश्चोपधायाः' (वा. 3-2-135) इति वचनात् अत्वं भवति। त्वष्टा=सूर्यः।
7. 'सम्पदादिभ्यः क्विप्' (वा. 3-3-94) इति भावे क्विप् स्त्रियाम्।
A. '**त्वेषन्**मुखा इष्टिनिवापहीनां कष्टां पुरीं प्रापुरदूढदर्पाः॥' धा. का. 2.42.
B. '**त्वष्टुः** सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा।' शि. व. 3.35.



त्वेषणम्, त्वेषणम्, तित्विक्षणम्, तेत्विषणम् ;
त्विष्ट्वा, त्वेषयित्वा, तित्विक्षित्वा, तेत्विषित्वा ;
प्रत्विष्य, प्रत्वेष्य, प्रतितित्विक्ष्य, प्रतेत्विष्य ;
त्वेषम् २, त्वेषम् २, तित्विक्षम् २, तेत्विषम् २ ;
त्विष्ट्वा २, त्वेषयित्वा २, तित्विक्षित्वा २, तेत्विषित्वा २.

(807) "**त्सर छद्मगतौ**" (I-भ्वादिः-554. अक. सेट्. पर.)

त्सरकः-रिका, त्सारकः-रिका, तित्सरिषकः-षिका, तात्सरकः-रिका ;
[1]त्सरुः इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**क्मरति**वत् (268) ज्ञेयानि।
[2]तित्सरिषा[A]।

(808) "**थुड संवरणे**" (VI-तुदादिः-1387. सक. सेट्. पर. **कुटादिः**।)

थोडकः-डिका, थोडकः-डिका, तुथुडिषकः-षिका, तोथुडकः-डिका ;
इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**कुटति**वत् (204) ज्ञेयानि। [B]थुडन्।

(809) "**थुर्वी हिंसार्थः**" (I-भ्वादिः-571. सक. सेट्. पर.)

थूर्वकः-र्विका, थूर्वकः-र्विका, तुथूर्विषकः-षिका, तोथूर्वकः-र्विका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**तूर्वति**वत् (756) ज्ञेयानि। [C]थूर्णः।

(810) "**दक्ष वृद्धौ शीघ्रार्थे च**" (I-भ्वादिः-608. अक. सेट्. आत्म.)

दक्षकः-क्षिका, दक्षकः-क्षिका, दिदक्षिषकः-षिका, दादक्षकः-क्षिका ;
इत्यादीनि सर्वाणि रूपाणि भौवादिक**तक्षति**वत् (691) ज्ञेयानि। [D]दक्षणम्।

(811) "**दक्ष गतिहिंसनयोः**" (I-भ्वादिः-770. सक. सेट्. आत्म.)

**घटादिः, षिच्च।**

'— गतिशासनयोः' इति **माधवधातुवृत्त्यादिषु** पाठो दृश्यते।

1. 'भृमृशीतृचरित्सरि—' [द. उ. 1.92] इत्युप्रत्ययः। **त्सरुः**=खड्गमुष्टिः।
2. सन्नन्तात् स्त्रियां भावादौ, 'अ प्रत्ययात्' (3-3-102) इत्यकारप्रत्ययः।
A. 'अखोरधौरत्यतगेन्द्रवाहनं स्वसेविनां **तित्सरिषां** निराडिनम्।' धा. का. 1.71.
B. 'ईशश्वाघुठितस्तुडन् खलमुदं रोषं **थुडन्** प्रस्फुडन्
धाम स्वं स्फुरितो जगाम धनुषः पार्श्वं क्षणादस्फुलन्॥' धा. का. 2.81.
C. 'प्रक्ष्यूतगोपीशुचमूर्णपूतनं तूर्णानसं **थूर्ण**बकादिदानवम्।' धा. का. 1.73.
D. 'संक्लेशितस्वकथ**दक्षण**दीक्षितं तं प्रेक्ष्यैव जन्मफलमीषितवान् महात्मा॥'
धा. का. 1.77.

भ्वादिष्वेव पूर्वं पठितस्य दक्षधातोः (810) अर्थभेदेन मित्त्वार्थं घटादिषु पुनः पाठः। मित्त्वसामर्थ्यात् अनुपधात्वेऽपि ण्यन्ते, णमुलि दीर्घविकल्पो भवति। तेन दक्षम् २-दाक्षम् २, इति रूपद्वयं भवति। अन्यानि सर्वाण्यपि रूपाणि भौवादिकतक्षतिवत् (691) ज्ञेयानि।

(812) **"दघ घातने पालने च"** (V-स्वादिः-1273. सक. सेट्. पर.)

**छान्दसः।**

दाघकः-घिका, दाघकः-घिका, दिदघिषकः-षिका, दादघकः-घिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कक**तिवत् (139) ज्ञेयानि।

[1]दघ्नुवन्[A]-ती, घञि—[2]निदाघः।

(813) **"दण्ड दण्डनिपातने"** (X-चुरादिः-1926. सक. सेट्. उभ.)

**अदन्तः। द्विकर्मकोऽयं धातुः।**

दण्डकः-ण्डिका, दिदण्डयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चित्रय**तिवत् (525) ज्ञेयानि।

(814) **"दद दाने"** (I-भ्वादिः-17. सक. सेट्. आत्म.)

**'धारणे च' कल्पद्रुमे इति धा. का. व्याख्याने (1-4)।**

दादकः-दिका, दादकः-दिका, दिददिषकः-षिका, दाददकः-दिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कच**तिवत् (144) ज्ञेयानि।

[3]ददिवान्। [4]ददनः।

---

1. शतरि '**स्वादिभ्यः** श्नुः' (3-1-73) इति श्नुप्रत्यये, 'अचि **श्नुधातु**—' (6-4-77) इत्युवङि रूपमिति विशेषः।
2. "धाराधरा एव धराधराणां **निदाघदा**घौघविघातदक्षाः" इत्यत्र, '**दघ** घातने' इति स्वादिः, ततो **निदघ्यते**ऽनेनेति कृत्वा **निदाघ**शब्दः साधुः' इति **पारायणिकाः**।' इति **सुधाकरः**। **तदपाणिनीयम्**; 'संज्ञायाम् अर्घमेघ-**निदाघावदाघाः**' इति न्यङ्क्वादौ (7-3-53) पठित्वा दहतेर्घञि व्युत्पादनात्। तथा च तत्र (7-3-53) **वृत्तिः**—'अवपूर्वस्य निपूर्वस्य च **दहेः** इति।' **माधवधातुवृत्ता**वुक्तम्।
3. 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4-3-24) इति सूत्रे '**पपुष** आगतम् = **पपि-वद्रूप्यम्**।' इति **भाष्यप्रयोगात्** भाषायामपि क्वसुर्भवति। क्वसुप्रत्यये, '**न शस-दद**वादिगुणानाम्' (6-4-126) इति निषेधात् एत्वाभ्यासलोपौ न।
4. '**अनुदात्ते**तश्च हलादेः' (3-2-149) इति ताच्छीलिको युच्। अनादेशः।

A. '**क्ष्मां दघ्नुवन्** मखचमिभ्यसनानि रिण्वन् ऋक्षिण्वतां चिरयणैरपथं जिरिण्वन्।' धा. का. 2. 71.



(815) **"दध धारणे"** (I-भ्वादिः-8. सक. सेट्. आत्म.) [अ]

क्विपि [1]सुधत्-सुधद्-सुधधौ-सुधधः; इति रूपाणीति विशेषः।

[2]दधनः। अन्यानि सर्वाण्यपि रूपाणि भौवादिक**कच**तिवत् (144) ज्ञेयानि।

(816) **"दन्भु दम्भने"** (V-स्वादिः-1270. अक. सेट्. पर.)

**दम्भनं=लोकरञ्जनार्थं कर्मानुष्ठानम्।**

[3]दम्भकः-म्भिका, दम्भकः-म्भिका, [4]दिदम्भिषकः-षिका, धिप्सकः-धीप्सकः-प्सिका, [5]दादभकः-भिका;

दम्भिता-त्री, दम्भयिता-त्री, दिदम्भिषिता-धिप्सिता-धीप्सिता-त्री, दादभिता-त्री;

---

1. क्विपि, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति भष्भावः।
2. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच्।
3. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजश्शकारश्चषाट्टवर्गस्तवर्गजः॥' इति वचनात् **दम्भु** इत्यत्र मकारः नकारस्थानिकः। तस्य 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारे कृते, 'अनुस्वारस्य ययि —' (8-4-58) इति परसवर्णः। एवं सर्वत्र ज्ञेयम्।
4. 'सनीवन्तर्धभ्रस्ज**दम्भु**श्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इति इड्विकल्पः। इट्-पक्षे रूपमेवम्। इडभावपक्षे 'हलन्ताच्च' (1-2-10) इत्यत्र हल्त्वजात्याश्रयणेनात्रापि सनः कित्त्वम्। 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः। '**दम्भ** इच्च' (7-4-56) इतीत्वम्, ईत्वं च भवति। 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति भष्भावः। भकारस्य चर्त्वेन पकारः। तेन **धिप्सकः-धीप्सकः** इति रूपद्वयम्। एवं सन्नन्ते सर्वत्र रूपत्रयं बोध्यम्।
5. यङन्तात् ण्वुलि, उपधानकारलोपे, अल्लोपयलोपयोरेवं रूपम्। एवं पचाद्यजन्तं वर्जयित्वा सर्वत्र यङन्ते, उपधानकारलोपो भवति।

[अ] 'विश्वेदेवाः पुष्करे त्वाद**दन्त**, (ऋग्वेदे 7-33-11) इति, 'अक्रूरो **ददते** मणिम्।' इत्यादिषु धारणार्थकत्वात्, '**दण्डो ददतेर्धारयतिकर्मणः**।' (निरुक्ते 2-2) इति **निरुक्त**वचनाच्च **कौशिकादिभिः** पठितः '**दद धारणे, दध दाने**' इति पाठ एव युक्त इति **केचित्**। स्पष्टमिदं **क्षीरतरङ्गिण्याम्**। तथा हि—"**कौशिकस्तु, 'दद धारणे, 'दध दाने**' इति पाठं व्यत्यास्थत्। '**ददते** मणिम्, **दधते** धनमर्थिभ्यः।' इति। युक्तायुक्तत्वे त्वत्र **सूरयः** प्रमाणम्। वयं हि मतभेदप्रदर्शनमात्रेणैव कृतार्थाः मुनिमुख्यानां वाक्यं कथङ्कारं विकल्पयामः? वयमपि हि स्खलन्तोऽन्यैः कियन्न उपालप्स्यामहे।" इति **क्षीरस्वामी**।

[1]दभ्नुवन्-दभ्नुवती,[A] दम्भयन्-न्ती, दिदम्भिषन्-धिप्सन्-धीप्सन्-न्ती ; —
दम्भिष्यन्-न्ती-ती, दम्भयिष्यन्-न्ती-ती, दिदम्भिषिष्यन्-धिप्सिष्यन्-धीप्सिष्यन्-न्ती-ती ; —
[2]व्यतिदभ्नुवानः, — [3]व्यतिदिदम्भिषमाणः-व्यतिधिप्समानः-व्यतिधीप्समानः, दादभ्यमानः ;
व्यतिदम्भिष्यमाणः, — व्यतिदिदम्भिषिष्यमाणः-व्यतिधिप्सिष्यमाणः-व्यतिधीप्सिष्यमाणः, दादम्भिष्यमाणः ;
[4]धुप्-धुब्-धुभौ-धुभः ; — —
[5]दब्धम्-दब्धः-दब्धवान्, दम्भितः, दिदम्भिषितः-धिप्सितः-धीप्सितः, दादभितः-तवान् ;
दम्भः, सुदम्भी, [6]देभिवान्, दम्भः, दिदम्भिषुः[B]-धिप्सुः-धीप्सुः, दादम्भः ;
दम्भितव्यम्, दम्भयितव्यम्, दिदम्भिषितव्यम्-धिप्सितव्यम्-धीप्सितव्यम्, दादभितव्यम् ;

---

1. शतरि, '**श्वादिभ्यः**—' (3-1-73) इति श्नुप्रत्यये, तस्य सार्वधातुकत्वेन ङित्वाद् उपधानकारलोपे, गुणनिषेधे च, 'अचि **श्नुधातु**—' (6-4-77) इत्युवङि च रूपमेवम् । एवं शानजन्तेऽपि प्रक्रिया बोध्या ।
2. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् । एवं सन्प्रत्ययेऽपि शानच् ।
3. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तेऽपि कर्मव्यतीहारे गम्ये शानच् ।
4. क्विपि, नकारलोपे, 'एकाचो बशो भष्—' (8-2-37) इति भष्भावे चर्त्वविकल्पे च रूपम् ।
5. क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः । 'झषस्तथोर्धोऽधः' (8-2-40) इति निष्ठातकारस्य धकारः । 'झलां जश् झशि' (8-4-53) इति भकारस्य बकारः ।
6. लिटः क्वसौ, 'अत एकहल्मध्येऽनादेशा**देर्**लिटि' (6-4-120) इत्यत्र आदिग्रहणाज्ज्ञापकात् 'श्रन्थिग्रन्थि**दम्भि**स्वञ्जीनां लिटः कित्वं वा' इति **व्याकरणान्तर**स्थस्य वाक्यस्येहाप्याश्रयणेन लिटो वा कित्वम् । तेनोपधानकारलोपः । '**दम्भ** एत्वमलक्षणम् । असिद्धत्वान्नलोपस्य **दम्भ** एत्वं न सिद्ध्यति ॥' (**भाष्यम्** 6-4-120) इति वचनात् एत्वाभ्यासलोपौ । कित्वपक्षे **देभिवान्** इति रूपम् । कित्वाभावपक्षे **ददम्भिवान्** इति रूपमिति बोध्यम् । स्पष्टमिदं **बृहच्छब्देन्दुशेखरे**—(6-4-20) ।

A. 'क्विचाद**दभ्नुवती**मिमां मम गृहानेहीति याच्ञापराम् — ॥' धा. का. 2.70.
B. 'भूयस्तं **धिप्सु**माहूय राजपुत्रं **दिदम्भिषुः** ।' भ. का. 9.33.



दम्भनीयम्, दम्भनीयम्, दिदम्भिषणीयम्-धिप्सनीयम्-धीप्सनीयम्, दादभनीयम् ;
[1]दम्भ्यम्, दम्भ्यम्, दिदम्भिष्यम्-धिप्स्यम्-धीप्स्यम्, दादभ्यम् ;
ईषद्दम्भः-दुर्दम्भः-सुदम्भः ; — — —
दभ्यमानः, दम्भ्यमानः, दिदम्भिष्यमाणः-धिप्स्यमानः-धीप्स्यमानः, दादभ्यमानः ;
दम्भः, दम्भः, दिदम्भिषः-धिप्सः-धीप्सः, दादभः ;
दम्भितुम्, दम्भयितुम्, दिदम्भिषितुम्-धिप्सितुम्-धीप्सितुम्, दादभितुम् ;
[2]दब्धिः-दम्भा, दम्भना, दिदम्भिषा-धिप्सा-धीप्सा, दादभा ;
दम्भनम्, दम्भनम्, दिदम्भिषणम्-धिप्सनम्-धीप्सनम्, दादभनम् ;
[3]दम्भित्वा-दब्ध्वा, दम्भयित्वा, दिदम्भिषित्वा-धिप्सित्वा-धीप्सित्वा, दादभित्वा ;
प्रदभ्य, प्रदम्भ्य, प्रदिदम्भिष्य-प्रधिप्स्य-प्रधीप्स्य, प्रदादभ्य ;
दम्भम् २ } दम्भम् २ }
दम्भित्वा २-दब्ध्वा २, } दम्भयित्वा २ }
दिदम्भिषम् २-धिप्सम् २-धीप्सम् २, } दादभम् २ ; }
दिदम्भिषित्वा २-धिप्सित्वा २-धीप्सित्वा-२, } दादभित्वा २ ; }
[4]दभ्रः.

---

1. 'आसुयुवपि—' (3-1-126) इत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वेन **दम्भेः** सङ्ग्रहः इति **काशिकाया**मुक्तम् ; तत्तु **भाष्य**विरुद्धम् । एवं च ण्यदेव ।
2. भावादौ क्तिनि, 'तितुत्र—' (7-2-9) इति इण्णिषेधे, उपधानकारलोपे, धत्वजश्त्वयो रूपमेवम् । 'प्रसज्य च अपवादविषयं तत उत्सर्गोऽभिनिविशते' (परिभाषा) इति न्यायेन प्रथमतः क्तिनभावे, 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्यये **दम्भा** इति रूपं सिद्ध्यत्येव । एतदभिप्रायेणैव **अन्चु, इन्धी, उन्दी, उन्भ, ऋन्फ, कुन्च, कुन्थ, क्रुन्च, गुन्फ, ग्रन्थ** इत्यादिषु अञ्चा इत्यादीनि रूपाणि प्रदर्शितानीति ज्ञेयम् । **अक्तिः, इद्धिः** इत्यादीन्यपि क्रमेणोह्यानि ।
3. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्वनिषेधात् नकारलोपो न । इडभावपक्षे, नकारलोपे धत्वजश्त्वयो रूपम् ।
4. 'स्फायितञ्चि—' [द. उ. 8-31] इत्यादिना रक्प्रत्ययः । दभ्यते, दभ्नोति वा **दभ्रः**=अल्पम्, सूर्याचन्द्रमसौ च ।

## (817) "**दन्श दशने**" (I-भ्वादिः-989. सक. अनि. पर.)

"**दशनम्**=दंष्ट्राव्यापारः। हनुमूलगताः स्थूलदन्ताः **दंष्ट्राः**। तद्व्यापारः क्षतक्रियादिरूप इत्यर्थः।" इति **बालमनोरमा**।

"**दंशने** दशतीति स्यात् तत्र दंशयते णिचि ॥
भाषणे दंशयेत् .... .... .... ।" (श्लो. 164-165) इति **देवः**।

[1]दंशकः-शिका, दंशकः-शिका, [2]दिदङ्क्षकः-क्षिका, [3]दन्दशकः-दंदशकः-शिका ;

[4]दंष्टा-दंष्ट्री, दंशयिता-त्री, दिदङ्क्षिता-त्री, दन्दशिता-दंदशिता-त्री ;
[5]दशन्-न्ती, दंशयन्-न्ती, दिदङ्क्षन्-न्ती ; —
दङ्क्ष्यन्-न्ती-ती, दंशयिष्यन्-न्ती-ती, दिदङ्क्षिष्यन्-न्ती-ती ; —
— दंशयमानः, दंशयिष्यमाणः, — दन्दश्यमानः, दन्दशिष्यमाणः;
[6]प्रधट्-प्रधड्-प्रदशौ-प्रदशः ; — —
दष्टम्-दष्टः-दष्टवान्, दंशितः, दिदङ्क्षितः, दन्दशितः-तवान् ;

---

1. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु।' इति वचनात् नोपधोऽयं धातुः। नकारस्य 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारः। एवं सर्वत्र ज्ञेयम्।
2. सनि, 'व्रश्चभ्रस्ज—' (8-2-36) इत्यादिना शकारस्य षकारे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, षत्वे, अनुस्वारे च रूपमेवम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
3. 'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' (3-1-24) इति भावगर्हायां यङ्। 'अनिदिताम्—' (6-4-24) इति नकारलोपः। 'जपजभदहदशभञ्जपशां च' (7-4-86) इति अभ्यासस्य नुगागमः। 'स च पदान्तवद्वाच्यः' (वा. 7-4-85) इत्यनेन पदान्तवद्भावः। 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र रूपद्वयं ज्ञेयम्।
4. तृचि, शकारस्य 'व्रश्च—' (8-2-36) इत्यादिना षत्वे नकारस्यानुस्वारे, ष्टुत्वे च रूपम्। एवं तव्यदादिष्वपि ज्ञेयम्।
5. शपि, 'दंशसञ्जस्वञ्जां शपि' (6-4-25) इत्युपधानकारस्य लोपः।
6. क्विपि, नकारलोपे, षत्वधत्वजश्त्वचर्त्वविकल्पेषु रूपमेवं भवति।



दंशः, [1]दशनः, [2]वृषदंशः, दंशः, दिदङ्क्षुः, [3]दन्दंशः, [4]दन्दशूकः[A] ;
दंष्टव्यम्, दंशयितव्यम्, दिदङ्क्षितव्यम्, दन्दशितव्यम् ;
दंशनीयम्, दंशनीयम्, दिदङ्क्षणीयम्, दन्दशनीयम् ;
दंश्यम्, दंश्यम्, दिदङ्क्ष्यम्, दन्दश्यम् ;
[5]ईषद्दंशः-दुर्दंशः-सुदंशः ; — —
दश्यमानः, दंश्यमानः, दिदङ्क्ष्यमाणः, दन्दश्यमानः ;
दंशः, दंशः, दिदङ्क्षः, दन्दशः ;
दंष्टुम्, दंशयितुम्, दिदङ्क्षितुम्, दन्दशितुम् ;
[6]दशा-दष्टिः, दंशना, दिदङ्क्षा, दन्दशा ;
दंशनम्-[7]दशनम्[B], [8]दंष्ट्रः-दंष्ट्रा, दंशनम्, दिदङ्क्षणम, दन्दशनम् ;

---

1. 'कृत्यल्युटो बहुलम्' (3-3-113) इति बाहुलकात् कर्तरि ल्युट्। यद्वा, नन्द्यादेराकृतिगणत्वात् (3-1-134) कर्तरि ल्युः। '**दंश दशने**' इति धातुपाठनिर्देशात्, 'दाम्नीशस—' (3-2-182) इत्यत्र **दश** इति नकारलोपघटितत्वेन च निर्देशाद्वा क्ङिद्भिन्नप्रत्ययेऽपि क्वचिन्नलोपो भवतीति ज्ञायते। अतः पृषोदरादित्वात् (6-3-110) नकारलोपो भवति।
2. वृषं दशतीति **वृषदंशः**=मार्जारः। 'कर्मण्यण्' (3-2-1) इत्यण्।
3. यङन्तात् पचाद्यचि, यङो लुकि, उपधानकारलोपाभावे रूपमेवम्।
4. 'वाऽसरूपोऽस्त्रियाम्' (3-1-94) इत्यनेन असरूपापवादप्रत्ययत्वात् उत्सर्गस्य न बाधकः, यङन्तात् 'यजजपदशां यङः' (3-2-166) इत्यूकप्रत्ययः। **दन्दशूकः**=सर्पः।
5. 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (3-3-126) इति खल्। 'इह सामान्योक्तावपि योग्यताबलादयं विषयविभागो लभ्यते—कृच्छ्रार्थे दुरि, अकृच्छ्रे इतरयोः इति।' इति **बृहच्छब्देन्दुशेखरे**।
6. भिदादेराकृतिगणत्वेन, तत्र (3-3-104) पाठादङि, उपधानकारलोपे **दशा** इति **क्षीरतरङ्गिणी**। **दशा**=वर्तिरवस्था वस्त्रान्तावयवश्च। भिदादिष्वस्यादर्शनात् क्तिनि—**दष्टिः**रिति रूपमिति बोध्यम्।
7. करणे ल्युटि, '**दंश दशने**' इति धातुपाठबलात् नकारलोपे रूपमेवम्। '**दंशेः** करणे ल्युटि नलोपो वाच्यः' इति नलोपः।' इति **धा. का. व्याख्याने** (2-40) दृश्यते। तादृशं वचनं तु **भाष्यादौ** न दृश्यते।
8. 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' (3-2-182) इति करणे ष्ट्रन् प्रत्ययः। प्रत्ययस्य षित्वेऽपि अजादिषु (4-1-4) पाठात् टाबेव। न ङीष्।

A. 'भयविह्वलमाशु **दन्दशूकै**र्विवशैराविविशे स्वमेव धाम ॥' शि. व. 20.58.
B. 'कृत्वा स कृत्यं **दशनांशु**गौरं कृष्णं ययौ दैत्यनिदाघमेघम् ॥' धा. का. 2.40.

दष्ट्वा, दंशयित्वा, दिदङ्क्षित्वा, दन्दशित्वा ;
विदश्य, विदंश्य, विदिदङ्क्ष्य, प्रदन्दश्य ;
[1]मूलकोपदंशम् , मूलकेनोपदंशम् , मूलकेनोपदश्य वा भुङ्क्ते ।
[A]कालखण्डोपदंशम् ।

दंशम् २ } दष्ट्वा २ } दंशम् २ } दंशयित्वा २ } दिदङ्क्षम् २ } दिदङ्क्षित्वा २ } दन्दशम् २ ; } दन्दशित्वा २. }

## (818) "**दभ हिंसायाम्**" (I-भ्वादिः. सक. सेट्. पर.)

अयं धातुपाठेष्वपठितोऽपि '**लपिदभिभ्यां च**' (वा. 3-1-124) इति वार्तिकबलात्, (चुरादिषु 'बहुलम्, एतन्निदर्शनम्' (गणसूत्रम्) इति वचनात् **अवधीरयत्यादिवत्**) बोध्यः । अदुपधत्वेन पवर्गान्तत्वेन च 'पोरदुपधात्' (3-1-98) इति प्राप्तं यत्प्रत्ययं बाधित्वा '**लपिदभिभ्यां च**' (वा. 3-1-124) इति वचनात् ण्यत् । **अवदाभ्यः**=हिंस्य इत्यर्थः । 'विष्णुर्गोपा **अदाभ्यः**' (ऋग्वेदे विष्णुसूक्ते) '**न ता नशन्ति न दभाति** तस्करः' (ऋग्वेदे 6.28-3) इत्यादिप्रयोगा इहानुसन्धेयाः । '**न दभाती**'त्यत्र, '**न हिनस्ति**' इति **सायणभाष्ये** विवृतम् । अत एव धातोर्हिंसार्थकत्वमपि प्रतीयते । **दभातीति** शप् । 'अन्येषामपि दृश्यते' (6-3-137) इति दीर्घः । 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदम् । हिंसार्थकत्वात् सकर्मकत्वम् । '**दभिः** सौत्रो धातुः वञ्चने हिंसायां च' इति **प्रक्रियासर्वस्वे** ।

अंशुः, **अदाभ्यः** इति सोमरसग्रहपात्रे । '**अदाभ्यं** गृह्णीत' इति वचनमत्र ध्येयम् ।

दाभकः-भिका, दाभकः-भिका, दिदभिषकः-षिका, दादभकः-भिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**कखति**वत् (141) ज्ञेयानि ।

---

1. '**उपदंश**स्तृतीयायाम्' (3-4-47) इति णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः । वाऽसरूपन्यायेन क्त्वाऽपि भवति । तेन **मूलकेनोपदश्य** इत्यपि साधुः ।

A. 'स्वादुङ्कारं **कालखण्डोपदंशं** क्रोष्टा डिम्भं व्यष्वणद् व्यस्वनच्च ॥' शि. व. 18.77.



## (819) "**दमु उपशमे**" (IV-दिवादिः-1203. सक. सेट्. पर.)

**शमादिः । घटादिः ।**

[1]दमकः-मिका, [2]दमकः-मिका, दिदमिषकः-षिका, [3]दन्दमकः-दंदमकः-मिका ;

दमिता-त्री, दमयिता-त्री, दिदमिषिता-त्री, दन्दमिता-त्री ;
[4]दाम्यन्-न्ती, [5]दमयन्-दमयन्ती, दिदमिषन्-न्ती ; —
दमिष्यन्-न्ती-ती, दमयिष्यन्-न्ती-ती, दिदमिषिष्यन्-न्ती-ती ; —
— [6]दमयमानः, दमयिष्यमाणः, — दन्दम्यमानः, दन्दमिष्यमाणः ;
[7]प्रदान्-प्रदामौ-प्रदामः ; — — —
[8]दान्तम्-तः, [9]दान्तः-[A]दमितः, दिदमिषितः, दन्दमितः-तवान् ;

---

1. ण्वुलि 'अत उपधायाः (7-2-116) इति प्राप्ताया वृद्धेः, 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति निषेधः । एवं घञि, णमुल्यपि ज्ञेयम् ।
2. 'जनीजॄष्क्नसुरञ्जोऽ**मन्ताश्च**' (ग. सू. भ्वादौ) इति भ्वादिषु पाठात् घटादित्वम् । तेन 'घटादयो मितः' (ग. सू. भ्वादौ) इति मित्त्वात् णौ परतः 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वः सर्वत्र ज्ञेयः ।
3. यङन्ते, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुगागमः । 'स च पदान्तवद् वाच्यः (वा. 7-4-85) इति पदान्तवद्भावेन 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः । एवं यङन्ते सर्वत्र रूपद्वयं ज्ञेयम् ।
4. 'दिवादिभ्यः—' (3-1-69) इति श्यनि, '**शमामष्टानां** दीर्घः श्यनि' (7-3-74) इति दीर्घः ।
5. '**न पादमि**—' (1-3-89) इत्यादिना ण्यन्तात् परस्मैपदनिषेधस्तु 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (परिभाषा 62) इति न्यायात् 'णिचश्च' (1-3-74) इति प्राप्तस्यैव परस्मैपदस्य निषेधकः । तेन, **दमयन्ती** इत्यादिप्रयोगानुसाराच्च, परगामिनि क्रियाफले 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (1-3-72) इति परस्मैपदं भवत्येव । तेनात्र ण्यन्तात् शता भवति ।
6. '**न पादमि**—' (1-3-89) इत्यनेन 'णिचश्च' (1-3-74) इति प्राप्तस्य परस्मैपदस्य निषेधादात्मनेपदमेव ।
7. क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घे, पदान्ते 'मो नो धातोः' (8-2-64) इति मकारस्य नकारः ।
8. उदित्त्वेन क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इण्णिषेधः । दीर्घानुस्वारपरसवर्णाः भवन्ति ।
9. ण्यन्ते, 'वा **दान्त**शान्त—' (7-2-27) इत्यनेन इडभावो णिलुक् च निपात्यते । अत्र व्यवस्थितविभाषामाश्रित्य, 'ब्रह्मचारिणि विषये **दान्तः**, अन्यत्र **दमितः**' इत्युक्तं **क्षीरतरङ्गिण्याम्** ।

A. 'वृत्तशस्त्रान् महारम्भान**दान्तां**स्त्रिदशैरपि ॥' भ. का. 9.19.

दमः, [1]दमी, [2]बलिन्दमः[A], अरिन्दमः[B], दमः, [3]कुलदमनः, [C]सर्वदमनः, दिदमिषुः, दन्दमः ;
दमितव्यम्, दमयितव्यम्, दिदमिषितव्यम्, दन्दमितव्यम् ;
दमनीयम्-[4]दमनीया, दमनीयम्, दिदमिषणीयम्, दन्दमनीयम् ;
[5]दम्यम्, दम्यम्, दिदमिष्यम्, दन्दम्यम् ;
ईषद्दमः-[D]दुर्दमः-सुदमः ; — —
दम्यमानः, दम्यमानः, दिदमिष्यमाणः, दन्दम्यमानः ;
दमः, दमः, दिदमिषः, दन्दमः ;
दमितुम्, दमयितुम्, दिदमिषितुम्, दन्दमितुम् ;
दान्तिः, दमना, दिदमिषा, दन्दमा ;
दमनम्, दमनम्, दिदमिषणम्, दन्दमनम् ;
[6]दमित्वा[E]-दान्त्वा, दमयित्वा, दिदमिषित्वा, दन्दमित्वा ;
प्रदम्य, [7]प्रदमय्य, प्रदिदमिष्य, प्रदन्दम्य ;

---

1. 'शमित्यष्टाभ्यो घिनुण्' (3-2-141) इति तच्छीलादिषु कर्तृषु घिनुण् ।
2. 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (3-2-46) इति कर्तरि संज्ञायां खच् । खित्वात् मुम् । बलिं दाम्यतीति **बलिन्दमः**=विष्णुः । 'मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र **दमिः**' इति सि. **कौमुदी** । तदानीं बलिं दमयतीति **बलिन्दमः** इति सकर्मकः ।
3. नन्द्यादिषु (3-1-134) पाठात् ण्यन्तादस्मात् कर्तरि ल्युः । कुलं दमयतीति **कुलदमनः** । **शत्रुदमनः** इत्यादिष्वप्येवमेव ज्ञेयम् ।
4. 'कृत्यल्युटो बहुलम्' (3-3-113) इति बाहुलकात् कर्तरि अनीयर् । **दमनीया**= योषित् । दमनकर्त्री इत्यर्थः । इति प्र. **सर्वस्वे** ।
5. 'पोरदुपधात्' (3-1-98) इति भावे यत्प्रत्ययः । ण्यदपवादः ।
6. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । तेन रूपद्वयम् ।
7. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।

A. 'ततो **बलिन्दम**प्रख्यं कपिर्विश्वम्भराधिपम् ।' भ. का. 6.108.
B. 'शत्रुसहः कोऽपि वसुन्धरा च शत्रुन्तपोऽ**रिन्दम** एवमूह्यम् ॥' प्र. स.
C. 'इहायं सत्त्वानां प्रसभ**दमनात्** सर्व**दमनः**... ॥' शाकुन्तले 7.33.
D. 'अवाक्शिरसमुत्पादं कृतान्तेनापि **दुर्दमम्** ।' भ. का. 4.3.
E. '**दमित्वा**ऽप्यरिसंघातानश्रान्त्वा कपिकेसरी ।' भ. का. 9.42.



दमम् २, दमित्वा २, दान्त्वा २, } [1]दमम् २-दामम् २, दमयित्वा २, } दिदमिषम् २, दिदमिषित्वा २, } दन्दमम् २ ; दन्दमित्वा २ ; }
[2]दण्डः, [3]दन्तः, [4]दमूनाः.

## (820) "दय दानगतिरक्षणहिंसाऽऽदानेषु"

(I-भ्वादिः-481. सक. सेट्. आत्म.)

**आदानम्**=ग्रहणम् ।

दायकः-यिका, दायकः-यिका, दिदयिषकः-षिका, दादयकः-यिका ;
दयिता-त्री, दाययिता-त्री, दिदयिषिता-त्री, दादयिता-त्री ;
— दाययन्-न्ती, दाययिष्यन्-न्ती-ती ; — —
[5][रामस्य] दयमानः,[A] दाययमानः, दिदयिषमाणः, दादय्यमानः ;
दयिष्यमाणः, दाययिष्यमाणः, दिदयिषिष्यमाणः, दादयिष्यमाणः ;
[6]सुदत्-सुदतौ-सुदतः ; — — —
दयितम्[B]-तः, दायितः, दिदयिषितः, दादयितः-तवान् ;
दयः, [7]दयिता, [8]दयालुः,[C] [9]रत्नदायः,[D] दायः, दिदयिषुः, दादयः ;

---

1. 'च्णिणमुलोः—' (6-4-93) इति णमुल्परे णौ उपधाया दीर्घविकल्पः ।
2. 'ञमन्ताड्डः' (द. उ. 5.7) इति डप्रत्ययः । दम्यन्तेऽनेनोद्धता जनाः इति **दण्डः** । 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधः ।
3. 'हसिमृग्रिण्वामि**दमि**—' [द. उ. 6.7] इति तन्प्रत्ययः । 'तितुत्र**तथ**—' (7-2-9) इतीण्णिषेधः ।
4. '**दमे**रुनसिः' [द. उ. 9-95] इत्युनसिप्रत्ययः । **दमुनाः**=देवः, उपदेशः, अग्निश्च ।
5. कर्तरि शानच् । 'अधीगर्थ**दये**शां कर्मणि' (2-3-52) इति कर्मणि शेषे षष्ठी । अन्यत्र द्वितीयैव—'रामं **दयमानः**' इति ।
6. क्विपि, धातुयकारस्य 'लोपो व्योर्वलि' (6-1-66) इति लोपे, तुक् ।
7. तच्छीलादिषु कर्तृषु, 'अनुदात्तेतश्च हलादेः' (3-2-149) इति प्राप्तस्य युचः, 'न **यः**' (3-2-152) इति निषेधात्, 'तृन्' (3-2-135) इत्यौत्सर्गिकस्तृन् ।
8. 'स्पृहिगृहिपति**दयि**—' (3-2-158) इत्यालुच् तच्छीलादिषु कर्तृषु ।
9. 'अण् कर्मणि च' (3-3-12) इत्यणि रूपमेवम् ।

A. 'रामस्य **दयमानो**ऽसावध्येति तव लक्ष्मणः ।' भ. का. 8.120.
B. 'न गजा नगजा **दयिता दयिता** विगतं विगतं ललितं ललितम् ।' भ. का. 10.9.
C. 'निवर्त्य राजा **दयितां दयालु**स्तां सौरभेयीं सुरभिर्यशोभिः ।' रघुवंशे 2.3.
D. 'तं **रत्नदायं** जितमृत्युलोका रात्रिंचराः कान्तिभृतोऽन्वसर्पन् ।' भ. का. 12.11.

दयितव्यम्, दाययितव्यम्, दिदयिषितव्यम्, दादयितव्यम्;
दयनीयम्, दायनीयम्, दिदयिषणीयम्, दादयनीयम्;
दाय्यम्, दाय्यम्, दिदयिष्यम्, दादय्यम्;
ईषद्दयः-दुर्दयः-सुदयः; — — —
दय्यमानः, दाय्यमानः, दिदयिष्यमाणः, दादय्यमानः;
दायः, दायः, दिदयिषः, दादयः;
दयितुम्, दाययितुम्, दिदयिषितुम्, दादयितुम्;
[1]दया, दायना, दिदयिषा, दादया;
दयनम्, दायनम्, दिदयिषणम्, दादयनम्;
दयित्वा, दाययित्वा, दिदयिषित्वा, दादयित्वा;
प्रदय्य, प्रदाय्य, प्रदिदयिष्य, प्रदादय्य;
दायम् २, दयित्वा २, } दायम् २, दाययित्वा २, } दिदयिषम् २, दिदयिषित्वा २, } दादयम् २; दादयित्वा २. }

(821) "**दरिद्रा दुर्गतौ**" (II-अदादिः-1073. अक. सेट्. पर.)

**जक्षित्यादिः।** धातोरस्यानेकाच्त्वाद् यङ् न।

[2]**दरिद्र**यकः-यिका, [3]दरिद्रकः-द्रिका, [4]दिदरिद्रिषकः-षिका-दिदरिद्रासकः-सिका;

1. भिदादेः (3-3-104) आकृतिगणत्वात् स्त्रियामङि रूपमेवम्।
2. '**दरिद्रा**जागृदीधीङाम् एकाचां च चिरेर्जिरेः।
अदन्तोर्णोतिवेवीङां स्मर्यते नेत्, तथा लङेः॥' इति **प्राचीनैः** स्मरणात् धात्वाकारस्येत्संज्ञा न। '**दरिद्राते**रार्धधातुके लोपो वाच्यः' (वा. 6-4-114) इत्यत्र 'आर्धधातुके' इत्यस्य विषयसप्तमीत्वादत्रापि आकारस्य लोपे प्राप्ते, 'न **दरिद्रायके** लोपो **दरिद्राणे** न चेष्यते।' (भाष्येष्टिः 6-4-114) इति वचनात् ण्वुलि आकारलोपो न। '**आतो** युक् चिण्कृतोः'(7-3-33) इति युगागमे रूपमेवम्।
3. ण्यन्तात् ण्वुलि, णिचोऽप्यार्धधातुकत्वेन प्रत्ययोत्पत्तेः प्रागेव (णिज्विवक्षायामेव) आकारलोपे रूपम्। एवं ण्यन्ते सर्वत्र आकारलोपो ज्ञेयः।
4. '**दिदरिद्रिषती**त्येके **दिदरिद्रासती**ति वा॥'(भाष्येष्टिः 6-4-114) इति वचनात् अस्माद्धातोः सनि इड्विकल्पो भवतीति ज्ञायते। इट्पक्षे आकारलोपे, षत्वे च **दिदरिद्रिषकः** इति, इडभावपक्षे आकारलोपाभावे **दिदरिद्रासकः** इति च रूपम्। एवमेव सन्नन्ते सर्वत्र रूपद्वयस्योपपत्तिर्ज्ञेया।



दरिद्रिता-त्री, दरिद्रयिता-त्री, दिदरिद्रिषिता-दिदरिद्रासिता-त्री;
[1]दरिद्रत्-दरिद्रतौ-दरिद्रतः, दरिद्रयन्-न्ती, दिदरिद्रिषन्-दिदरिद्रासन्-न्ती;
दरिद्रिष्यन्-न्ती-ती, दरिद्रयिष्यन्-न्ती-ती, दिदरिद्रिषिष्यन्-दिदरिद्रासिष्यन्-न्ती-ती;
— दरिद्र्यमाणः, दरिद्रयिष्यमाणः; —
[2]दरिद्-दरिद्रौ-दरिद्रः; — — —
[3]दरिद्रितम्-तः, दरिद्रितः, दिदरिद्रिषितः-दिदरिद्रासितः-तवान्;
[4]दरिद्रः[A], [5]ददरिद्रवान्, दरिद्रः, दिदरिद्रिषुः-दिदरिद्रासुः;
दरिद्रितव्यम्, दरिद्रयितव्यम्, दिदरिद्रिषितव्यम्-दिदरिद्रासितव्यम्;
दरिद्रणीयम्, दरिद्रणीयम्, दिदरिद्रिषणीयम्-दिदरिद्रासनीयम्;
दरिद्र्यम्, दरिद्र्यम्, दिदरिद्रिष्यम्-दिदरिद्रास्यम्;

1. शतरि, '**जक्षित्यादयः** षट्' (6-1-6) इति अभ्यस्तसंज्ञायाम्, 'श्नाऽभ्यस्तयो**रातः**' (6-4-112) इत्याकारलोपे, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधे रूपमेवम्।
2. क्विपि, रेफस्य संयोगान्तलोपे रूपमेवम्।
3. धातोरस्य सनि इड्विकल्पविधानात्, 'यस्य विभाषा' (7-2-15) इत्यनेन निष्ठायामिण्णिषेधो न शङ्क्यः; तत्र (7-2-15) सूत्रे, 'एकाचः' इत्यनुवृत्तेरस्य चानेकाच्त्वात्। तेनेडागमे रूपमेवम्।
4. 'आत औ णलः' (7-1-34) इत्यत्र 'ओ' कारस्य विधानेनापि 'बभौ' इत्यादिरूपसिद्धेः, 'औ' इति विधानेन, अस्य धातोः आर्धधातुके विवक्षिते लोपः प्रबलः इति ज्ञाप्यते। तेन आदन्तलक्षणः 'श्याऽऽद्व्यध—' (3-1-141) इति कर्तरि णप्रत्ययो न भवति। पारिशेष्यात्, 'इद् **दरिद्रस्य**' (6-4-114) इति निर्देशादपि औत्सर्गिके पचाद्यचि आलोपे च रूपमेवम्। तत्र हि '**दरिद्रस्य**' इत्यस्य **दरिद्र**शब्दप्रकृतेर्धातोरित्यर्थः।
5. 'पपुष आगतं पपिवद्रूप्यम्।' इति **भाष्य** (4-3-24) प्रयोगात् छान्दसस्यापि क्वसोः क्वचिद् भाषायां प्रयोगः। तेन क्वसौ इडागमाभावे रूपमेवम्।
"—'**दरिद्राते**रार्धधातुके लोपः, सिद्धश्च प्रत्ययविधौ' (वा. 6-4-114) इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते, इडागमस्य निमित्तं विहतमिति न इडागमो भवति। **ददरिद्र्वान्** इति भवितव्यम्॥" इति **काशिकायामुक्तम्** (7-2-67) इह स्मर्तव्यम्।

A. 'तं जाग्रतं दीन**दरिद्र**पोषे चकासतं शासतमप्रशान्तान्।' धा. का. 2.52.

[1]ईषद्दरिद्रः-दुर्दरिद्रः-सुदरिद्रः ; —

दरिद्र्यमाणः, दरिद्र्यमाणः, दिदरिद्रिष्यमाणः-दिदरिद्रास्यमानः ;

दरिद्रः, दरिद्रः, दिदरिद्रिषः-दिदरिद्रासः ;

दरिद्रितुम्, दरिद्रयितुम्, दिदरिद्रिषितुम्-दिदरिद्रासितुम् ;

[2]दरिद्रा, दरिद्रणा, दिदरिद्रिषा-दिदरिद्रासा ;

[3]दरिद्राणम्, दरिद्रणम्, दिदरिद्रिषणम्-दिदरिद्रासनम् ;

दरिद्रित्वा, दरिद्रयित्वा, दिदरिद्रिषित्वा-दिदरिद्रासित्वा ;

प्रदरिद्र्य, प्रदरिद्र्य, प्रदिदरिद्रिष्य-प्रदिदरिद्रास्य ;

दरिद्रम् २, दरिद्रित्वा २, } दरिद्रम् २, दरिद्रयित्वा २, } दिदरिद्रिषम् २-दिदरिद्रासम् २ ; दिदरिद्रिषित्वा २-दिदरिद्रासित्वा २ ; }

[4]दर्द्रूः.

(822) **"दल विशरणे"** (I-भ्वादिः-548. सक. सेट्. पर.) **घटादिः** । [अ]

'विदारणे शपि **दलेद्** दालयेदिति णौ दलेः ॥' (श्लो 159) इति **देवः** ।

उद्दालकः-लिका, [5]दलकः-दालकः-लिका, दिदलिषकः-षिका, दादलकः-लिका ;

दलिता-त्री, दलयिता-दालयिता-त्री, दिदलिषिता-त्री, दादलिता-त्री ;

दलिष्यन्-न्ती-ती, दलयिष्यन्-दालयिष्यन्-न्ती-ती, दिदलिषिष्यन्-न्ती-ती ;—

1. अन्तरङ्गत्वेनानैमित्तिक आकारलोपे कृते आदन्तत्वविघातात् '**आतो युच्**' (3-3-128) इति युच्प्रत्ययो न भवति, परं तु खलेव । स्पष्टमिदम्, '**इद् दरिद्रस्य**' (6-4-114) इत्यत्र **कैयटे** ।
2. क्तिन्प्रत्ययविवक्षायामेवाकारलोपात् 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः ।
3. '**दरिद्राणे** न चेष्यते ।' इति **भाष्येष्ट्या** (6-4-114) ल्युटि आकारलोपो न। अनादेशे, सवर्णदीर्घे च णत्वम् ।
4. '**दरिद्रातेर्यालोपश्च**' (द. उ. 1-173) इत्यनेन ऊप्रत्यये, धात्विकाराकारयोर्लोपे च रूपमेवम् । दरिद्रयते शरीरमनयेति **दर्द्रूः**=कुष्ठविकारः ।
5. 'घटादयो मितः' (ग. सू. भ्वादौ) इति मित्संज्ञायाम्, '**मितां ह्रस्वः**' (6-4-92) णावुपधाह्रस्वः । एवं मित्त्वपक्षे ण्यन्ते सर्वत्र ज्ञेयम् । **पाणिनिमते** घटादिष्वस्य पाठाभावात्, मित्त्वाभावपक्षे **दालकः** इत्यादीनि रूपाणीति ज्ञेयम् ।

[अ] '**दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्च**' इति घटादिषु **भोजसम्मतः** पाठः । भ्वादिषु '**दल विशरणे**' इति पठितस्यैव घटादिषु तस्मिन्नेवार्थे मित्त्वार्थोऽनुवाद इति **सिद्धान्तकौमुद्यादितः** ज्ञायते । **मा. धातुवृत्त्यादिषु** तु, '**दल** विदारणे' इति चुरादिषु पठितस्यापि घटादिषु मित्त्वार्थोऽर्थविशेषे **भोजसम्मतः** पाठ इति दृश्यते । उभयथाऽपि नार्थे भेदः ।



— दलयमानः-दालयमानः, — दादल्यमानः ;

— दलयिष्यमाणः, दालयिष्यमाणः — दादलिष्यमाणः ;

प्रदल्-प्रदलौ-प्रदलः ; — — —

दलितम्-तः, दलितः-दालितः, दिदलिषितः, दादलितः-तवान् ;

दलम्, [1]कुद्दालः, दलः-दालः, दिदलिषुः, दादलः ;

दलितव्यम्, दलयितव्यम्-दालयितव्यम्, दिदलिषितव्यम्, दादलितव्यम् ;

दलनीयम्, दलनीयम्-दालनीयम्, दिदलिषणीयम्, दादलनीयम् ;

दाल्यम्, दल्यम्-दाल्यम्, दिदलिष्यम्, दादल्यम् ;

ईषद्दलः-दुर्दलः-सुदलः ; — —

दल्यमानः, दल्यमानः-दाल्यमानः, दिदलिष्यमाणः, दादल्यमानः ;

दालः, [2]दाडि[लि]मम्, दलः-दालः, दिदलिषः, दादलः ;

दलितुम्, दलयितुम्-दालयितुम्, दिदलिषितुम्, दादलितुम् ;

[3]दलितिः, दलना-दालना, दिदलिषा, दादला ;

दलनम्, दलनम्-दालनम्, दिदलिषणम्, दादलनम् ;

दलित्वा, दलयित्वा-दालयित्वा, दिदलिषित्वा, दादलित्वा ;

प्रदल्य, प्रदलय्य-प्रदाल्य, प्रदिदलिष्य, प्रदादल्य ;

दालम् २, दलित्वा २, } दलम् २-दालम् २-दालम् २, दलयित्वा २-दालयित्वा २, } दिदलिषम् २, दिदलिषित्वा २, } दादलम् २ ; दादलित्वा २. }

(823) **"दल विदारणे"** (X-चुरादिः-1752. सक. सेट्. उभ.)

**आस्वदीयः** ।

'विदारणे शपि दलेद् दालयेदिति णौ दलेः ॥' (श्लो. 159) इति **देवः** ।

1. कुं=भूमिं दलतीति **कुद्दालः**=आयुधविशेषः । 'कर्मण्यण्' (3-2-1) इत्यण् । पृषोदरादित्वात् (6-1-110) कुशब्दोत्तरं दकारः प्रवृत्तः ।
2. भावघञन्तात् **दालशब्दात्**, 'निर्वृत्तेऽक्षद्यूतादिभ्यः' (4-4-19) इति प्रकरणे निर्वृत्तार्थे 'भावप्रत्ययान्तादिमब् वक्तव्यः' (वा. 4-4-20) इति इमप्प्रत्ययः ।
3. 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति वचनात् **भणितिः** इत्यादाविवात्रापि इडागमो ज्ञेयः ।

दालकः-लिका, दिदालयिषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि **चौरादिककालयतिवत्** (175) ऊह्यानि ।

## (824) "दशि दंशने" (X-चुरादिः-1675. सक. सेट्. आत्म.)

**आकुस्मीयः ।**

'दंशने दशतीति स्यात् तत्र दंशयते णिचि ॥
भाषणे दंशयेत् .... .... .... ।' (श्लो. 164-5) इति **देवः** ।

दंशकः-शिका, दिदंशयिषकः-षिका, इत्यादिकानि रूपाणि सर्वाण्यपि **चौरादिककुंशयतिवत्** (232) ज्ञेयानि । आकुस्मीयत्वादस्य शानजेव भवति । दंशयमानः, दिदंशयिषमाणः, इति विशेषः ।

## (825) "दशि भाषार्थः" (X-चुरादिः-1765. सक. सेट्. उभ.)

आस्वदीयः । '**भासार्थः**' इति **क्षीरस्वामी** ।

'दंशने दशतीति स्यात् तत्र दंशयते णिचि ॥
भाषणे दंशयेत् .... .... ।' (श्लो. 164-165) इति **देवः** ।

दंशकः-शिका, दिदंशयिषकः-षिका; इत्यादिकानि रूपाणि सर्वाण्यपि **चौरादिककुंशयतिवत्** (232) ज्ञेयानि ।

## (826) "दसि दर्शनदंशनयोः" (X-चुरादिः-1676. सक. सेट्. आत्म.)

**आकुस्मीयः ।**

'दंसयेन् मोक्षणे, दस्येत् क्षये, दंसयते णिचि ॥
दंशदर्शनयोः, दासेर्दाने दासति दासते ।' (श्लो. 186-7) इति **देवः** ।

दंसकः-सिका, दिदंसयिषकः-षिका; इत्यादीनि समस्तान्यपि रूपाणि **चौरादिककुंशयतिवत्** (232) ज्ञेयानि ।

" अत्र '**दस**—' इत्यनिदितमपि **केचित्** पठन्ति । यदाह—'पितेव पुत्रं **दसये** वचोभिः—' इत्यत्र **भट्टभास्करः**—'दसये=संगृह्णामि । '**दस** दंशनदर्शनयोः' चौरादिक उदात्तेत् । व्यत्ययेन वृद्ध्यभावः ।' इति ।" इति **माधवधातुवृत्तौ** ।



'**दस**—' इति पाठमवलम्ब्य, अस्माद्धातोर्निष्ठायाम्, 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' (7-2-27) इत्यनेन इडभावो णिलुक् च निपातितौ । तेन दस्तः, दासितः इति रूपद्वयम् ।

'दंसयेन्मोक्षणे—' इति देवश्लोकात् मोक्षणेऽपि कश्चन **दंस**धातुरस्तीति प्रतीयते । प्रकृतधातुपाठकोशेषु तु न दृश्यते । 'रक्षणे' इत्यर्थे **जसि** धातोरनन्तरं क्वचिदस्योल्लेखः **पुरुषकारे** कृतः ।

इदित्करणाण्णिचो वैकल्पिकत्वम् । णिजभावपक्षे—'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदं शता भवति—[A]प्रदंसन् । 'दसि दंसनदर्शनयोः' '**दंसनम्**=वर्मग्रहणम् ।' इति **धातुकाव्ये** (3-33.) ।

## (827) "दसि भाषार्थः"

(X-चुरादिः-1787. सक. अक. सेट्. उभ. **आस्वदीयः** । )

दंसकः-सिका, दिदंसयिषकः-षिका; इत्यादिकानि समस्तान्यपि रूपाणि **चौरादिककुंशयतिवत्** (232) बोध्यानि ।

## (828) "दसु उपक्षये" (IV-दिवादिः-1213. सक. सेट्.पर.)

'—उपतापे' इति **दशपाद्युणादिवृत्तौ** पाठः ।

'दंसयेन्मोक्षणे, दस्येत् क्षये, दंसयते णिचि ॥
दंशदर्शनयोः, दासेर्दाने दासति दासते ।' (श्लो. 186-187) इति **देवः** ।

दासकः-सिका, दासकः-सिका, दिदसिषकः-षिका, दादसकः-सिका; इत्यादिकानि समस्तान्यपि रूपाणि **दैवादिकक्रसतिवत्** (265) ऊह्यानि । अस्य घटादिषु पाठाभावाण्ण्यन्ते मित्त्वं न प्रवर्तते, इति विशेषः । अस्यापि धातोर्ण्यन्ते 'वा दान्त—' (7-2-27) इत्यादिना णिलुकि इडभावे च **दस्तः, दासितः** इति निपात्यते । [1]दस्युः, [2]दस्रौ ।

---

1. 'यजिमनिशुन्धि**दसि**—' [द. उ. 1.134] इत्यादिना युच्प्रत्ययः । दस्यतीति **दस्युः**=तस्करः ।
2. 'स्फायितञ्चि—' [द. उ. 8-31] इत्यादिना रक्प्रत्ययः । दस्यतीति **दस्रः**=देवभिषक् । पुष्पवन्तशब्दादिवत् नित्यद्विवचनान्तोऽयं शब्दः ।

A. 'लोको हरेर्बलमचेतयमान एतद् युद्धं मृगेन्द्रशशदंशनवत् **प्रदंसन्** ।'
धा. का. 3.33.

(829) **“ दह भस्मीकरणे ”** (I-भ्वादिः-991. सक. अनि. पर.)

दाहकः-हिका, दाहकः-हिका, [1]दिघक्षकः-क्षिका, [2]दन्दहकः-दंदहकः-हिका ;

[3]दग्धा-दग्ध्री, दाहयिता-त्री, दिधक्षिता-त्री, दन्दहिता-त्री ;

दहन्-न्ती, दाहयन्-न्ती, दिघक्षन्-न्ती, [4]दिघक्षयन्[A] ; —

[5]धक्ष्यन्-न्ती-ती, दाहयिष्यन्-न्ती-ती, दिधक्षिष्यन्-न्ती-ती ; —

व्यतिदहमानः, दाहयमानः, — दन्दह्यमानः ;

व्यतिधक्ष्यमाणः, दाहयिष्यमाणः, — दन्दहिष्यमाणः ;

[6]प्रधक्-प्रधग्-प्रदहौ-प्रदहः ; — — —

दग्धम्-दग्धः-दग्धवान्, दाहितः, दिधक्षितः, दन्दहितः-तवान् ;

[7]दहनः, [8]परिदाही, दाहः, दिघक्षुः, दन्दहः ;

दग्धव्यम्, दाहयितव्यम्, दिधक्षितव्यम्, दन्दहितव्यम् ;

दहनीयम्, [9]दहेलिमः, दाहनीयम्, दिघक्षणीयम्, दन्दहनीयम् ;

---

1. ‘**दादेर्धातोर्घः**’ (8-2-32) इति हकारस्य घत्वे, ‘एकाचो बशो भष् झषन्तस्य स्ध्वोः’ (8-2-37) इति भष्भावेन दकारस्य धकारे, ‘खरि च’ (8-4-55) इति चर्त्वे, षत्वे च, **दिधक्षकः** इति रूपम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. ‘लुपसदचरजपजभ**दह**दशगृभ्यो भावगर्हायाम्’ (3-1-24) इति यङ् भावगर्हायाम् । ‘जपजभ**दह**दशभञ्जपशां च’ (7-4-86) इति अभ्यासस्य नुगागमः । ‘स च पदान्तवद् वाच्यः’ (वा. 7-4-85) इति पदान्तवद्भावेन, ‘वा पदान्तस्य’ । (8-4-59) इति परसवर्णविकल्पः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
3. तृचि, घत्वधत्वजश्त्वानि भवन्ति । एवमेव तव्यदादिष्वपि प्रक्रियोह्या ।
4. सन्नन्ताण्णिचि शतरि रूपमेवम् । ‘स्याच्छुद्धा प्रकृतिर्ण्यन्ता सन्नन्ता णिचि सन्परा । यङन्ता यङ्लुगन्ता च नातोऽन्या निष्प्रयोजना ॥’ इति **क्षीरस्वाम्युक्तमिह** ध्येयम् ।
5. घत्वचर्त्वभष्भावषत्वेषु रूपमेवम् ।
6. क्विपि, घत्वभष्भावचर्त्वजश्त्वेषु रूपमेवम् ।
7. नन्द्यादेः (3-1-134) आकृतिगणत्वात् कर्तरि ल्युः । **दहनः**=अग्निः ।
8. ‘सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरि**दह**’ (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययो भवति ।
9. ‘केलिमर उपसंख्यानम्’ (वा. 3-1-96) इति भावकर्मणोः केलिमर् प्रत्ययः ।

A. ‘तं सुस्थयन्तः सचिवा नरेन्द्रं **दिधक्षयन्तः** समुदूहुरारात् ।’ भ. का. 3.33.



दाह्यम्, दाह्यम्, दिधक्ष्यम्, दन्दह्यम् ;

ईषद्दहः-दुर्दहः-सुदहः ; — — —

दह्यमानः, दाह्यमानः, दिधक्ष्यमाणः, दन्दह्यमानः ;

दाहः, [1]निदाघः[A]-अवदाघः, दाहः, दिघक्षः, दन्दहः ;

दग्धुम्, दाहयितुम्, दिधक्षितुम्, दन्दहितुम् ;

दग्धिः, दाहना, दिधक्षा, दन्दहा ;

दहनम्, दाहनम्, दिघक्षणम्, दन्दहनम् ;

दग्ध्वा, दाहयित्वा, दिधक्षित्वा, दन्दहित्वा ;

प्रदह्य, प्रदाह्य, प्रदिधक्ष्य, प्रदन्दह्य ;

दाहम् २, दग्ध्वा २, } दाहम् २, दाहयित्वा २, } दिघक्षम् २, दिधक्षित्वा २, } दन्दहम् २ ; दन्दहित्वा २ ; }

[2]दह्रः.

(830) **“ डु दाञ् दाने ”** (III-जुहोत्यादिः-1091. सक. अनि. उभ.)

‘दाञो दत्ते ददातीति, दाणो यच्छति, दो द्यति ।
दाति दायति दाप्दैपोः, दयते रक्षणे ङितः ॥’ (श्लो. 4 ) इति **देवः** ।

[3]दायकः-यिका, [4]दापकः-पिका, [5]दित्सकः-त्सिका, [6]देदीयकः-यिका ;

दाता-त्री, दापयिता-त्री, दित्सिता-त्री, देदीयिता-त्री ;

---

1. नितरां दहतीति **निदाघः** । घञि, न्यङ्क्वादिषु (7-3-53) ‘संज्ञायां मेघनि**दाघावदाघार्घाः**’ (ग. सू. 7-3-53) इति वचनात् कुत्वम् । **निदाघः**= ग्रीष्मः । **अवदाघः**=भक्ष्यविशेषः । असंज्ञायां तु **निदाहः**, **अवदाहः** इत्येव भवति ।
2. ‘स्फायितञ्चि—’ [द. उ. 8.31] इत्यादिना रक्प्रत्ययः । **दह्रः**=अग्निः सूर्यो वा ।
3. ‘**आतो** युक् चिण्कृतोः’ (7-3-33) इति युगागमः । एवं घञादिष्वपि ज्ञेयम् ।
4. ‘अर्तिह्रीव्लीरीक्नूयीक्ष्माय्**यातां** पुग् णौ’ (7-3-36) इति ण्यन्ते सर्वत्र पुगागमः ।
5. ‘**दाधा** घ्वदाप्’ (1-2-20) इति घुसंज्ञायाम्, ‘सनि मीमा**घु**—’ (7-4-54) इति सन्नन्ते इस् । ‘सः स्यार्धधातुके’ (7-4-49) इति तकारे, ‘अत्र लोपोऽभ्यासस्य’ (7-4-58) इत्यभ्यासलोपः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
6. ‘**घुमास्था**—’ (6-4-66) इत्यादिना ईत्वम् । द्वित्वादिकम् । ‘गुणो यङ्लुकोः’ (7-4-82) इति अभ्यासे गुणो भवति । एवं यङन्ते सर्वत्र ज्ञेयम् ।

A. ‘कृत्वा स कृत्यं दशनांशुगौरं कृष्णं ययौ दैत्य**निदाघ**मेघम् ॥’ धा. का. 2.40.

[1]ददत्-[A]ददतौ-ददतः, [आस्यं] व्याददत्, [भिक्षां] आददत्, [विपादिकां] [2]व्याददत्, दापयन्-न्ती, दित्सन्-न्ती ; — —
दास्यन्-न्ती-ती, दापयिष्यन्-न्ती-ती, दित्सिष्यन्-ती ; —
ददानः, [विद्यां] [3]आददानः, [पिपीलिका पतङ्गस्य मुखं] [4]व्याददानः, दापयमानः, दित्समानः, [विद्यां] [5]आदित्समानः, देदीयमानः ;
दास्यमानः, आदास्यमानः, दापयिष्यमाणः, दित्सिष्यमाणः, देदीयिष्यमाणः ;
प्रदाः-प्रदौ-प्रदाः ; — —
[6]दत्तम्-दत्तः-दत्तवान्, [7]मनसादत्ता, [8]प्रत्तम्- [9]नीत्तम्-सूत्तम्-[10]मरुत्तः, [11]अवदत्तम्-विदत्तम्-प्रदत्तम्-सुदत्तम्-अनुदत्तम्-निदत्तम्, अवत्तम्-अनूत्तम्, दापितः, [B]दित्सितः, देदीयितः-तवान् ;

---

1. शतरि, '**जुहोत्यादिभ्यः** श्लुः' (2-4-75) इति शपः श्लौ, 'श्लौ' (6-1-10) इति द्वित्वे, उत्तरखण्डे, 'श्नाभ्यस्तयो**रातः**' (6-4-112) इत्याकारलोपे, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः। 'अनास्यविहरणे' (1-3-20) इति पर्युदासात्, 'आस्यं, **व्याददत्**' इत्यत्र शतैव। एवं आङो ङिद्विशिष्टस्य ग्रहणात् भिक्षा**माददत्** इत्यत्रापि शतैव।
2. 'आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः' (काशिका. 1-3-20) इति वचनात् विपादिकां **व्याददत्** इत्यत्र शतैव।
3. 'आङो **दो**ऽनास्यविहरणे' (1-3-20) इति परगामिनि क्रियाफलेऽपि शानच्।
4. 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' (वा. 1-3-20) इति शानच्।
5. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तादाङ्पूर्वकात् शानच्।
6. '**दो** दद्घोः' (7-4-46) इति तादौ किति प्रत्यये परतः '**दथ्**' इत्यादेशः। थकारस्य चर्त्वेन तकारः। तथा चोक्तम्—'तान्ते दोषो दीर्घत्वं स्यात्, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्तिः, निर्दोषत्वात् थान्तो ग्राह्यः॥' (भाष्यम्—7-4-46) इति। एवं क्तिन्प्रभृतिष्वपि ज्ञेयम्।
7. 'मनसः संज्ञायाम्' (6-3-4) तृतीयाया अलुक्।
8. निष्ठायाम् 'अच उपसर्गात् तः' (7-4-47) इति धातोस्तकारे रूपमेवम्।
9. 'द्यस्ति' (6-3-124) इत्यनेनात्र निष्ठायां तकारादेशे इगन्तस्योपसर्गस्य दीर्घः।
10. '**मरुत** उपसंख्यानम्' (वा. 1-4-59) इति **मरुच्छब्द**स्योपसर्गसंज्ञायाः विधानसामर्थ्यात्, अनजन्तत्वेऽपि 'अच उपसर्गात् तः' (7-4-47) इति तकारादेशः।
11. '**अवदत्तं विदत्तं** च **प्रदत्तं** चादिकर्मणि। **सुदत्तमनुदत्तं** च **निदत्त**मिति चेष्यते॥' (भाष्यम् 7-4-46) इति **भाष्येष्ट्या** न धातोस्तकारादेशः। अत्र चकारस्य समुच्चयार्थकत्वात् **अवत्तम्** इत्यादयोऽपि यथासम्भवं साधवः।
A. 'अमेयधामा स जहेऽघहानिं **ददज्ज**नेभ्यो मुदमादधानः॥' धा. का. 2-54.
B. 'अन्वेषयन् **दित्सित**दक्षिणोऽहमाचार्यसान्दीपिनिसूनुरुत्तम्।' धा. अ. 18.109.



[1]प्रदः, [2]ददः-[A]दायः, [3]गोदः, [गवां गोषु वा] [4]दायादः, [5]कम्बलप्रदः, [6]उपदाः, [7]सुदामा-सुदीवा-गोदावरी, [8]ग्रामदायी, [9]शापदायी, [10]साधुदायी, [11]कर्णदायी, [12]विद्यादायी, [13]ददिवान्, [14]दाता, [15]दारुः, [16]ददिः [गाः], [17]दायको [व्रजति], [18]अश्वदायः, [19]दानीयः [ब्राह्मणः],

---

1. '**आत**श्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः। '**आतो** लोप इटि च' (6-4-64) इत्यकारलोपः।
2. '**ददाति**दधात्योर्विभाषा' (3-1-139) इति कर्तरि शप्रत्ययः। 'कर्तरि शप्' (3-1-68) इति शपि, तस्य, '**जुहोत्यादिभ्यः**—' (2-4-75) इति श्लौ, 'श्लौ' (6-1-10) इति द्विर्वचने, 'श्नाभ्यस्तयो**रातः**' (6-4-112)इत्याकारलोपे च **ददः** इति रूपम्। अस्य शप्रत्ययस्य वैकल्पिकत्वात् पक्षे, 'श्याऽऽद्व्यध—' (3-1-141) इति कर्तरि णप्रत्यये, युगागमे च **दायः** इति रूपम्।
3. '**आतो**ऽनुपसर्गे कः' (3-2-3) इति कर्मण्युपपदेऽणोऽपवादः कप्रत्ययः। आकारलोपः।
4. दायमादत्ते इति **दायादः**। 'मूलविभुजादिभ्य उपसंख्यानम्' (वा. 3-2-5) इति सोपसर्गात् धातोः कर्मण्युपपदे कप्रत्ययः। 'स्वामीश्वराधिपति**दायाद**—' (2-3-39) इति षष्ठीसप्तम्यौ।
5. '**प्रे दाज्ञः**' (3-2-6) इति प्रोपसृष्टादस्मात् कर्मण्युपपदे कप्रत्ययः।
6. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति विचि रूपमेवम्।
7. '**आतो** मनिन्क्वनिब्वनिपश्च' (3-2-74) इत्यनेन क्रमेण मनिनि, क्वनिपि, वनिपि च **सुदामा-सुदीवा-गोदावरी** इति रूपाणि। तत्र **सुदीवा** इत्यत्र प्रत्ययस्य कित्त्वादीकारः प्रकृतेः। **गोदावरी** इत्यत्र 'वनो र च' (4-1-7) इत्यनेन स्त्रियां ङीब्-रेफादेशौ भवतः, इति विशेषः।
8. 'क्विप् च' (3-2-76) इत्यनेन कर्मोपपदादस्मात् क्विप्प्रत्ययः।
9. 'सुप्यजातौ—' (3-2-78) इति णिनिप्रत्ययः। युगागमः।
10. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः।
11. 'कर्तर्युपमाने' (3-2-79) इति णिनिः। कर्ण इव ददातीत्यर्थः।
12. 'व्रते' (3-2-80) इति णिनिः। यो विद्यादानं व्रतत्वेनाचरति, स एवमुच्यते।
13. क्वसौ, द्विर्वचने, आकारलोपे, 'वस्वेकाजाद्घसाम्' (7-2-76) इतीडागमे रूपम्।
14. 'तृन्' (3-2-135) इति तच्छीलादिषु कर्तृषु तृन्। दानशील एवमुच्यते।
15. '**दा**धेट्सिशदसदो रुः' (3-2-159) इति तच्छीलतद्धर्मतत्साधुकारिषु रुः।
16. '**आदृ**गम—' (3-2-171) इति किः, किन् वा प्रत्ययः। तस्य लिड्वद्भावातिदेशात् द्वित्वादिकार्यम्।
17. क्रियार्थायां क्रियायाम्, 'तुमुन्ण्वुलौ—' (3-3-10) इति ण्वुलि युगागमः।
18. 'अण् कर्मणि च' (3-3-12) इति क्रियार्थायां क्रियायां कप्रत्ययापवादोऽण् प्रत्ययः।
19. दीयतेऽस्मै, इति **दानीयो** विप्रः। सम्प्रदाने, 'कृत्यल्युटो बहुलम्' (3-3-113) इति अनीयर्।
A. '**ददैः** दुःखस्य मातृभ्यो धायैरामोदमुत्तमम्।' भ. का. 6. 80.

[1]दाता, [2]अवश्यंदायी-शतंदायी, [3]देवदत्तः, [4]आदिः, [5]अन्तर्दिः, दापः, दित्सुः, [6]देद्यः ;

दातव्यम्, दापयितव्यम्, दित्सितव्यम्, देदीयितव्यम् ;
दानीयम्, दापनीयम्, दित्सनीयम्, देदीयनीयम् ;
[7]देयम्, दाप्यम्, दित्स्यम्, देदीय्यम् ;
[8]ईषद्दानः-दुर्दानः-सुदानः ;
दीयमानः, दाप्यमानः, दित्स्यमानः, देदीय्यमानः ;
दायः, दापः, दित्सः, देदीयः ;
दातुम्, दापयितुम्, दित्सितुम्, देदीयितुम् ;
दत्तिः, [9]उपदा, दापना, [A]दित्सा, देदीया ;
दानम्, [10]दत्त्रिमम्[B], दापनम्, दित्सनम्, देदीयनम् ;
दत्त्वा, दापयित्वा, दित्सित्वा, देदीयित्वा ;
[11]प्रणिदाय, प्रदाप्य, प्रदित्स्य, प्रदेदीय्य ;

---

1. 'अर्हे कृत्यतृचश्च' (3-3-169) इति अर्हार्थे तृच्। दातुमर्हो **दाता**।
2. 'आवश्यकाधमर्ण्ययोर्णिनिः' (3-3-170) इति क्रमेणार्थद्वये णिनिप्रत्ययः।
3. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति क्तप्रत्ययः।
4. 'उपसर्गे **घोः** किः' (3-3-92) इति किप्रत्ययः। आ-दीयते इत्या**दिः** कारणम्।
5. '**अन्तः**शब्दस्य अङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्' (वा. 1-4-65) इति वचना-दुपसर्गत्वात् किप्रत्ययः।
6. यङन्तात् पचाद्यचि, यङो लुकि, 'एरनेकाचः—' (6-4-82) इति यण्।
7. 'ईद् यति' (6-4-65) इति धातोरीकारे गुणे च रूपमेवम्।
8. ईषदाद्युपपदेषु, '**आतो** युच्' (3-3-128) इति युचि, अनादेशः।
9. '**आत**श्चोपसर्गे' (3-3-106) इत्यङ्प्रत्ययः।
10. '**ड्वितः** क्त्रिः' (3-3-88) इति क्त्रिप्रत्यये, 'त्रेर्मप् नित्यम्' (4-4-20) इति मप् नित्यम्। दद्भावश्च भवति।
11. 'न ल्यपि' (6-4-69) इतीत्वनिषेधः। 'नेर्गदनदपतपदघुमा—' (8-4-17) इति प्रोत्तरस्य नेर्णत्वम्।

A. 'नंनम्यमानाः फल**दित्सयेव** चकाशिरे तत्र लता विलोलाः॥' भ. का. 2. 25.
B. 'निष्ठां गते **दत्त्रिम**सभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः।' भ. का. 1.13.



दायम् २, दापम् २, दित्सम् २, देदीयम् २ ;
दत्त्वा २, दापयित्वा २, दित्सित्वा २, देदीयित्वा २ ;
[1]दानुः, [2]देष्णः.

(831) "**दाण् दाने**" (I-भ्वादिः-930. सक. अनि. पर.) [अ]

'दाञो दत्ते ददातीति, दाणो यच्छति, दो द्यति।
दाति दायति दाप्दैपोः, दयते रक्षणे ङितः॥' (श्लो. 4) इति देवः।

दायकः-यिका, दापकः-पिका, दित्सकः-त्सिका, देदीयकः-यिका ;
दाता-त्री, दापयिता-त्री, दित्सिता-त्री, देदीयिता-त्री ;
[3]प्रणियच्छन्-न्ती, [पाणिना] सम्प्रयच्छन्, [ब्राह्मणीभ्यः] सम्प्रयच्छन्, दापयन्-दित्सन्-न्ती ; —
दास्यन्-न्ती-ती, दापयिष्यन्-न्ती-ती, दित्सिष्यन्-न्ती-ती ; —
[दास्या मालां] [4]संयच्छमानः-सम्प्रयच्छमानः, दापयमानः, [दास्या मालां] [5]सन्दित्समानः, देदीयमानः ;

---

1. '**दा**भाभ्यां नुः' [द. उ. 1-143] इति नुप्रत्ययः। **दानुः**=दक्षिणार्थं धनम्।
2. 'गा**दाभ्यां** चेष्णक्' [द. उ. 5-48] इति चेष्णक्प्रत्ययः। ददातीति **देष्णः**=दानशीलः। **माधवधातुवृत्तौ** तु **देष्णुः** इति रूपमौणादिकं साधितम्।
3. शतरि, 'पाघ्राध्मास्थाम्ना**दाण्**दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमन**यच्छ**—' (7-3-78) इत्यादिना यथासम्भवं शिति प्रत्यये परतः **यच्छा**देशे, 'नेर्गदनदपतपदघुमा—' (8-4-17) इत्यादिना णत्वे च रूपम्। अत्रेदमवधेयम्।
'**दाण**श्च सा चेच्चतुर्थ्यर्थे' (1-3-55) इत्यत्र चतुर्थ्यर्थे विद्यमानायाः तृतीयाया योगे एव आत्मनेपदविधानात्, शुद्धतृतीयान्ते 'पाणिना **सम्प्रयच्छन्**' इति वाक्ये न शानच्। एवं अशिष्टव्यवहार एव निरुक्तसूत्रप्रवृत्त्या, शिष्टव्यवहारे तु 'ब्राह्मणीभ्यः **संप्रयच्छन्**' इत्यत्रापि न शानजिति ज्ञेयम्।
4. '**दाण**श्च सा चेत् चतुर्थ्यर्थे' (1-3-55) इति शानच्। अनेनैव सूत्रेण चतुर्थ्यन्तस्य 'दास्या' इत्यस्य तृतीया च भवति। अत्र च, 'अशिष्टव्यवहार इति वक्तव्यम्' (वा. 1-3-55) इति वचनात् अशिष्टव्यवहार एवैवं भवति। **अशिष्टव्यवहारः**=शिष्टसम्मतो यो न भवति, सः।
5. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्ताच्छानश्।

[अ] पूर्वलिखित**दाञ्**धातोः, अस्यापि सर्वत्र प्रत्ययेषु रूपसाम्यात् तत्र लिखितान्येव टिप्पणान्यस्यापि संगतानीति यथासम्भवं तत्रतत्र, रूपनिष्पत्तिर्ज्ञातव्येति मत्वाऽत्र पृथङ् न लिखितानि।

संदास्यमानः, दापयिष्यमाणः, संदित्सिष्यमाणः, देदीयिष्यमाणः ;
धनदाः-धनदौ-धनदाः ; — —
दत्तम्-दत्तः-दत्तवान्, मनसादत्ता, [A]व्यात्तम्, प्रत्तम्-नीत्तम्-सूत्तम्-मरुत्तः, अवदत्तम्-प्रदत्तम्-विदत्तम्-सुदत्तम्-निदत्तम्, अनुदत्तम्-अवत्तम्-अनूत्तम्,
दापितः, दित्सितः, देदीयितः-तवान् ;
प्रदः, दायः, [B]इष्टदः-नर्मदा, अब्दः, [गवां गोषु वा] [C]दायादः, [D]विश्वासप्रदः, उपदाः, सुदामा-सुदीवा-गोदावरी, शर्मदाः, [E]शापदायी, साधुदायी, कर्णदायी, मोक्षदायी, ददिवान्, दाता, दारुः, दायको [व्रजति], [F]भयदायः, कम्बलदायः, गोदायो [वा व्रजति], दानीयः [ब्राह्मणः], दाता; अवश्यंदायी, सहस्रंदायी, प्रदायी, यज्ञदत्तः, आदिः, अन्तर्दिः, दापः,
दित्सुः, देद्यः ;
दातव्यम्, दापयितव्यम्, दित्सितव्यम्, देदीयितव्यम् ;
दानीयम्, [1]दथेलिमम्, दापनीयम्, दित्सनीयम्, देदीयनीयम् ;
देयम्, दाप्यम्, दित्स्यम्, देदीय्यम् ;
ईषद्दानः-दुर्दानः-सुदानः ; — — —
दीयमानः, दाप्यमानः, दित्स्यमानः, देदीय्यमानः ;
दायः, दापः, दित्सः, देदीयः ;
दातुम्, दापयितुम्, दित्सितुम्, देदीयितुम् ;

---

1. 'केलिमर उपसंख्यानम्' (वा. 3-1-96) इति केलिमर्प्रत्ययः। केलिमर्प्रत्ययस्य कित्वात् घुसंज्ञकस्यास्य धातोः '**दो दद्घोः**' (7-4-46) इति '**दथ्**' इत्यादेशः। तत्र च 'तान्ते दोषो दीर्घत्वं स्यात्, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्तिः, निर्दोषत्वात् **थान्तो** ग्राह्यः ॥' (भाष्यम् 7-4-46) इत्युक्तत्वात् थकारान्त आदेश इति ज्ञेयम्।

A. 'ध्वान्तेऽपि **व्यात्त**वक्त्रज्वलदनलशिखाजर्जरैर्व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताटकेयम् ॥' अनर्घराघवे-2-54.

B. 'तिष्ठन्निहाम्नायग**मिष्टदं** तमस्तौत् स्फुटेनाहतधीः स्वरेण ॥' धा. का. 2.33.

C. 'स्थितः प्रास्तस्य **दायादैः** भ्रातुर्ज्येष्ठस्य शासने ॥' किरातार्जुनीये 11-45.

D. '**विश्वासप्रद**वेषोऽसौ पथिप्रज्ञः समाहितः।' भ. का. 6.90.

E. 'कैलासशैलचलनागसि **शापदायी** नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥'
चम्पूरामायणे-5-47.

F. 'पूरयन्तः समाजग्मु**र्भयदाया** दिशो दश ॥' भ. का. 7.30.



दत्तिः, प्रदा, दापना, दित्सा, देदीया ;
प्रणिदानम्, दापनम्, दित्सनम्, देदीयनम् ;
दत्त्वा, दापयित्वा, दित्सित्वा, देदीयित्वा ;
प्रदाय, प्रदाप्य, प्रदित्स्य, प्रदेदीय्य ;
दायम् २, दत्त्वा २, } दापम् २, दापयित्वा २, } दित्सम् २, दित्सित्वा २, } देदीयम् २ ; देदीयित्वा २. }

## (832) "**दान खण्डने**" (I-भ्वादिः-994. सक. सेट्. उभ.)

[1]दीदांसकः-सिका, [2]दीदांसकः-सिका, [3]दीदांसिषकः-षिका, [4]दानकः-निका ;
दीदांसिता-त्री, दीदांसयिता-त्री, दानिता-त्री ;
दीदांसन्-न्ती, दीदांसयन्-न्ती, दानयन्-न्ती ;
दीदांसिष्यन्-न्ती-ती, दीदांसयिष्यन्-न्ती-ती, दानयिष्यन्-न्ती-ती ;
दीदांसमानः, दीदांसयमानः, दानयमानः ;
दीदांसिष्यमाणः, दीदांसयिष्यमाणः, दानयिष्यमाणः ;
दीदान्-दीदांसौ दीदांसः ; — —
दीदांसितः, दीदांसयितः-तवान्, दानितः-तवान् ;
[A]दीदांसुः, दीदांसयिषुः, दानः ;
दीदांसितव्यम्, दीदांसयितव्यम्, दानयितव्यम् ;
दीदांसनीयम्, दीदांसनीयम्, दानीयम् ;

---

1. 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (3-1-6) इत्यनेन धातोः स्वार्थे सन्, अभ्यासस्य दीर्घश्च विधीयते। दानेरस्यार्जवे सन्। अस्य सनः 'धातोः' (3-1-91) इति विहितत्वाभावेनानार्धधातुकत्वादिडागमो न भवति। एवं स्वार्थसन्नन्तात् सर्वत्र प्रक्रिया ज्ञेया।

2. नित्यसन्नन्ताण्णिचि रूपमेवम्। एवमेव सर्वत्र ण्यन्ते ज्ञेयम्।

3. 'सरूपः प्रत्ययो नेष्टः, सन्नन्तान् न सनिष्यते ॥' (भाष्यम् 3-1-7) इत्युक्त्या, स्वार्थसन्नन्तादस्मात् इच्छासन् तु भवत्येव। इच्छासन्नन्ते सर्वत्र तृजादावपि **दीदांसिषिता-त्री** इत्यादीनि रूपाणि यथासम्भवमेवमेवोह्यानि। अत्र **कित**धातौ (192) तृतीयरूपाणीव सर्वाणि प्रायो ज्ञेयानि।

4. 'अर्थान्तरेऽननुबन्धकाश्चुरादयः' (सिद्धान्तकौमुद्याम्) इत्युक्त्या खण्डनार्थे तु चौरादिकत्वात् शुद्धण्यन्ताद्रूपाणीमानि प्रदर्शितानि।

A. 'मोहं चिकित्सन् वचसाऽस्य कृष्णो **दीदांसु**चित्तस्य सुविस्मितस्य।'
धा. का. 2.41.

दीदांस्यम्, दीदांस्यम्, दान्यम्;
ईषद्दीदांसः-दुर्दीदांसः-सुदीदांसः; — —
दीदांस्यमानः, दीदांस्यमानः, दान्यमानः;
दीदांसः, दीदांसः, दानः;
दीदांसितुम्, दीदांसयितुम्, दानयितुम्;
दीदांसा, दीदांसना, दानना;
दीदांसनम्, दीदांसनम्, दाननम्;
दीदांसित्वा, दीदांसयित्वा, दानयित्वा;
प्रदीदांस्य, प्रदीदांस्य, प्रदान्य;
दीदांसम् २, दीदांसित्वा २, } दीदांसम् २, दीदांसयित्वा २, } दानम् २; दानयित्वा २. }

(833) "दाप् लवने" (II-अदादिः-1059. सक. अनि. पर.)

'दाञो दत्ते ददातीति, दाणो यच्छति दो द्यति।
दाति दायति दाप्दैपोः, दयते रक्षणे ङितः ॥' (श्लो. 4) इति देवः।

दायकः-यिका, दापकः-पिका, दिदासकः-सिका, दादायकः-यिका;
दाता-त्री, दापयिता-त्री, दिदासिता-त्री, दादायिता-त्री;
[1]प्रणिदान्-प्रनिदान्-ती-न्ती,[A] दापयन्-न्ती, दिदासन्-न्ती; ——
प्रणिदास्यन्-प्रनिदास्यन्-न्ती-ती, दापयिष्यन्-न्ती-ती, दिदासिष्यन्-न्ती-ती;
प्रदाः-प्रदौ-प्रदाः; —— —— ——
अवदातम्-दातः, दापितः, दिदासितः, दादायितः-तवान्;
[2]प्रदः, दापः, दिदासुः, [3]दादाः;

1. 'अदाप्' (1-1-20) इति पर्युदासात् अस्य धातोर्घुसंज्ञाप्रयुक्तानि कार्याणि न भवन्ति। तेन शतरि, 'अदिप्रभृतिभ्यः शपः—' (2-4-72) इति शपो लुकि, सवर्णदीर्घे, स्त्रियाम्, 'आच्छीनद्योः—' (7-1-80) नुम्विकल्पे च रूपम्। 'शेषे विभाषा—' (8-4-18) इति 'नि' इत्यस्य णत्वविकल्पः।
2. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः। निदर्शनार्थं कर्तरि प्रत्ययेष्वेकमिह दर्शितम्। 'दाण्' धातोः (831) कर्तरि प्रत्यये प्रदर्शितानि सर्वाण्यपि रूपाणि प्रायोऽस्यापि भवन्ति।
3. यङन्तात् पचाद्यचि, यङो लुकि सवर्णदीर्घे च रूपमेवम्।

A. 'पान्त्यः शिशून् धान्यधनानि रान्त्यो लान्त्यश्च काश्चित् कुसुमानि दान्त्यः ॥'
धा. का. 2. 49.



दातव्यम्, दापयितव्यम्, दिदासितव्यम्, दादायितव्यम्;
दानीयम्, दापनीयम्, दिदासनीयम्, दादायनीयम्;
देयम्, दाप्यम्, दिदास्यम्, दादाय्यम्;
ईषद्दानः-दुर्दानः-सुदानः; —— ——
दायमानः, दाप्यमानः, दिदास्यमानः, दादाय्यमानः;
दायः, दापः, दिदासः, दादायः;
दातुम्, दापयितुम्, दिदासितुम्, दादायितुम्;
दातिः-प्रदा, दापना, दिदासा, दादाया;
दानम्, [1]दात्रम्, दापनम्, दिदासनम्, दादायनम्;
दात्वा, दापयित्वा, दिदासित्वा, दादायित्वा;
प्रदाय, प्रदाप्य, प्रदिदास्य, प्रदादाय्य;
दायम् २, दात्वा २, } दापम् २, दापयित्वा २, } दिदासम् २, दिदासित्वा २, } दादायम् २; दादायित्वा २. }

(834) "दाश हिंसायाम्" (V-स्वादिः-1279. सक. सेट्. पर.)

छान्दसः।

दाशकः-शिका, दाशकः-शिका, दिदाशिषकः-षिका, दादाशकः-शिका;
इत्यादीनि सर्वाण्यपि रूपाणि उत्तरत्र विलेख्यमानदानार्थकदाशृ (835) धातुवद् बोध्यानि। अस्य धातोः परस्मैपदित्वात् स्वादित्वाच्च शतरि दाश्नुवन्-ती, इति रूपमिति विशेषः। शानज् न भवति।

(835) "दाशृ दाने" (I-भ्वादिः-882. सक. सेट्. उभ.)

दाशकः-शिका, दाशकः-शिका, दिदाशिषकः-षिका, दादाशकः-शिका;
दाशिता-त्री, दाशयिता-त्री, दिदाशिषिता-त्री दादाशिता-त्री;
दाशन्-न्ती, दाशयन्-न्ती, दिदाशिषन्-न्ती; ——
दाशिष्यन्-न्ती-ती, दाशयिष्यन्-न्ती-ती, दिदाशिषिष्यन्-न्ती-ती; ——
दाशमानः, दाशयमानः, दिदाशिषमाणः, दादाश्यमानः;
दाशिष्यमाणः, दाशयिष्यमाणः, दिदाशिषिष्यमाणः, दादाशिष्यमाणः;

1. 'दाम्नीशस—' (3-2-182) इत्यादिना करणे ष्ट्रन्प्रत्ययः। षित्वात् स्त्रियाम्, 'षिद्गौरादिभ्यः—' (4-1-41) इति ङीष्।

[1]दाट्-दाड्-दाशौ-दाशः ; — —
दाशितम्-तः, दाशितः, दिदाशिषितः, दादाशितः-तवान् ;
[2]दाशः[A], [3]दाश्वान्, प्रदाशी, दाशः, दिदाशिषुः, दादाशः ;
दाशितव्यम्, दाशयितव्यम्, दिदाशिषितव्यम्, दादाशितव्यम् ;
दाशनीयम्, दाशनीयम्, दिदाशिषणीयम्, दादाशनीयम् ;
दाश्यम्, दाश्यम्, दिदाशिष्यम्, दादाश्यम् ;
ईषद्दाशः-[4]दूडाशः-सुदाशः ; — — —
दाश्यमानः, दाश्यमानः, दिदाशिष्यमाणः, दादाश्यमानः ;
दाशः, [5]पुरोडाशः, दाशः, दिदायिषः, दादाशः ;
दाशितुम्, दाशयितुम्, दिदाशिषितुम्, दादाशितुम् ;
दाशा, दाशना, दिदाशिषा, दादाशा ;
दाशनम्, दाशनम्, दिदाशिषणम्, दादाशनम् ;
दाशित्वा, दाशयित्वा, दिदाशिषित्वा, दादाशित्वा ;
प्रदाश्य, प्रदाश्य, प्रदिदाशिष्य, प्रदादाश्य ;
दाशम् २, दाशित्वा २, } दाशम् २, दाशयित्वा २, } दिदाशिषम् २, दिदाशिषित्वा २, } दादाशम् २ ; दादाशित्वा २. }

(836) " **दास्ट दाने** " (I-भ्वादिः-894. सक. सेट्. उभ.)

'दंसयेन्मोक्षणे, दस्येत् क्षये दंसयते णिचि ॥
दंशदर्शनयोः, दासेर्दाने दासति दासते ।' (श्लो 186-187) इति देवः ।
दासकः-सिका, दासकः-सिका, दिदासिषकः-षिका, दादासकः-सिका ;

---

1. क्विपि, 'व्रश्चभ्रस्ज—' (8-2-36) इत्यादिना षत्वे, जश्त्वचर्त्वयो रूपम् ।
2. दाश्यतेऽस्मै इति सम्प्रदाने पचाद्यच् । '**दाशगोघ्नौ** सम्प्रदाने' (3-4-73) इति वचनात् सम्प्रदाने प्रत्ययोऽयम् ।
3. '**दाश्वान्** साह्वान् मीढ्वांश्च' (6-1-12) इति क्वसुप्रत्यये इडभावः, द्वित्वाभावश्च भाषायामपि निपातितः ।
4. 'दुरो **दाश**नाशदभध्येषु षत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्' (वा. 6-3-109) इति वचनात् षत्व - उत्तरपदादिष्टुत्व - डलोपदीर्घेषु रूपमेवम् ।
5. पुरो दाश्यते इति **पुरोडाशः**=चरुविशेषः । '**पौरोडाशपुरोडाशात्** ष्ठन्' (4-3-70) इति सूत्रे निपातनात् ष्टुत्वम् ।

A. 'चाट्या व्ययद्**दाश**विलोकभेषभ्रेषज्झषा यासदघं स्पशन्ती ॥' धा. का. 2.27.



इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखित**कासृ**धातुवत् (188) ज्ञेयानि । अस्य धातोः परस्मैपदित्वात् शतरि एवं रूपमिति विशेषः—दासन्-न्ती, दासयन्-न्ती ; इति ।

(837) " **दिवि प्रीणने** " (I-भ्वादिः-592. सक. सेट्. पर.)

'अर्दने देवयेद्, दीव्येत् क्रीडादौ, परिकूजने ॥
देवयेत, इदितो दिन्वेत्, देवेर्देवेत देवने ।' (श्लो. 160-161) इति **देवः** ।
दिन्वकः-न्विका, दिन्वकः-न्विका, दिदिन्विषकः-षिका, देदिन्वकः-न्विका ;
इत्यादीनि सर्वाणि रूपाणि **जिवि**धातुवत् (604) ज्ञेयानि । [A]दिन्वन् ।

(838) " **दिवु क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु** " (IV-दिवादिः-1107. सक. सेट्. पर.)

**व्यवहारः**=क्रयविक्रयादिः । यथासम्भवं सकर्मकत्वाकर्मकत्वे बोध्ये ।
'अर्दने देवयेत्, दीव्येत् क्रीडादौ, परिकूजने ॥
देवयेत, इदितो दिन्वेत्, देवेर्देवेत देवने ।' (श्लो. 160-161) इति **देवः** ।
देवकः-विका, देवकः-विका, [1]दिदेविषकः-दुद्यूषकः-षिका, [2]देदिवकः-विका ;
देविता-त्री, देवयिता-त्री, दिदेविषिता-दुद्यूषिता-त्री, देदिविता-त्री ;

---

1. 'सनीवन्तर्ध—' (7-2-49) इत्यादिना इवन्तत्वेन सन्नन्ते इड्विकल्पः । इट्पक्षे रूपमेवम् । इडभावपक्षे, 'च्छ्वोः शूडनुनासिके च' (6-4-19) इत्यूठि, यणादेशे, द्विर्वचने च, 'हलन्ताच्च' (1-2-10) इति सनः कित्वेन गुणनिषेधः । एवं सन्नन्ते सर्वत्र रूपद्वयस्यापि गतिरिति ज्ञेयम् ।
2. यङन्तात् ण्वुलि, अल्लोपयलोपयोः कृतयोः पूर्वखण्डे, 'गुणो यङ्लुकोः' (7-4-82) इति गुणः । एवमेव यङन्ते सर्वत्र प्रक्रिया ज्ञेया । 'वकारान्तानामूड्भाविनां यङ्लुक् नास्ति' इति **भाष्यकार**वचनात् अस्य धातोः यङन्ते पचाद्यच् न भवति इति ज्ञेयम् ।

A. 'हिन्वन्तमाभीरकुलं विलासिनी**दिन्वन्त**माधिन्वितदेवमण्डलम् ॥' धा. का. 1.75.

[1]दीव्यन्-न्ती, [अक्षैः, अक्षान् वा] [2]दीव्यन्, [शतस्य] [3]दीव्यन्, [शतस्य शतं वा] [4]प्रतिदीव्यन्, देवयन्, [A]दिदेविषन्-दुद्यूषन्-न्ती ; —
देविष्यन्-न्ती-ती, देवयिष्यन्-न्ती-ती, दिदेविषिष्यन्-दुद्यूषिष्यन्-न्ती-ती ;
[5]व्यतिदीव्यमानः, देवयमानः, [6]व्यतिदिदेविषमाणः-व्यतिदुद्यूषमाणः, [7]देदीव्यमानः ;
व्यतिदेविष्यमाणः, देवयिष्यमाणः, व्यतिदिदेविषिष्यमाणः-व्यतिदुद्यूषिष्यमाणः, देदिविष्यमाणः ;
[8]अक्षद्यूः-मृगद्यूः-[B]मृगद्युवौ-मृगद्युवः, [9]द्यूः-द्य्वौ-द्य्वः ; —
[10]आद्यूनः,[C] द्यूतम्-द्यूतः-द्यूतवान्, देवितः, दिदेविषितः-दुद्यूषितः, देदिवितः-तवान् ;

---

1. शतरि, '**दिवादिभ्यः** श्यन्' (3-1-69) इति श्यन्। 'हलि च' (8-2-77) इति दीर्घः। स्त्रियाम्, 'शप्**श्यनो**र्नित्यम्' (7-1-81) इति नित्यं नुमागमः। एवं यकि, ल्यपि च दीर्घो ज्ञेयः।
2. '**दिवः** कर्म च' (1-4-43) इति साधनस्य वा कर्मसंज्ञा। तेन अक्षशब्दात् तृतीयाद्वितीये भवतः।
3. '**दिवस्तदर्थस्य**' (2-3-58) इति कर्मणि षष्ठी। **तदर्थः**=पूर्वसूत्रोपात्तः व्यवहारः पणश्च।
4. 'विभाषोपसर्गे (2-3-59) इति प्रतिपूर्वकादस्मात् कर्मणि कारके षष्ठी।
5. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्। गत्यर्थभिन्नेष्वर्थेष्वेव कर्मव्यतीहारो ज्ञेयः।
6. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् शानच्।
7. यङन्ताच्छानचि, 'हलि च' (8-2-77) इति दीर्घः। एवं यत्-ल्यप्-प्रभृतिष्वपि ज्ञेयम्।
8. अक्षैः दीव्यतीति **अक्षद्यूः**। 'क्विप् च' (3-4-76) इति कर्मोपपदात् क्विप्। ऊठ् यणादेशश्च। '**दिवः** कर्म च' (1-4-43) इति अक्षशब्दस्य कर्मसंज्ञा। एवं **मृगद्यू**रित्यत्रापि। द्विवचनादौ उवङ्।
9. ण्यन्तात् क्विपि, णिज्निमित्तके 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणे, वकारस्य ऊठि, अयादेशे च रूपमेवम्। द्विवचनादौ यणादेशः।
10. '**दिवो**ऽविजिगीषायाम्' (8-2-49) इति निष्ठानत्वम्। विजिगीषादिषु तु **द्यूतम्** इत्यादि। सर्वत्र, अस्य धातोरुदित्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्णिषेधे, ऊठि यणादेशो भवति।

A. 'देहं बिभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्**दिदेविषन्**।' भ. का. 5.57.
B. 'हरामि रामसौमित्री मृगो भूत्वा **मृगद्युवौ**।' भ. का. 5. 47.
C. '**आद्यूनः** सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः॥' किरातार्जुनीये 11.5.



[1]देवः-देवी, [2]मनसादेवः, [3]देवकः-देवकी, [4]देवनः, [5]दीव्यमानः,[A]
[6]दुद्यूवान्-दिदिवान्, देवः, [7]आदेवकः, [B]परिदेवकः, [8]परिदेवी, दिदेविषुः-[D]दुद्यूषुः ; —
देवितव्यम्, देवयितव्यम्, दिदेविषितव्यम्-दुद्यूषितव्यम्, देदिवितव्यम् ;

---

1. पचादिषु (3-1-134) **देवट्** इति पाठात् इगुपधलक्षणं कप्रत्ययं (3-1-135) बाधित्वा अजेव भवति। टित्त्वेन स्त्रियां 'टिड्ढाणञ्—' (4-1-15) इति ङीप्।
2. '**मनसः** संज्ञायाम्' (6-3-4) इति तृतीयाया अलुक्। अत्र मनश्शब्दस्य '**दिवः** कर्म च' (1-4-43) इति कर्मसंज्ञायाम्, 'कर्मण्यण्' (3-2-1) इत्यण्।
3. संज्ञायाम्, 'आशिषि च' (3-1-150) इति वुन्। अकादेशः। स्त्रियाम्, 'पुंयोगादाख्यायाम्' (4-1-48) इति ङीष्।
4. अस्य धातोर्व्यवहाररूपार्थे शब्दार्थकत्वाद् अकर्मकत्वाच्च, 'चलनशब्दार्थादकर्मकाद् युच्' (3-2-148) इति युचि, अनादेशः। **देवनः**=कितवः।
5. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति चानश् प्रत्ययः, न तु शानच्।
6. 'पपुष आगतं **पपिवद्रूप्यम्**' (भाष्यम् 4-3-24) इति **भाष्यकार**प्रयोगात् छान्दसोऽपि क्वसुर्भाषायामपि क्वचिद्भवति। तेन क्वसौ, ऊठ्, यणादेशौ, द्विर्वचनादिकं च भवन्ति। 'वकारादौ क्ङिति प्रत्यये परतः 'च्छ्वोः शूठ्—' (6-4-19) इत्यूठ् वा भवति इति **केचित्**।' इति **प्रक्रियाकौमुदीकार**दर्शितमतानुसारेण, ऊडभावे वलिलोपे च **दिदिवान्** इति रूपं प्रदर्शितम्।
7. ण्यन्तात्, '**देवि**क्रुशोश्चोपसर्गे' (3-2-147) इत्यनेन तच्छीलादिषु कर्तृषु वुञ्-प्रत्यये अकादेशे च रूपम्।
8. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृज**परिदेवि**—' (3-2-142) इत्यादिना ण्यन्तात् घिनुण्प्रत्यये रूपम्। अयमपि ताच्छीलिकः। '**परिदेवी**—इति **देवते**रिदम्। ण्यन्तस्य **दीव्यते**स्तु न। लाक्षणिकत्वात्, अण्यन्तसाहचर्यात्, सकर्मकत्वात्, 'घिनुण् अकर्मकाणाम्' इति **भाष्योक्ते**श्च।' इति **बृहच्छब्देन्दुशेखरे** प्रोक्तम्। साहचर्यपरिभाषाया अनित्यत्वात्, अस्य धातोरनेकार्थत्वेन, अकर्मकत्वस्य व्यवहारादिष्वर्थेषु सम्भवात्, क्वचिदलाक्षणिकत्वस्यापि बहुलग्रहणाच्च अस्यापि धातोः **परिदेवी**ति प्रदर्शितमिति ज्ञेयम्।

A. '**दीव्यमानं** शितान् बाणानस्यमानं महागदाः।' भ. का. 5.81.
B. 'प्राव्रृष्यनैषीत् काकुत्स्थः कथञ्चित् **परिदेवकः**॥' भ. का. 7.13.
C. 'कुर्वन्ति परिसारिण्यो विद्युतः **परिदेविनम्**।' भ. का. 7.7.
D. 'शक्तैर्**दिदेविषुं** संख्ये **दुद्यूषुः** परिघं कपिः।' भ. का. 9.32.

देवनीयम्, देवनीयम्, दिदेविषणीयम्-दुद्यूषणीयम्, देदिवनीयम्;
देव्यम्, देव्यम्, दिदेविष्यम्-दुद्यूष्यम्, देदीव्यम्;
ईषद्देवः-दुर्देवः-सुदेवः; — —
दीव्यमानः, देव्यमानः, दिदेविष्यमाणः-दुद्यूष्यमाणः, देदीव्यमानः;
देवः, [1]दिवः-त्रिदिवः, देवः, दिदेविषः-दुद्यूषः, देदिवः;
देवनम्, देवनम्, दिदेविषणम्-दुद्यूषणम्, देदिवनम्;
[2]देवित्वा-द्यूत्वा, देवयित्वा, दिदेविषित्वा-दुद्यूषित्वा, देदिवित्वा;
प्रदीव्य, प्रदेव्य, प्रदिदेविष्य-प्रदुद्यूष्य, प्रदेदीव्य;
देवम् २, देवित्वा २-द्यूत्वा २, } देवम् २, देवयित्वा २, } दिदेविषम् २-दुद्यूषम् २, दिदेविषित्वा २-दुद्यूषित्वा २, } देदिवम् २; देदिवित्वा २; }
[3]किकिदीविः, [4]प्रतिदिवा, [5]द्यौः, [6]द्यौत्रम्, [7]देवलः.

1. 'घञर्थे कविधानम्—' (वा. 3-3-58) इति घञर्थे=अधिकरणार्थे कप्रत्ययः। कित्त्वेनोपधागुणनिषेधः। **दिवः**=द्युलोकः। त्रिदशाः **दीव्यन्ती**त्यधिकरणे कप्रत्यये पृषोदरादित्वेन (6-3-109) दशशब्दस्य लोपे **त्रिदिवः** इति रूपम्। यद्वा, त्रयो **देवाः**-विष्णुब्रह्मेश्वराः **दीव्यन्त्य**त्रेति अधिकरणे कप्रत्ययो वा।
2. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः। इडभावपक्षे ऊडादिषु **द्यूत्वा** इति रूपमिति च ज्ञेयम्।
3. 'कृविघृष्विच्छविस्थविदविकि**किकिदीविः**' [द. उ. 1-26] इत्यनेन क्विन्प्रत्ययान्तो दीर्घोपधश्च निपातितः। '**किकि**' इति दीव्यतीति **किकिदीविः**=चाषः। 'श्येनेन **किकिदीविना**' (**ऋग्वेदे** 10-97-13) इति, 'छगलं कल्माषं **किकिदीवि**' इति **तैत्तिरीयक**प्रयोगाच्च दीर्घतृतीयोऽयं शब्दः, **केचित्तु** दीर्घद्वितीयं **किकीदिविः** इत्यपि पठन्ति।
4. औणादिके [द. उ. 6.51] कनिन्प्रत्यये रूपम्। प्रतिदीव्यतेऽस्मिन् इत्यधिकरणे प्रत्ययः। **प्रतिदिवा**=दिवसः।
5. ण्यन्तात् औणादिके [द. उ. 8-40] क्विपि, णेर्लुकि, देवयतीति **द्यौः**=स्वर्गोऽन्तरिक्षं वा।
6. 'दिवेर्द्यु च' [द. उ. 8.81] इति ष्ट्रन्प्रत्यये, 'द्यु' इति प्रकृतेरादेशे वृद्धौ च **द्यौत्रम्** इति भवति। दीव्यन्ति तस्मिन् सुकृतिनः इति **द्यौत्रम्**=**त्रिदिवः**, विमानं वा।
7. 'वृषादिभ्यश्चित्' [द. उ. 8-109] इति कलप्रत्यये, बाहुलकाद् गुणे च रूपम्। **देवलः**=ऋषिः।



(839) "**दिवु परिकूजने**" (X-चुरादिः-1707. अक. सेट्. आत्म.)

**आकुस्मीयः।**

'अर्दने देवयेद्, दीव्येत् क्रीडादौ, परिकूजने॥
देवयेतेदितो दिन्वेद्, देवेर्देवेत देवने।' (श्लो. 160-161)

इति **देवः**।

देवकः-विका, दिदेवयिषकः-षिका; देवयिता-त्री, दिदेवयिषिता-त्री; [1]देवन्-न्ती, — देवयिष्यन्-न्ती-ती, [2]देवयमानः, दिदेवयिषमाणः, देवयिष्यमाणः, दिदेवयिषिष्यमाणः, [3]दयूः-दय्वौ-दय्वः; देवितः, दिदेवयिषितः-तवान्; देवः, [4]आदेवकः, [5]परिदेवी, दिदेवयिषुः, देवयितव्यम्, दिदेवयिषितव्यम्, देवनीयम्, दिदेवयिषणीयम्; देव्यम्, दिदेवयिष्यम्; ईषद्देवः-दुर्देवः-सुदेवः; देव्यमानः, दिदेवयिष्यमाणः; देवः, दिदेवयिषः, देवयितुम्, दिदेवयिषितुम्; देवना, दिदेवयिषा; [A]देवनम्, दिदेवयिषणम्; देवयित्वा, दिदेवयिषित्वा, [6]देवित्वा-द्यूत्वा; परिदेव्य, प्रदिदेवयिष्य, देवम् २, देवयित्वा २, दिदेवयिषम् २-दिदेवयिषित्वा २;

(840) "**दिवु मर्दने**" (X-चुरादिः-1725. सक. सेट्. उभ.)

'**अर्दने**' इति क्षीरस्वाम्यादयः।

अस्य धातोरुभयपदित्वात् शताऽपि भवतीति विशेषः।
पूर्वलिखित**दिवु**धातुवत् (839) सर्वाण्यपि रूपाणि। ज्ञेयानि

1. उदित्करणादस्य धातोर्णिज्विकल्पः। णिजभावपक्षे 'शेषात् कर्तरि —' (1-3-78) इति परस्मैपदं शता। एवं स्यप्रत्ययेऽपि ज्ञेयम्। विशेषविहितानि रूपाणि विना, अन्यानि सर्वाण्यपि पूर्वोक्त**दिवु**धातुवत् (838) णिजभावपक्षे ज्ञेयानि।
2. 'आकुस्मादात्मनेपदिनः' (ग. सू. चुरादौ) इत्यात्मनेपदम्।
3. क्विपि, णिज्निमित्तके वृद्धौ, वकारस्योठि अयादेशे च रूपमेवम्।
4. '**देवि**कुशोश्चोपसर्गे' (3-2-147) इत्यनेन ण्यन्तस्यास्य वुञि रूपमेवम्।
5. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजप**रिदेवि** —' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुणि रूपम्।
6. णिजभावपक्षे, 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे सेटः क्त्वायाः कित्त्वनिषेधाद्गुणः। इडभावपक्षे ऊठि, यणादेशे च रूपम्।
A. 'इत्यादिवाद्यशत**देवन**मध्य एव लोकः समालपदगारितकृष्णवीर्यः।' धा.का. 3.37.

## (841) "दिश अतिसर्जने" (VI-तुदादिः-1283. सक. अनि. उभ.)

अतिसर्जनम्=त्यागः, दानं च ।

देशकः-शिका, देशकः-शिका, [1]दिदिक्षकः-क्षिका, देदिशकः-शिका ;
[2]उपदेष्टा-ष्ट्री, देशयिता-त्री, दिदिक्षिता-त्री, देदिशिता-त्री ;
[3]दिशन्-न्ती, देशयन्-न्ती, दिदिक्षन्-न्ती ; —
देक्ष्यन्-न्ती-ती, देशयिष्यन्-न्ती-ती, दिदिक्षिष्यन्-न्ती-ती ; —
दिशमानः, देशयमानः, दिदिक्षमाणः, देदिश्यमानः ;
देक्ष्यमाणः, देशयिष्यमाणः, दिदिक्षिष्यमाणः, देदिशिष्यमाणः ;
[4]दिक्-दिग्-दिशौ-दिशः, दिशा ; — — —
[5]दिष्टम्-दिष्टः-दिष्टवान्, देशितः, दिदिक्षितः, देदिशितः-तवान् ;
[6]दिशः, [7]उपदेशी, प्रादेशिनी, देशः, दिदिक्षुः, देदिशः ;
देष्टव्यम्, देशयितव्यम्, दिदिक्षितव्यम्, देदिशितव्यम् ;
देशनीयम्, देशनीयम्, दिदिक्षणीयम्, देदिशनीयम् ;
देश्यम्, देश्यम्, दिदिक्ष्यम्, देदिश्यम् ;

---

1. सन्नन्तात् ण्वुलि, 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वे, 'व्रश्च —' (8-2-36) इत्यादिना षत्वे, 'षढोः कः सि' (8-2-41) इति तकारस्य ककारे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. तृचि, 'व्रश्च—' (8-2-36) इत्यादिना शकारस्य षकारे, तकारस्य, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारे च रूपम् । एवं तव्यदादिष्वपि ज्ञेयम् ।
3. शतरि, '**तुदादिभ्यः**—' (3-1-77) इति शः विकरणप्रत्ययः । तस्य शित्त्वेन सार्वधातुकत्वाद् ङिद्वद्भावातिदेशाच्चाङ्गस्य गुणो न ।, एवं शानजन्तेऽपि ज्ञेयम् ।
4. 'ऋत्विग्दधृक्स्रग्**दिगु**ष्णिग्—' (3-2-59) इत्यादिना क्विन्नन्तो निपातितः । तेन, 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति शकारस्य कुत्वम् । व्रश्चादिषत्वस्यापवादोऽयम् । चर्त्वविकल्पः । 'आपं चैव हलन्तानां यथा वाचा निशा **दिशा** ॥' इति **भागुरि**वचनात् स्त्रियां टाब् भवति ।
5. **दिष्टं**=दैवम् । 'दैवं दिष्टं भागधेयं भाग्यं—'**इत्यमरः** । 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तप्रत्ययः ।
6. '**इगुपध**ज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कप्रत्ययः ।
7. ताच्छील्ये, साधुकारिणि वा णिनिप्रत्ययान्तोऽयम् ।



ईषद्देशः-दुर्देशः-सुदेशः ; — — —
दिश्यमानः, देश्यमानः, दिदिक्ष्यमाणः, देदिश्यमानः ;
[1]देशः, [2]प्रादेशः, सन्देशः, उपदेशः, देशः, दिदिक्षः, देदिशः ;
देष्टुम्, देशयितुम्, दिदिक्षितुम्, देदिशितुम् ;
दिष्टिः, [3]दिष्टिः, देशना, दिदिक्षा, देदिशा ;
देशनम्, देशनम्, दिदिक्षणम्, देदिशनम् ;
दिष्ट्वा, देशयित्वा, दिदिक्षित्वा, देदिशित्वा ;
अतिदिश्य, उपदेश्य, प्रदिदिक्ष्य, प्रदेदिश्य ;
[4]नाम्न्यादेशं नामादिश्य वा युध्यन्ते ।

देशम् २ } देष्ट्वा २ } देशम् २ } देशयित्वा २ } दिदिक्षम् २ } दिदिक्षित्वा २ } देदिशम् २ ; } देदिशित्वा २. }

## (842) "दिह उपचये" (II-अदादिः-1015. अक. अनि. उभ.)

उपचयः=लेपः, वृद्धिश्च ।

देहकः-हिका, देहकः-हिका, [5]दिधिक्षकः-क्षिका, देदिहकः-हिका ;
[6]देग्धा-देग्ध्री, देहयिता-त्री, दिधिक्षिता-त्री, देदिहिता-त्री ;

---

1. दिश्यतेऽनेनेति **देशः**=स्थलम् । 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति कर्मणि घञ् ।
2. प्रदिश्यत इति **प्रदेशः**=अग्रभागः । 'हलश्च' (3-3-121) इति संज्ञायां घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति दीर्घः । तत्र 'बहुलम्' इत्युक्तेः **प्रादेशः** इत्यपि साधुः ।
3. दिष्टिः=दैवम् । 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् ।
4. द्वितीयान्ते नामनि उपपदे, आङ्पूर्वकादस्मात् णमुल् भवति '**नाम्न्यादिशि**ग्रहोः' (3-4-58) इत्यनेन । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः ।
5. धातोरस्यानिट्त्वात्, झलादेः सनः कित्त्वे, धातुहकारस्य घत्वे, घकारस्य ककारे, भष्भावेन दकारस्य धकारे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
6. तृचि, हकारस्य घत्वे, 'झषस्तथोर्धोऽधः' (8-2-40) इति तकारस्य धत्वे जश्त्वे च रूपम् । एवं तव्यदादिष्वपि ज्ञेयम् ।

[1]प्रणिदिहन्-ती, देहयन्-न्ती, दिधिक्षन्-न्ती ; —
प्रणिधेक्ष्यन्-न्ती-ती, देहयिष्यन्-न्ती-ती, दिधिक्षिष्यन्-न्ती-ती ;
प्रणिदिहानः, देहयमानः, दिधिक्षमाणः, देदिह्यमानः ;
प्रणिधेक्ष्यमाणः, देहयिष्यमाणः, दिधिक्षिष्यमाणः, देदिहिष्यमाणः ;
[2]प्रधिक्-धिग्-दिहौ-दिहः ; — — —
दिग्धम्-[A]दिग्धः-दिग्धवान्, देहितः, दिधिक्षितः देदिहितः-तवान् ;
दिहः, [3]देहनः, दिधिक्षुः, देदेहः ;
देग्धव्यम्, देहयितव्यम्, दिधिक्षितव्यम्, देदिहितव्यम् ;
देहनीयम्, देहनीयम्, दिधिक्षणीयम्, देदिहनीयम् ;
देह्यम्, देह्यम्, दिधिक्ष्यम्, देदिह्यम् ;
ईषद्देहः-दुर्देहः-सुदेहः ; — — —
दिह्यमानः, देह्यमानः, दिधिक्ष्यमाणः, देदिह्यमानः ;
संदेहः, देहः, दिधिक्षः, देदिहः ;
देग्धुम्, देहयितुम्, दिधिक्षितुम्, देदिहितुम् ;
दिग्धिः, देहना, दिधिक्षा, देदिहा ;
देहनम्, देहनम्, दिधिक्षणम्, देदिहनम् ;
दिग्ध्वा, देहयित्वा, दिधिक्षित्वा, देदिहित्वा ;
सन्दिह्य, संदेह्य, प्रदिधिक्ष्य, प्रदेदिह्य ;
देहम् २ } देहम् २ } दिधिक्षम् २ } देदिहम् २ ; }
दिग्ध्वा २ } देहयित्वा २ } दिधिक्षित्वा २ } देदिहित्वा २. }

## (843) " दीक्ष मौण्ड्य-इज्या-उपनयन-नियम व्रतादेशेषु "

(I-भ्वादिः-609. सक. सेट्. आत्म.)

1 शतरि, शपि, 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो लुकि प्रपूर्वकस्य नेः 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' (8-4-17) इति णत्वे च रूपम् ।

2. क्विपि, घत्वे, भष्भावे चर्त्वे च रूपम् ।

3. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः । अनादेशः ।

A. 'मालेयदिग्धो जनदष्टिलेह्यश्वक्षीमहीमां पुरमित्युपैर्त ॥' धा. का. 2.44.



मौण्ड्यम्=वपनम् । इज्या=यजनम् । उपनयनम्=मौर्वीबन्धः । नियमः=संयमः । व्रतादेशः=संस्कारादेशकथनम् । इति क्षीरस्वामी । यथासंभवं सकर्मकाकर्मकत्वे ज्ञेये ।

" अस्यार्थो व्रतसम्प्राप्तिः, तद्भेदाः कथिता इमे ।
सा च मौण्ड्यात् कचित्, कापि दीक्षणीयादिकेज्यया ॥
उपनीत्या कचित्, कापि नियमग्रहमात्रतः ।
कचिद् गुर्वादिनन्दे ते (?) व्रतमस्त्विति शासनात् ॥
............दीक्षते वाग्मी यजमानस्तु माणवः ।
तपसे च महानाम्न्यै(?)तत्र ह्यादेशना व्रतम् ॥"
इति धा. का. व्याख्याने (1-77) प्रोक्तम् ।

दीक्षकः-क्षिका, दीक्षकः-क्षिका, दिदीक्षिषकः-षिका, देदीक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि तक्षतिवत् (692) ज्ञेयानि । अस्य धातोः आत्मनेपदित्वात् शानचि दीक्षमाणः इति रूपमिति विशेषः । दीक्षिता[1] । [A]दीक्षितः ।

## (844) " दीङ् क्षये " (IV-दिवादिः-1134. अक. अनि. आत्म.) स्वादिः ।

[2]दायकः-यिका, [3]दापकः-पिका, [4]दिदीषकः-दिदासकः-दित्सकः-त्सिका,

1. तच्छीलादिषु कर्तृषु 'सूददीपदीक्षश्च' (3-2-153) इति युच्प्रतिषेधात् तृन्नेव ।

2. 'मीनातिमिनोतिदीङां ल्यपि च' (6-1-50) इत्यात्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं घञादिष्वपि ज्ञेयम् । आत्वं तु शतरं वर्जयित्वा सर्वत्र ज्ञेयम् ।

3. प्रत्ययोत्पत्तेः प्रागनैमित्तिक आत्वे, आदन्तलक्षणे पुगागमे च रूपम् । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।

4. सन्नन्ते, 'इको झल्' (1-2-9) इति सनः कित्त्वे, दीर्घे, षत्वे च रूपम् । 'मीनातिमिनोतिदीङां ल्यपि च' (6-1-50) इत्यत्र ल्यब्ग्रहणात्, 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' (वा. 1-1-20) इति वार्तिकारम्भसामर्थ्याच्च, अस्यापि धातोर्घुसंज्ञाऽस्तीति कैयटपदमञ्जर्यादिषु व्यक्तम् । तन्मते, काश्यपादि मतेऽपि आत्वे, दिदासकः इति रूपम् । आत्वाभावपक्षे 'सनि मीमाघु—' (7-4-54) इत्यादिना इसाऽऽदेशे, द्वित्वे, 'अत्र लोपः—' (7-4-58) इत्यभ्यासलोपे, 'सः स्यार्धधातुके' (7-4-49) इति सकारस्य तकारे च दित्सकः इत्यादीनि रूपाणि तृजादिष्वपि यथायथमूह्यानि । परं तु 'यथोत्तरं मुनीनां प्रामाण्यम्' इति सङ्केतात्, सन्निपातपरिभाषामाश्रित्य दीङः घुसंज्ञानिषेधादेतदप्रामाणिकमिति ज्ञायते । शाकटायनादयः घुसंज्ञामेवाशिश्रियुरात्वविकल्पं च ।

A. 'संक्लेशितस्वकथदक्षणदीक्षितं तं प्रेक्ष्यैष जन्मफलमीषितवान् महात्मा ॥'
धा. का. 1.77.

[1]देदीयकः-यिका ;

दाता-त्री, दापयिता-त्री, दिदीषिता-त्री, देदीयिता-त्री ;

— दापयन्-न्ती, दिदीषन्-न्ती ; —

— दापयिष्यन्-न्ती-ती, दिदीषिष्यन्-न्ती-ती ; —

दीयमानः, दापयमानः, दिदीषमाणः, देदीय्यमानः ;

दास्यमानः, दापयिष्यमाणः, दिदीषिष्यमाणः, देदीयिष्यमाणः ;

प्रदाः-प्रदौ-प्रदाः ; — — —

[2]दीनः-दीनम्-दीनवान्, दापितः, दिदीषितः, देदीयितः-तवान् ;

[3]उपदायः, [4]प्रदः, दापः, दिदीषुः, देद्यः ;

दातव्यम्, दापयितव्यम्, दिदीषितव्यम्, देदीयितव्यम् ;

[5]प्रणिदानीयम्-प्रनिदानीयम्, दापनीयम्, दिदीषणीयम्, देदीयनीयम् ;

देयम्, दाप्यम्, दिदीष्यम्, देदीय्यम् ;

[6]ईषद्दानम्-दुर्दानम्-सुदानम् ; — —

दीयमानः, दाप्यमानः, दिदीष्यमाणः, देदीय्यमानः ;

दायः, दापः, दिदीषः, देदीयः ;

दातुम्, दापयितुम्, दिदीषितुम्, देदीयितुम् ;

दातिः, दापना, दिदीषा, देदीया ;

दानम्, दापनम्, दिदीषणम्, देदीयनम् ;

दात्वा, दापयित्वा, दिदीषित्वा, देदीयित्वा ;

---

1. यङन्तान्ण्वुलि, घुसंज्ञाप्रतिषेधात् ईत्वाभावे, द्वित्वे, अभ्यासस्य गुणे च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
2. '**स्वादय** ओदितः' (ग॰ सू. दिवादौ) इति ओदित्वातिदेशात् 'ओदितश्च' (8-2-45) इति निष्ठानत्वे रूपम् ।
3. 'मीनातिमिनोति**दीङाम्**—' (6-1-50) इत्यनेनान्तरङ्गत्वेनात्वे, '**श्याऽऽद्**—' (3-1-141) इत्यनेन कर्तरि णप्रत्यये, युगागमः ।
4. '**आत**श्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्यये रूपम् । प्रदर्शनार्थं कर्तरि प्रत्ययेषु द्वावत्रोपात्तौ । '**डु दाञ्**—' धातौ (830) यानि रूपाणि कर्त्रर्थे प्रदर्शितानि, तानि सर्वाण्यपि, अत्रापि प्रायशो ज्ञेयानि ।
5. 'शेषे विभाषाऽ**कखादावषान्त** उपदेशे' (8-4-18) इति णत्वविकल्पः ।
6. '**आतो** युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच् प्रत्ययः ।



[1]प्रदाय, प्रदाप्य, प्रदिदीष्य, प्रदेदीय्य ;

दायम् २, दात्वा २, } दापम् २, दापयित्वा २, } दिदीषम् २, दिदीषित्वा २, } देदीयम् २ ; देदीयित्वा २. }

## (845) "दीधीङ् दीप्तिदेवनयोः"

(II-अदादिः-1076- सक. सेट्. आत्म.) छान्दसः ।

देवनम्=क्रीडाविजिगीषादिकम् । जक्षित्यादिः । [अ]

[2]दीध्यकः-ध्यिका, [3]दीध्यकः-ध्यिका, [4]दिदीधिषकः-षिका ;

[5]दीधिता-त्री, [6]दीधयिता-त्री, दिदीधिषिता-त्री ;

— दीधयन्-न्ती, दीधयिष्यन्-न्ती-ती ; —

[7]दीध्यानः, दीधयमानः, दिदीधिषमाणः ;

दीधिष्यमाणः, दीधयिष्यमाणः, दिदीधिषिष्यमाणः ;

दीधिः-दीध्यौ-दीध्यः ; — —

दीधितम्-तः-तवान्, दीधितः, दिदीधिषितः-तवान् ;

---

1. ल्यपि 'मीनातिमिनोति**दीङां ल्यपि च**' (6-1-50) इत्यनेनात्वे रूपमेवम् ।
2. ण्वुलि, अकादेशे, '**दीधी**वेवीटाम्' (1-1-6) इति गुणवृद्धिनिषेधात् वृद्ध्यभावे, 'एरनेकाचोऽसंयोगपूर्वस्य' (6-4-82) इति यण् । एवं अनीयर्, घञ्, ल्युट्प्रभृतिष्वपि यथासम्भवं गुणवृद्धिनिषेधो ज्ञेयः ।
3. ण्यन्तान्ण्वुलि, 'णेरनिटि' (6-4-51) इति णिलोपे, गुणवृद्ध्योर्निषेधे, यणि च रूपम् । एवं अनीयर्ल्युडादिष्वपि प्रक्रिया ज्ञेया ।
4. सन्नन्तान्ण्वुलि, सन इडागमे, द्वित्वादिकेषु कृतेषु, 'यीवर्णयो**र्दीधी**वेव्योः' (7-4-53) इति उत्तरखण्डे धातोरीकारस्य लोपे, षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
5. धातोरस्य सेट्त्वात्, तृचि, 'यीवर्णयो**र्दीधी**वेव्योः' (7-4-53) इतीकारलोपे रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् ।
6. ण्यन्तात् तृचि, इडागमे, 'यीवर्णयोः—' (7-4-53) इति ईकारलोपे, णिचो गुणे, अयादेशे च रूपमेवम् । एवं शानजन्तादिष्वपि प्रक्रिया बोध्या ।
7. शानचि, शपो लुकि, प्रकृतेर्गुणवृद्धिनिषेधात् यणादेशे रूपमेवम् ।

[अ] "दरिद्राजागृ**दीधीङाम्** एकाचां च चिरेर्जिरेः ।
अदन्तोर्णोतिवेवीङां स्मर्यते नेत् तथा लङेः ॥"
इति वचनात् अस्य धातोरनेकाच्त्वम् ; न तु ईदित्वम् । तेन यङ् न ।

| | | |
|---|---|---|
| दीध्यः, | दीध्यः, | दिदीधिषुः ; |
| दीधितव्यम्, | दीधयितव्यम्, | दिदीधिषितव्यम् ; |
| दीध्यनीयम्, | दीध्यनीयम्, | दिदीधिषणीयम् ; |
| [1]दीध्यम्, | दीध्यम्, | दिदीधिष्यम् ; |
| ईषद्दीध्यः-दुर्दीध्यः-सुदीध्यः ; | — | — |
| दीध्यमानः, | दीध्यमानः, | दिदीधिष्यमाणः ; |
| दीध्यः, | दीध्यः, | दिदीधिषः ; |
| दीधितुम्, | दीधयितुम्, | दिदीधिषितुम् ; |
| [2]दीधितिः[A], | दीध्यना, | दिदीधिषा ; |
| दीध्यनम्, | दीध्यनम्, | दिदीधिषणम् ; |
| दीधित्वा, | दीधयित्वा, | दिदीधिषित्वा ; |
| आदीध्य, | आदीध्य, | प्रदिदीधिष्य ; |
| [3]दीध्यम् २, दीधित्वा २, | दीध्यम् २, दीधयित्वा २, | दिदीधिषम् २ ; दिदीधिषित्वा २. |

## (846) "दीपी दीप्तौ" (IV-दिवादिः-1150. अक. सेट्. आत्म.)

| | | | |
|---|---|---|---|
| दीपकः-पिका, | दीपकः-पिका, | दिदीपिषकः-षिका, | देदीपकः-पिका ; |
| दीपिता-त्री, | दीपयिता-त्री, | दिदीपिषिता-त्री, | देदीपिता-त्री ; |
| — | दीपयन्-न्ती, | दीपयिष्यन्-न्ती-ती ; | — |
| दीपमानः, | दीपयमानः, | दिदीपिषमाणः, | देदीप्यमानः ; |
| दीपिष्यमाणः, | दीपयिष्यमाणः, | दिदीपिषिष्यमाणः | देदीपिष्यमाणः ; |
| प्रदीप्-प्रदीपौ-प्रदीपः ; | | — | — |

1. 'अचो यत्' (3-1-97) इति यति, यकारादिप्रत्ययत्वात् 'यीवर्णयोः—' (7-4-53) इति ईकारलोपे, रूपमेवम् ।
2. क्तिनि, संज्ञायां क्तिचि वा, 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति पर्युदासात् **फणिति**रित्यत्रेव इडागमे, ईकारलोपे, रूपम् ।
3. णमुलि, '**दीधी**वेवीटाम्' (1-1-6) इति वृद्धिनिषेधे, यणि, **दीध्यकः** इत्यत्रेव **दीध्यम्** इत्येव रूपमिति बोध्यम् । **धातुरूपप्रकाशिकायां तु दीधायम्** इति वृद्धिप्राप्तियुक्तं रूपं णमुलि प्रदर्शितम् । तत्र वृद्धिविधायकं शास्त्रं न पश्यामः ।

A. 'देवं स्फुरद्**दीधिति**मम्बुजाक्ष्यो वेव्यानमालोक्य विमोहमापुः ॥' धा. का. 2.52.



[1]दीप्तम्, दीप्तः-तवान्, दीपितः, दिदीपिषितः, देदीपितः-तवान् ;
[2]दीपः, [3]दीपिता,[A] [4]दीपनीयम्, [5]दीप्रः[B], सन्दीपी, [6]सन्दीपनः, प्रदीपः,
दिदीपिषुः, देदीपः ;

| | | | |
|---|---|---|---|
| दीपितव्यम्, | दीपयितव्यम्, | दिदीपिषितव्यम्, | देदीपितव्यम् ; |
| [7]प्रणिदीपनीयम्-प्रनिदीपनीयम्, | दीपनीयम्, | दिदीपिषणीयम्, | देदीपनीयम् ; |
| दीप्यम्, | दीप्यम्, | दिदीपिष्यम्, | देदीप्यम् ; |
| ईषद्दीपः-दुर्दीपः-सुदीपः ; | | — | — |
| दीप्यमानः, | दीप्यमानः, | दिदीपिष्यमाणः, | देदीप्यमानः, |
| दीपः, | दीपः, | दिदीपिषः, | देदीपः ; |
| दीपितुम्, | दीपयितुम्, | दिदीपिषितुम्, | देदीपितुम् ; |
| [8]दीप्तिः, | दीपना, | दिदीपिषा, | देदीपा ; |
| दीपनम्, | दीपनम्, | दिदीपिषणम्, | देदीपनम् ; |
| दीपित्वा, | दीपयित्वा, | दिदीपिषित्वा, | देदीपित्वा ; |
| सन्दीप्य, | प्रदीप्य, | प्रदिदीपिष्य, | प्रदेदीप्य ; |
| दीपम् २, दीपित्वा २, | दीपम् २, दीपयित्वा २, | दिदीपिषम् २, दिदीपिषित्वा २, | देदीपम् २ ; देदीपित्वा २. |

1. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधो निष्ठायाम् ।
2. इगुपधलक्षणः कप्रत्ययः कर्तरि भवति ।
3. तच्छीलादिषु कर्तृषु, 'अनुदात्तेतश्च हलादेः' (3-2-149) इति प्राप्तस्य युचः, 'सूद**दीप**दीक्षश्च' (3-2-153) इति निषेधात्, औत्सर्गिकः 'तृन्' (3-2-135) इति तृन् ।
4. दीपयतीति **दीपनीयम्** औषधम् । बाहुलकात् कर्तर्यनीयर् इति **प्र. सर्वस्वे** ।
5. तच्छील-तद्धर्म-तत्साधुकारिष्वर्थेषु 'नमिकम्पिस्म्यजसकमहिंस**दीपो** रः' (3-2-167) इति रप्रत्यये रूपम् । 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधः ।
6. सम्यक् दीपयतीति **सन्दीपनः** । नन्द्यादित्वात् कर्तरि ल्युः । तस्यापत्यमित्यर्थे, 'अत इञ्' (4-1-95) इतीञि **सान्दीपनिः** इति भवति ।
7. 'शेषे विभाषाऽ**कखादावषान्त** उपदेशे, (8-4-18) इति नेर्णत्वविकल्पः ।
8. 'गुरोश्च हलः' (3-3-103) इति प्राप्तम् अकारप्रत्ययं बाधित्वा, 'क्तिन् **आबादिभ्यः**' (वा. 3-3-94) इति क्तिन् । **आबादयः**=आप्लृधातुप्रकाराः दीर्घोपधाः, हलादयोऽजादयो वा धातवः, येषां प्रयोगे क्तिन् दृश्यते ।

A. '**दीपितारं** दिनारम्भे निरस्तध्वान्तसञ्चयम् ॥' भ. का. 7. 17.

B. 'ततो दशास्यः क्षुभिताहिकल्पं **दीप्रा**ङ्गुलीयोपलमूढरत्नम् ।' भ. का. 12. 13.

## (847) “ दु गतौ ” (I-भ्वादिः-944. सक. अनि. पर.)

‘दुनोति दूयते तापे, दवतीति गतौ पदम् ॥’ (श्लो. 22) इति **देवः** ।

दावकः-विका, दावकः-विका, [1]दुदूषकः-षिका, [2]दोदूयकः-यिका ;

दोता-त्री, दावयिता-त्री, दुदूषिता-त्री, दोदूयिता-त्री ;

दवन्-न्ती, दावयन्-न्ती, दुदूषन्-न्ती ; —

दोष्यन्-न्ती-ती, दावयिष्यन्-न्ती-ती, दुदूषिष्यन्-न्ती-ती ; —

— दावयमानः, दावयिष्यमाणः, — दोदूयमानः, दोदूयिष्यमाणः ;

[3]प्रदुत्-प्रदुतौ-प्रदुतः ; — —

[4]दूनम्-[A]दूनः-दूनवान्, दावितः, दुदूषितः, दोदूयितः-तवान् ;

[5]दवः, [6]दूतः, [7]दवनः, दावः, दुदूषुः, [8]दोदुवः ;

दोतव्यम्, दावयितव्यम्, दुदूषितव्यम्, दोदूयितव्यम् ;

दवनीयम्, दावनीयम्, दुदूषणीयम्, दोदूयनीयम् ;

[9]दव्यम्, [10]अवश्यदाव्यम्, दाव्यम्, दुदूष्यम्, दोदूय्यम् ;

ईषद्दवः-दुर्दवः-सुदवः ; — —

---

1. सन्नन्तात् ण्वुलि, द्वित्वे, ‘ इको झल् ’ (1-2-9) इति सनः कित्त्वे, गुणनिषेधे, ‘ अज्झनगमां सनि ’ (6-4-16) इति दीर्घे च रूपम् । एवं सन्नन्ते सर्वत्र बोध्यम् ।
2. यङन्तान्ण्वुलि, द्वित्वादिके कृते, अतो लोपे, अभ्यासे गुणे, ‘ अकृत्सार्वधातुकयोः—’ (7-4-25) इति दीर्घः । एवं यङन्ते सर्वत्र प्रक्रिया ज्ञेया ।
3. क्विपि, ‘ह्रस्वस्य पिति कृति—’ (6-1-71) इति तुकि रूपम् । एवं ल्यपि च ।
4. ‘**दुग्वोर्दीर्घश्च** ’ (वा. 8-2-44) इति वचनात् निष्ठानत्वम्, अङ्गस्य दीर्घश्चभवति ।
5. पचाद्यचि रूपमेवम् । ‘**दुन्योरनुपसर्गे** ’ (3-1-142) इत्यत्र नास्य धातोः ग्रहणम् ; तत्र नयतिसाहचर्यात् सानुबन्धकस्य सौवादिकस्य **दुनोते**रेव ग्रहणम् इति व्याख्यातृभिः प्रतिपादितत्वात् ।
6. ‘ क्तिच्क्तौ च संज्ञायाम् ’ (3-3-174) इति संज्ञायां क्तप्रत्यये, ‘ अन्येषामपि —’ (6-3-137) इति दीर्घे, **दूतः** इति भवति ।
7. ‘**चलन**शब्दार्थादकर्मकात्—’ (3-2-148) इति तच्छीलादिषु कर्तृषु युचि रूपम् । विवक्षाभेदादकर्मकत्वं सम्भवति । **दवनः**=गन्धविशिष्टपुष्पविशेषः ।
8. यङन्तात् पचाद्यचि, यङो लुकि, ‘ अचि श्नुधातु-’ (6-4-77) इत्युवङि च रूपमेवम् ।
9. ‘ अचो यत् ’ (3-1-97) इति यति, गुणे, अवादेशे च रूपम् ।
10. ‘ **ओरावश्यके** ’ (3-1-125) इति ण्यति, वृद्धौ, आवादेशे, ‘ लुम्पेदवश्यमः कृत्ये—’ (वा. 6-3-109) इति अवश्यमो मकारस्य लोपे च रूपम् ।

A. ‘ श्रुत्यन्तवाचा ध्रुवया **प्रदूनं** घोरप्रवञ्चकजिताशितारिम् ।’ धा. का. 2.35.



[1]दूयमानः, दाव्यमानः, दुदूष्यमाणः, दोदूय्यमानः ;

[2]दवः, [3]सन्दावः, दावः, दुदूषः, दोदूयः ;

[4]प्रणिदोतुम्-प्रनिदोतुम्, दावयितुम्, दुदूषितुम्, दोदूयितुम् ;

दुतिः, दावना, दुदूषा, दोदूया ;

दवनम्, दावनम्, दुदूषणम्, दोदूयनम् ;

दुत्वा, दावयित्वा, दुदूषित्वा, दोदूयित्वा ;

प्रदुत्य, प्रदाव्य, प्रदुदूष्य, प्रदोदूय्य ;

दावम् २, } दावम् २, } दुदूषम् २, } दोदूयम् २ ; }

दुत्वा २, } दावयित्वा २, } दुदूषित्वा २, } दोदूयित्वा २. }

## (848) “ टु दु उपतापे ” (V-स्वादिः-1256. अक. अनि. पर.)

‘दुनोति दूयते तापे, दवतीति गतौ पदम् ॥’ (श्लो. 22) इति **देवः** ।

दावकः-विका, दावकः-विका, दुदूषकः-षिका, दोदूयकः-यिका ;

इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखितभौवादिक**दवति**वत् (847) ज्ञेयानि ।

[5]दावः,[A] प्रदवः, [6]दुतः[B]-दुतम्-दुतवान्, [7]दवथुः,[C], [8]सन्दवः, [9]दुन्वन्-ती, इति रूपाण्यस्य यथायथं तत्तत्प्रत्ययेषु भवन्तीति विशेषः ।

---

1. यकि, ‘ अकृत्सार्वधातुकयोः—’ (7-4-25) इति दीर्घे रूपम् ।
2. ‘ ऋदोरप् ’ (3-3-57) इति भावेऽप्प्रत्ययः । घञपवादः ।
3. ‘ **समि युद्रुदुवः** ’ (3-3-23) इति कर्तृभिन्ने कारके घञ् । **सन्दावः**=पलायनम् ।
4. ‘ शेषे विभाषा—’ (8-4-18) इति नेः णत्वविकल्पः ।
5. ‘ दुन्योरनुपसर्गे ’ (3-1-142) इति कर्तरि णप्रत्ययः । **दावः**=वनानलः । अत्र, ‘अनुपसर्गे’ इत्युक्तत्वात्, सोपसर्गात् तु **सन्दवः प्रदवः** इत्यादिषु पचाद्यजेव भवति ।
6. ‘ दुग्वोर्दीर्घश्च ’ (वा. 8-2-44) इत्यत्र सानुबन्धकत्वादस्य धातोर्न ग्रहणम् । तेन क्तप्रत्यये **दुतः** इत्येवास्य रूपम् ।
7. ‘ **ट्वितोऽथुच्** ’ (3-3-89) इति भावेऽथुच् प्रत्ययः ।
8. ‘ समि युद्रुदुवः ’ (3-3-23) इत्यत्र द्रुसाहचर्यात् भौवादिकस्यैव ग्रहणादस्य भावे, ‘ ऋदोरप् ’ (3-3-57) इत्यनेन सम्पूर्वकादपि भवति ।
9. शतरि, ‘**स्वादिभ्यः**—’ (3-1-73) इति श्नुप्रत्यये, तस्य ङिद्वद्भावेनाङ्गस्य गुणप्रतिषेधे, ‘ हुश्नुवोः सार्वधातुके ’ (6-4-87) इति श्नुप्रत्ययघटकोकारस्य शतृप्रत्यये परतो यणादेशे च रूपम् ।

A. ‘ दह्येऽहं मधुनो लेहै**र्दावै**रुग्रैर्यथा गिरिः । ’ भ. का. 6. 83.

B. ‘ स्फुटमिवातरणं हिममारुतैर्मृदुतया **दुतया**ऽधरलेखया ॥ ’ शि. व. 6. 59.

C. ‘ केचिद् वेपथुमासेदुरन्ये **दवथुमुत्तमम्** ।’ भ. का. 4. 43.

(849) "**दुःख तत्क्रियायाम्**" (X-चुरादिः-1930. अक. सेट्. उभ.)

अदन्तः ।

अत्र **तत्क्रिया**=दुःखनम्; दुःखानुकूलव्यापार इत्यर्थः । '**तत्क्रिया** तदनुभवः ।' इति **धा. का. व्याख्याने** (3-62) ।

'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' (ग. सू. चुरादौ) इत्यस्य विवरणरूपोऽयं धातुः । दुःखशब्दात् 'तत् करोति, तदाचष्टे, तेनाक्रामति' (ग. सूत्राणि चुरादौ) इत्येतेष्वर्थेषु णिज्भवति । 'सनाद्यन्ता धातवः' (3-1-32) इति धातुसंज्ञा । अतो लोपे, उपधावृद्धिनिषेधे च रूपाणि भवन्ति । तद्यथा— दुःखकः-खिका, दुदुःखयिषकः-षिका, दुःखयिता-त्री, दुदुःखयिषिता-त्री; दुःखयन्-न्ती, दुदुःखयिषन्-न्ती, दुःखयिष्यन्-न्ती-ती, दुदुःखयिषिष्यन्-न्ती-ती, दुःखयमानः, दुदुःखयिषमाणः, दुःखयिष्यमाणः, दुदुःखयिषिष्यमाणः, दुःक्-दुःखौ-दुःखः, दुःखितम्, दुदुःखयिषितः-तवान्, दुःखः, दुदुःखयिषुः, दुःखयितव्यम्, दुदुःखयिषितव्यम्, दुःखनीयम्, दुदुःखयिषणीयम्, दुःख्यम्, दुदुःखयिष्यम्; ईषद्दुःखः-दुर्दुःखः-सुदुःखः; दुःख्यमानः, दुदुःखयिष्यमाणः, दुःखः, दुदुःखयिषः, दुःखयितुम्, दुदुःखयिषितुम्, दुःखना, दुदुःखयिषा; [A]दुःखनम्, दुदुःखयिषणम्, दुःखयित्वा, दुदुःखयिषित्वा, प्रदुःख्य, प्रदुदुःखयिष्य, दुःखम् २, दुःखयित्वा २, दुदुःखयिषम् २, दुदुःखयिषित्वा २. इति ।

अस्यैव दुःखरूपस्य प्रातिपदिकस्य कण्ड्वादिषु पाठात्, '**कण्ड्वादिभ्यो यक्**' (3-1-27) इति यक्प्रत्यये, यगन्तस्यापि 'सनाद्यन्ताः' (3-1-32) इति धातुसंज्ञायां दुःख्यन्-न्ती इत्यादीनि रूपाणि भवन्ति । 'द्विधा हि कण्ड्वादयः, धातवः प्रातिपदिकानिचेति,' (भाष्यम् 1-1-58) इत्युक्तत्वात्, कण्ड्वादयोऽस्माभिर्न विशिष्य विलिखिता इति ज्ञेयम् ।

(850) "**दुर्वी हिंसार्थः**" (I-भ्वादिः-572. सक. सेट्. पर.)

दूर्वकः-र्विका, दूर्वकः-र्विका, दुदूर्विषकः-षिका, दोदूर्वकः-र्विका, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतूर्वतिवत् (756) ज्ञेयानि । [A]दुदूर्विषुः ।

---

A. 'देवौघे हृतदुःखने रसयति व्याकर्षदेनं क्षितौ ॥' धा. का. 3-62.

A. '**दुदूर्विषून्** धूर्वितुमेव गूर्वणं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥' धा. का. 1. 73.



(851) "**दुल उत्क्षेपे**" (X-चुरादिः-1600. सक. सेट्. उभ.)

दोलकः-लिका, दुदोलयिषकः-षिकाः; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकक्षेपार्थककालयतिवत् (175) ज्ञेयानि । [1]दोला, [2]दुलिः, [A]सन्दोलयन्-न्ती ।

(852) "**दुष वैकृत्ये**" (IV-दिवादिः-1185. अक. अनि. पर.)

'**वैकृत्यम्**=रूपभङ्गः ।' इति **क्षीरस्वामी** ।

दोषकः-षिका, [3]दूषकः, [4]दोषकः-दूषकः-षिका, [5]दुदुक्षकः-क्षिका, दोदुषकः-षिका;

[6]दोष्टा-दोष्ट्री, दूषयिता-दोषयिता-त्री, दुदुक्षिता-त्री, दोदुषिता-त्री;

[7]दुष्यन्-न्ती, दूषयन्-दोषयन्-न्ती, दुदुक्षन्-न्ती; —

दोक्ष्यन्-न्ती, दूषयिष्यन्-दोषयिष्यन्-न्ती-ती, दुदुक्षिष्यन्-न्ती-ती; —

[8]व्यतिदुष्यमाण; दूषयमाणः-दोषयमाणः, [7]व्यतिदुदुक्षमाणः, दोदुष्यमाणः;

व्यतिदोक्ष्यमाणः, दूषयिष्यमाणः-दोषयिष्यमाणः; व्यतिदुदुक्षिष्यमाणः, [दोदुषिष्यमाणः;

---

1. 'भिदादेः' (3-3-104) आकृतिगणत्वात्, ण्यन्तात् प्राप्तं युचं बाधित्वा, अङ्प्रत्यये, णिलोपे च **दोला** इति रूपं सम्पद्यते ।

2. 'अच इः' (द. उ. 1-67) इति इकारप्रत्यये रूपम् । 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' (द. उ. 8.40) इति णेर्लुक् । **दुलिः**=कमठी ।

3. '**दोषो णौ**' (6-4-90) इति ण्यन्ते सर्वत्र उपधाया ऊदादेशः ।

4. 'वा चित्तविरागे' (6-4-91) इति चित्तस्याप्रीततायां गम्यमानायां तु ऊदादेशविकल्पनात्, ऊदादेशाभावे, लघूपधगुणे **दोषकः-षिका** इत्यादीनि रूपाणि ण्यन्त एव सर्वत्र भवन्ति ।

5. सन्नन्तात्ण्वुलि, धातोरनिट्त्वात् 'इको झल्' (1-2-9) इति सनः कित्त्वाद् गुणनिषेधे, 'षढोः कः सि' (8-2-41) इति धातुषकारस्य ककारे, षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

6. तृचि, 'ष्टुना ष्टुः' (8-4-41) इति तकारस्य ष्टुत्वेन टकारे रूपमेवम् । तव्यदादिष्वप्येवमेव प्रक्रिया ज्ञेया ।

7. शतरि '**दिवादिभ्यः—**' (3-1-69) इति श्यन् विकरणप्रत्ययः । तस्य ङिद्वद्भावेनाङ्गस्य गुणो न भवति ।

8. 'कर्तरि कर्मव्यतीहारे (1-3-14) इति शानचि रूपमेवम् ।

A. '**सन्दोलयन्**नधिकपोलितमद्रिराजं
सञ्चोलितं सुबहुमूलितशाखिबृन्दैः ॥' धा. का. 3-21.

[1]प्रदुट्-प्रदुड्-प्रदुषौ-प्रदुषः ; — —

दुष्टम्-दुष्टः-दुष्टवान्, दूषितम्-तः, दोषितः, दुदुक्षितः, दोदुषितः-तवान्;

दोषः, दुषः, [2]दोषी, [3]दूषणः, दुदुक्षुः, दोदोषः ;

दोष्टव्यम्, दूषयितव्यम्-दोषयितव्यम्, दुदुक्षितव्यम्, दोदुषितव्यम् ;

दोषणीयम्, दूषणीयम्-दोषणीयम्, दुदुक्षणीयम्, दोदुषणीयम् ;

दोष्यम्, दूष्यम्-दोष्यम्, दुदुक्ष्यम्, दोदुष्यम् ;

ईषद्दोषः-दुर्दोषः-सुदोषः ; — —

दुष्यमाणः, दूष्यमाणः-दोष्यमाणः, दुदुक्ष्यमाणः, दोदुष्यमाणः ;

दोषः, [4]प्रदोषः, दूषः-दोषः, दुदुक्षः, दोदुषः ;

दोष्टुम्, दूषयितुम्-दोषयितुम्, दुदुक्षितुम्, दोदुषितुम् ;

दुष्टिः, दूषणा-दोषणा, दुदुक्षा, दोदुषा ;

दोषणम्, दूषणम्-दोषणम्, दुदुक्षणम्, दोदुषणम् ;

दुष्ट्वा, दूषयित्वा-दोषयित्वा, दुदुक्षित्वा, दोदुषित्वा ;

प्रदुष्य, प्रदूष्य-प्रदोष्य, प्रदुदुक्ष्य, प्रदोदुष्य ;

दोषम् २, } दूषम् २-दोषम् २, } दुदुक्षम् २, } दोदुषम् २ ; }
दुष्ट्वा २, } दूषयित्वा २-दोषयित्वा २, } दुदुक्षित्वा २, } दोदुषित्वा २; }

[5]दूषीका.

## (853) " दुह प्रपूरणे " (II-अदादिः-1014. सक. अनि. उभ.)

"**प्रपूरणम्**=पूरणाभावः, उपसर्गोऽत्र धात्वर्थं बाधते प्रस्थानवत् ।"
इति **क्षीरस्वामी** ।

---

1. क्विपि, पदान्तनिमित्तके जश्त्वे, चर्त्वे च रूपम् ।
2. ' सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदह-परिमुहदुष—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्यये रूपम् ।
3. नन्द्यादित्वात् (3-1-134) ण्यन्तादस्मात् कर्तरि ल्युप्रत्ययेऽनादेशे च **दूषणः** इति रूपम् ।
4. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । नात्रावयवार्थादरः । **प्रदोषः**= रजनीमुखम् ।
5. 'कषिदूषिभ्यामीकन्,' [द. उ. 3-35] इति ण्यन्तादस्मादीकन्प्रत्यये रूपम् । दूषयति नेत्रमिति **दूषीका**=नेत्रमलसंघातः ।



'प्रपूरणे दोग्धि दुग्धे, दोहतीत्यर्दने दुहेः ॥' (श्लो. 193) इति **देवः** ।

**दोहकः**-हिका, दोहकः-हिका, दुधुक्षकः-क्षिका, दोदुहकः-हिका ;

इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**देग्धिवत्** (842) ज्ञेयानि ।

[1]दुह्यम्-दोह्यम्, [2]गोधुक्-प्रधुक्-प्रदुहौ-प्रदुहः, [3]कामदुघा[A] [गौः], [4]दोही, [गां पयो] [5]दुहानः,[B] [6]गोदोहनी, [7]ईषद्दोहनः-दुर्दोहनः-सुदोहनः ;

[8]दुहिता, इत्यस्माद्धातोस्तत्तत्प्रत्ययेषु यथासम्भवं रूपाणि भवन्तीति विशेषः।

## (854) " दुहिर् अर्दने " (I-भ्वादिः-738. सक. सेट्. पर.)

'प्रपूरणे दोग्धि दुग्धे, दोहतीत्यर्दने दुहेः ॥' (श्लो. 193) इति **देवः** ।

**दोहकः**-हिका, दोहकः-हिका, [9]दुदोहिषकः-दुदुहिषकः-षिका, दोदुहकः-

---

1. 'शंसिदुहिगुहिभ्यो वा' (काशिका वा. 3-1-109) इति क्यप् वा भवति। क्यपि गुणनिषेधे **दुह्यम्** इति, औत्सर्गिके ण्यति **दोह्यम्** इति च रूपे भवतः ।
2. 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' (3-2-61) इत्यनेन क्विपि, 'दादेर्धातोर्घः' (8-2-32) इति घत्वे पदान्तनिमित्तकेषु चर्त्वभष्भाव-जश्त्वादिकेषु रूपम् । 'उपसर्गेऽपि' इत्युक्तत्वात् उपसर्गभिन्नेषु सुबन्तेषु उप-पदेष्वपि कर्मभूतेषु क्विप् भवति, तेन **गोधुक्** इति सिद्धम् ।
3. '**दुहः** कब् घश्च' (3-2-70) इत्यनेन सुप्युपपदे कप्प्रत्ययः, धात्वन्त्यवर्णस्य घकारादेशश्च विहितः ।
4. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरि-मुहदुषद्विषद्रुहदुह—' (3-2-142) इत्यादिना तच्छीलादिषु कर्तृषु घिनुण्प्रत्यये रूपम् ।
5. शानचि, शपोलुकि, रूपमेवम् । '**दुहियाचि**—' (भाष्यम् 1-4-51) इत्यादिना द्विकर्मकत्वम् ।
6. गावः दुह्यन्तेऽत्रेति अधिकरणे 'करणाधिकरणयोश्च' (3-3-117) इति ल्युट् । **गोदोहनी**=स्थलविशेषो गोष्ठादिः ।
7. 'अन्येभ्योऽपि दृश्यते' (3-3-130) इति ईषदाद्युपपदेषु खलपवादो युच्प्रत्ययः । **क्षीरस्वामिमतेनेदमुक्तम्** । **अन्ये** तु बाहुलकादाहुः ।
8. 'नप्तृनेष्टृ—' [द. उ. 2-3] इत्यादिना तृन्प्रत्यये इडागमे, गुणनिषेधे च निपातितः । **दुहिता**=स्त्र्यपत्यम् ।
9. 'दिहिर्दुहिर्मेहतिरोहती—' (व्याघ्रभूतिकारिका 7-2-10) इत्यत्र नास्य धातोर्ग्रहणम्; अपि तु, आदादिकस्यैवेति, अत्र इड् भवत्येव । सन्नन्ते ण्वुलि, 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पे, रूपद्वयं बोध्यम् ।

A. 'आराधय सपत्नीकः प्रीता **कामदुघा** हि सा ।' रघुवंशे 1. 81.
B. 'अदन् मधुघ्नो द्विषते विसृज्य श्वल्कजं विश्वमुदं **दुहानः** ।' धा. का. 2. 44.

हिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतोहतिवत् (760) ज्ञेयानि । [1]जगद्द्रोही[A] ।

(855) **"दूङ् परितापे"** (IV-दिवादिः-1133.अक.सेट्.आत्म.) **स्वादिः** ।

**परितापः=खेदः ।**

'दुनोति दूयते तापे, दवतीति गतौ पदम् ॥' (श्लो. 22) इति **देवः** ।

ण्यन्ते, सन्नन्ते, यङन्ते च क्रमेण, दावकः-विका, दुदूषकः-षिका, दोदूयकः-यिका ; इत्यादीनि रूपाणि तौदादिककूङ्धातुवत् (238) ज्ञेयानि । शुद्धात् तु इमानि रूपाणि भवन्तीति विशेषः । यथा-दावकः–विका, दविता-त्री, दूयमानः, दविष्यमाणः, प्रदूः-प्रदुवौ-प्रदुवः, [2]दूनम्[B]-दूनः-दूनवान्, दवः, दवितव्यम्, दवनीयम्, दव्यम्-[3]अवश्यदाव्यम्, ईषद्दवः-दुर्दवः-सुदवः, दूयमानः, दवः, दवितुम्, दूतिः, दवनम्, दूत्वा, प्रदूय, दावम् २-दूत्वा २ ;—इति ।

(856) **" दृ हिंसायाम् "** (V-स्वादिः-1280. सक. अनि.पर. **छान्दसः**)

दारकः-रिका, दारकः-रिका, दिदीर्षकः-र्षिका, देद्रीयकः-यिका ; इत्यादीनि सर्वाण्यपि रूपाणि सौवादिक**कृणोति**वत् (245) ज्ञेयानि । अस्य धातोः परस्मैपदित्वात् दृण्वन्-ती इति शतैव भवति, न तु शानजपीति विशेषः ।

(857) **" दृङ् आदरे "**

(VI-तुदादिः-1411. सक. अनि. आत्म. **किरादिः**)

**प्रायेणायमाङ्पूर्वकः ।**

'दरेद् दृणाति द्रियते क्रमाद् भीदारणादरे। ' (श्लो. 36) इति **देवः** ।

---

1. कर्मण्युपपदे, 'सुप्यजातौ—' (3-2-78) इति णिनिः ।
2. धातोरस्य सेट्त्वेऽपि, 'श्र्युकः क्किति' (7-2-11) इति क्ङिति प्रत्यये परतः गुणनिषेधः । तेन निष्ठा, क्तिन्, क्त्वा प्रत्ययेषु इण्णिषेधो ज्ञेयः । अत्र, 'स्वादय ओदितः' (ग. सू. दिवादौ) इत्यनेन ओदित्त्वस्यातिदेशात्, 'ओदितश्च' (8-2-45) इति निष्ठानत्वम् ।
3. 'ओरावश्यके' (3-1-125) इति ण्यति, गुणावादेशयो रूपमेवम् ।

A. 'गोविन्दस्तुहिनांशुरम्यवदनः कंसं **जगद्द्रोहिनं** ....... ॥' धा. का. 1. 92.

B. 'किं सूयसे गिरम**दून** नितान्तदीनामुड्डीनकाकसम भूपतिधीनमेतत् ।' धा. का. 2.58



| | | | |
|---|---|---|---|
| दारकः-रिका, | दारकः-रिका | [1]दिदरिषकः-षिका, | [2]देद्रीयकः-यिका ; |
| आदर्ता-दर्त्री, | दारयिता-त्री, | दिदरिषिता-त्री, | देद्रीयिता-त्री ; |
| — | दारयन्-न्ती, | दारयिष्यन्-न्ती-ती ; | — |
| [3]आद्रियमाणः, | दारयमाणः, | दिदरिषमाणः, | देद्रीयमाणः ; |
| [4]आदरिष्यमाणः, | दारयिष्यमाणः, | दिदरिषमाणः, | देद्रीयिष्यमाणः ; |
| [5]आदृत्-आदृतौ-आदृतः ; | — | — | — |
| आदृतम्-आदृतः-आदृतवात्, | दारितः, | दिदरिषितः, | देद्रीयितः-तवान् ; |
| दरः, [6]आदरी,[A] | दारः, | दिदरिषुः, | देद्रियः ; |
| आदर्तव्यम्, | दारयितव्यम् | दिदरिषितव्यम्, | देद्रीयितव्यम् ; |
| आदरणीयम्, | दारणीयम्, | दिदरिषणीयम्, | देद्रीयणीयम् ; |
| [7]आदृत्यः,[B] | दार्यम्, | दिदरिष्यम्, | देद्रीय्यम् ; |
| ईषद्दरः-दुर्दरः-सुदरः ; | | — | — |
| द्रियमाणः, | दार्यमाणः | दिदरिष्यमाणः | देद्रीय्यमाणः ; |
| [8]आदरः,[C] | दारः, | दिदरिषः | देद्रीयः ; |
| आदर्तुम्, | दारयितुम्, | दिदरिषितुम्, | देद्रीयितुम् ; |
| आदृतिः, | [9]दृतिः, दारणा, | दिदरिषा, | देद्रीया ; |

---

1. '**किरश्च** पञ्चभ्यः' (7-2-75) इति सनि इडागमः । द्वित्वादिकम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
2. '**रीङ् ऋतः**' (7-4-27) इति यङन्ते रीङागमः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
3. 'तुदादिभ्यः—' (3-1-77) इति शप्रत्यये, '**रिङ् शयग्लिङ्क्षु**' (7-4-28) इति रिङादेशे, इयङादेशे च रूपम् ।
4. 'ऋद्धनोः स्ये' (7-2-70) इति स्यप्रत्ययस्येडागमः ।
5. क्विपि, तुगागमे रूपम् । एवं ल्यप्यपि तुगागमो ज्ञेयः ।
6. तच्छीलादिषु कर्तृषु '**जिदृक्षि**—' (3-2-157) इत्यादिना इनिप्रत्यये रूपमेवम् ।
7. 'एतिस्तुशास्वृदृजुषः—' (3-1-109) इति क्यपि, तुगागमे च रूपम् ।
8. 'ग्रहवृदृनिश्चिगमश्च' (3-3-58) इदि घञपवादोऽप् प्रत्ययः ।
9. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच् । **दृतिः**=चर्मनिर्मित-भस्त्रिका ।

A. 'शैले विश्रयिणं क्षिप्र**मनादरिण**मभ्यमी ।' भ. का. 7.20.

B. '**आदृत्य**स्तेन वृत्येन स्तुत्यो जुष्येण संगतः ।' भ. का. 6.56.

C. '**आदरेण** गमं चक्रुर्विषमेष्वप्यसंघसाः ।' भ. का. 7.56.

दरणम्, दारणम्, दिदरिषणम्, देद्रीयणम्;
दृत्वा, दारयित्वा, दिदरिषित्वा, देद्रीयित्वा;
आदृत्य, आदार्य आदिदरिष्य, आदेद्रीय्य;
दारम् २, } दारम २, } दिदरिषम् २, } देद्रीयम् २; }
दृत्वा २, } दारयित्वा २, } दिदरिषित्वा २, } देद्रीयित्वा २. }

(858) "**दृम्फ उत्क्लेशे**" (VI-तुदादिः-1314. अक. सेट्. पर.)

**तृम्फादिः।**

दृम्फकः-म्फिका, दृम्फकः-म्फिका, दिदृम्फिषकः-षिका, दरीदृफकः-फिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**तृम्फति**वत् (768) ज्ञेयानि। [A]दृफितः।

(859) "**दृप हर्षमोहनयोः**" (IV-दिवादिः-1196. अक. वेट्. पर.)

**रधादिः।**

'**हर्षमोचनयोः**' इति **मैत्रेयः**। '**मोहनम्**=गर्वः' इति **स्वामी**। धातोरस्यानुदात्तत्वेऽपि नात्मनेपदित्वम्, न वा इण्णिषेधः। किं तु '**अनुदात्तस्य च** ऋदुपधस्य—' (6-1-59) इत्यत्र ग्रहणार्थमेवानुदात्तत्वम्। '**रधादिभ्यश्च**' (7-2-45) इत्यनेन, तेनेड्विकल्पः। 'रधादित्वादिमौ-वेट्कावमर्थमनुदात्तता।' इति वचनमिह स्मर्तव्यम्।

दर्पकः-र्पिका, दर्पकः-र्पिका, दिदर्पिषकः-षिका-दिदृप्सकः-प्सिका, दरीदृपकः-पिका; दर्पिता-द्रप्ता-दर्प्ता-र्त्री, इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**तृप्यति**वत् (770) ज्ञेयानि। [1]दर्पणः।

(860) "**दृप उत्क्लेशे**" (VI-तुदादिः-1313. अक. सेट्. पर.)

'**दृफ**' इति द्वितीयान्तोऽयमित्येके।

दर्पकः-र्पिका, दर्पकः-र्पिका, दिदर्पिषकः-षिका, दरीदृपकः-पिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**तृपति**वत् (772) ज्ञेयानि।

---

1. दर्पयति=हर्षयतीत्यर्थे ण्यन्तादस्मात् नन्द्यादित्वात् (3-1-134) कर्तरि ल्युप्रत्यये, अनादेशे च रूपमेवम्। **दर्पणः**=आदर्शः।

A. 'युद्धेषूद्दृपिता हितेष्व**दृफिता** यस्मिन् ऋफन्ती सुरान्
ऋम्फार्हा पृतना स्थिता सुगुफितैर्मार्ल्यैः कचान् गुम्फती॥' धा. का. 2.74.



(861) "**दृप सन्दीपने**"

(X-चुरादिः-1821. सक. सेट्. उभ. **आधृषीयः**।)

'**तृप तृप्तौ**' (773) इत्यस्य पाठान्तरोऽयम्। दर्पकः-र्पिका, दिदर्पयिषकः-षिका; दर्पकः-र्पिका, दिदर्पिषकः-षिका, दरीदृपकः-पिका; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक**चर्पयति**वत् (554) बोध्यानि।

(862) "**दृभ सन्दर्भे**"

(X-चुरादिः-1823 अक. सेट्. उभ. **आधृषीयः**।)

'दृभी भये विभाषा णौ स्यातां दर्भति दर्भयेत्॥
अनीदितश्च सन्दर्भे दृभति ग्रन्थ ईदितः।' (श्लो. 141-2) इति **देवः**।)

दर्भकः-र्भिका, दिदर्भयिषकः-षिका, दर्भकः-र्भिका, दिदर्भिषक-षिका, दरीदृभकः-भिका; इत्यादीनि रूपाणि चौरादिक**चर्पयति**वत् (554) ज्ञेयानि। णिजभावपक्षे शतरि दर्भन् इति रूपम्।

(863) "**दृभी ग्रन्थे**" (VI-तुदादिः-1323. सक. सेट्. पर.)

अनीदितश्च सन्दर्भे दृभति ग्रन्थ ईदितः।' (श्लो. 142) इति **देवः**।

दर्भकः-र्भिका, दर्भकः-र्भिका, दिदर्भिषकः-षिका, दरीदृभकः-भिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिक**तृपति**वत् (772) ज्ञेयानि। [1]दृब्धम्-[A]दृब्धः-दृब्धवान्, दृब्धिः, इति रूपाण्यस्येति विशेषः।

(864) "**दृभी भये**" (X-चुरादिः-1822. सक. सेट्. उभ.)

**आधृषीयः।**

'दृभी भये विभाषा णौ स्यातां दर्भति दर्भयेत्॥' (श्लो. 141) इति **देवः**। आधृषीयत्वेन णिज्विकल्पनात्, णिजभावपक्षे, ईदित्त्वात् शुद्धाद्धातोः [B]दर्भन्, निष्ठायामिण्णिषेधे दृब्धम्-दृब्धः-दृब्धवान् इति रूपाणि भवन्तीति विशेषः।

---

1. 'श्वीदितो निष्ठायाम् (7-2-14) इति निष्ठायाम् इण्णिषेधः। 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वे, जश्त्वे च रूपमेवम्। एवं क्तिन्यपि, 'तितुत्र—' (7-2-9) इतीण्णिषेधे, धत्वजश्त्वयोः **दृब्धिः** इति रूपम्।

A. 'पीयूषोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा
**दृब्ध**स्रग्धरचृत्तकैश्यविधितां शोभां जुडन्त्योऽजुनन्।' धा. का. 2. 75.

B. 'प्रजहार हरिं रणेष्वतर्पन् सुदृढं छर्दितमन्युर**प्रदर्भन्**॥' धा. का. 3.49.

अन्यानि सर्वाण्यपि रूपाणि चौरादिकचर्पयतिवत् (554) ज्ञेयानि ।

(865) " **दृशिर् प्रेक्षणे** " (I-भ्वादिः-988. सक. अनि. पर.)

दर्शकः-र्शिका, दर्शकः-र्शिका, [1]दिदृक्षकः-क्षिका, [2]दरीदृशकः-शिका ; [3]द्रष्टा-द्रष्ट्री, दर्शयिता-त्री, दिदृक्षिता-त्री, दरीदृशिता-त्री ; [4]पश्यन्-न्ती, [हरिं][5]पश्यन् [विमुच्यते], दर्शयन्-न्ती, [ग्रामं] [6]सन्दिदृक्षन्-न्ती; द्रक्ष्यन्-न्ती-ती, दर्शयिष्यन्-न्ती-ती, [ग्रामं] सन्दिदृक्षिष्यन्-न्ती-ती ; — [7]संपश्यमानः, दर्शयमानः, [8]दिदृक्षमाणः, दरीदृश्यमानः ; सन्द्रक्ष्यमाणः, दर्शयिष्यमाणः, दिदृक्षिष्यमाणः, दरीदृशिष्यमाणः ; [9]तादृक्-तादृशौ-तादृशः ; — — — दृष्टम्-दृष्टः-दृष्टवान्, दर्शितः, दिदृक्षितः, दरीदृशितः-तवान् ;

---

1. सन्नन्तात्ण्वुलि, सनो झलादित्वेन, 'हलन्ताच्च' (1-2-10) इति कित्त्वेन, अमभावे, द्वित्वादिषु कृतेषु, 'व्रश्च—' (8-2-36) इत्यादिना धातुशकारस्य षकारे, 'षढोः कः सि' (8-2-41) इति तस्य ककारे, षत्वे च रूपमेवम् । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
2. यङन्ते सर्वत्र 'रीगृदुपधस्य च' (7-4-90) इत्यभ्यासे रीगागमः ।
3. तृचि, 'सृजिदृशोर्झल्यमकिति' (6-1-58) इति अमागमे, यणादेशे च रूपमेवम् । एवं तव्यदादिष्वपि ज्ञेयम् ।
4. शतरि, शपि, 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छ-पश्यर्च्छ—' (7-3-78) इति पश्यादेशे, पररूपे, च रूपमेवम् । एवं शानजन्तेऽपि ज्ञेयम् ।
5. 'लक्षणहेत्वोः क्रियायाः' (3-2-126) इति हेतौ शता । हरिदर्शनं मोक्षहेतुरित्यर्थः ।
6. '**दृशेश्च**—' (वा. 1-3-29) इत्यत्र 'अकर्मकात्' इत्युक्तया, सकर्मकादस्मात् सम्पूर्वकात् तु यथाप्राप्तं परस्मैपदमेव भवतीति, तदन्तादस्मात् सनि परस्मैपदमेव, नात्मनेपदमिति ध्येयम् ।
7. सम्पूर्वकादकर्मकादस्मात्, '**दृशेश्चे**ति वक्तव्यम्' (वा. 1-3-29) इति शानच् ।
8. 'ज्ञाश्रुस्मृ**दृशां** सनः' (1-3-57) इति सन्नन्तादात्मनेपदमेव ।
9. 'त्यदादिषु **दृशो**ऽनालोचने कञ् च' (3-2-60) इत्यनेन क्विन्-कञ् इत्युभौ प्रत्ययौ भवतः । तत्र क्विनि, त्यदादीनां उपपदभूतानां 'आ सर्वनाम्नः' (6-3-91) इत्यनेन दृग्दृशवतुषु परेषु आत्वे, 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति कुत्वे च रूपम् । एवम्, **यादृक्, तादृक्, ईदृक्** इत्यादयोऽपि ज्ञेयाः ।



[1]पश्यः, उत्पश्यः, [2]तादृशः, यादृशः, [3]सदृक्-सदृशः, अन्यादृक्-अन्यादृशः, ईदृक्-कीदृक्-ईदृशः-कीदृशः-[4]ईदृक्षः-कीदृक्षः, तादृक्षः, यादृक्षः, सदृक्षः, अन्यादृक्षः, सदृशी, तादृशी, [5]पापदृश्वा[A]-पारदृश्वरी, विवेकदृश्वा,[B]यमास्यदृश्वरी, [6]असूर्यम्पश्याः[C][राजदाराः], [7]उग्रम्पश्यः[D], [8]कश्यपः,

---

1. कर्तरि, 'पाघ्राध्माधेट्**दृशः** शः' (3-1-137) इति शप्रत्यये, शपि, 'पाघ्राध्मास्थाम्नादाण्**दृश्य**र्ति—' (7-3-78) इत्यादिना पश्यादेशे, पररूपे **पश्यः** इति भवति । 'अनुपसर्गात्' इति, अत्र न सम्बध्यते, इति **केचित्** । तेन **पश्यः** इत्येव सिद्ध्यति । न **तूत्पश्य** इति ।
2. 'त्यदादिषु **दृशो**ऽनालोचने कञ्च' (3-2-60) इत्यनेन कनि प्रत्यये सर्वनाम्नो **दृग्दृशवतुषु** दीर्घे रूपम् । स्त्रियाम्, 'टिड्ढाणञ्' (4-1-15) इत्यादिना ङीप् ।
3. 'समानान्ययोश्च' (वा. 3-2-60) इति क्विन्कञौ प्रत्ययौ भवतः । तत्र, '**दृग्दृशवतुषु**' (6-3-89) इत्यनेन समानशब्दस्य सभावे **सदृक् सदृशः सदृक्षः** इति भवति । ईदृक् इत्यादिषु क्विन्कञोः प्रत्यययोः 'इदंकिमोरीश्की' (6-3-90) इत्यनेन प्रकृतेः ई की इत्येतौ आदेशौ भवत इति विशेषः ।
4. '**दृशेः** क्सश्च वक्तव्यः' (वा. 3-2-60) इति क्सप्रत्यये रूपम् ।
5. कर्मण्युपपदे, भूतकाले, '**दृशेः** क्वनिप्' (3-2-94) इति क्वनिप् । 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इत्येव क्वनिप्प्रत्ययेऽस्मादपि सिद्धे, अत्र सूत्रे पुनर्वचनं मनिनादिनिवृत्त्यर्थम् । स्त्रियाम्, 'वनो र च' (4-1-7) इति ङीप्, रेफादेशश्च ।
6. 'असूर्यललाटयो**र्दृशि**तपोः' (3-2-36) इति खश् । शित्त्वात् **पश्या**देशः । खित्त्वात् मुम् । **असूर्य** इति निपातनात् नञोऽसमर्थसमासः ।
7. '**उग्रम्पश्ये**रम्मदपाणिन्धमाश्च' (3-2-37) इत्यनेन खश्प्रत्ययान्तो निपातितः । **उग्र**मिति क्रियाविशेषणम् । '**उग्रम्पश्यः** क्रूरदृष्टिरुग्रं पापं विदन्नपि ।' इति **प्र. सर्वस्वे** ।
8. पश्यतीति **पश्यः** । स एव पश्यकः—स्वार्थे कन् । '**पश्यकः कश्यपो**ऽभवत्' इति पौराणिकवचनात् पृषोदरादित्वात् **कलमशम्-कश्मलम्** इत्यादिष्विव वर्णव्यत्ययः ।

A. 'मां घ्नता भवताऽकारि निश्शङ्कं **पापदृश्वना** ॥' भ. का. 6. 130.
B. '**यमास्यदृश्वरी** तस्य ताटका वेत्ति विक्रमम् ।' भ. का. 5. 34.
C. '**असूर्यम्पश्यया** मूर्त्या हृता तां मृगयावहे ॥' भ. का. 6. 99.
D. '**उग्रम्पश्या**कुलेऽरण्ये शालीनत्वविवर्जिता ।' भ. का. 4. 23.

[1]सुदर्शनः, [2]ददृशिवान्-ददृश्वान्[A], मार्गदर्शी, दर्शः, [B]दिदृक्षुः, [C]सन्दिदर्शयिषुः, दरीदर्शः ;

द्रष्टव्यम्, दर्शयितव्यम्, दिदृक्षितव्यम्, दरीदृशितव्यम् ;

दर्शनीयम्, दर्शनीयम्, दिदृक्षणीयम्, दरीदृशनीयम् ;

दृश्यम्, दर्श्यम्, दिदृक्ष्यम्, दरीदृश्यम् ;

[3]ईषद्दर्शनः-दुर्दर्शनः-सुदर्शनः ; — —

दृश्यमानः, दर्श्यमानः, दिदृक्ष्यमाणः, दरीदृश्यमानः ;

दर्शः, [4]आदर्शः,[D], [5]दर्शः दर्शः, दिदृक्षः, दरीदृशः ;

द्रष्टुम्, [6]द्रष्टुम्,[E] दर्शयितुम्, दिदृक्षितुम्, दरीदृशितुम् ;

[7]दृक्, दृष्टिः, [8]दृष्टिः, दर्शना, दिदृक्षा, दरीदृशा ;

दर्शनम्, [9]पश्यः, दर्शनम्, दिदृक्षणम्, दरीदृशनम् ;

---

1. सुष्ठु दर्शयतीति **सुदर्शनः**। नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः।
2. क्सौ, '**दृशे**श्चेति वक्तव्यम्' (वा. 7-2-68) इति इड्विकल्पे रूपद्वयम्।
3. ईषदाद्युपपदेषु 'भाषायां शासियुधि**दृशि**—' (वा. 3-3-130) इति खलपवादो युच्प्रत्ययः। 'अयं युच् वा।' इति **प्र. कौमुदी**। तेन, पक्षे **ईषद्दर्शः-दुर्दर्शः-सुदर्शः** इत्यपि साधु।
4. करणेऽधिकरणे चार्थे, 'पुंसि संज्ञायां घः—' (3-3-118) इति घप्रत्ययः। **आदर्शः**= दर्पणम्।
5. दृश्येते सूर्याचन्द्रमसावस्मिन् दिवसे इत्यधिकरणे, 'हलश्च' (3-3-121) इति संज्ञायां घञ्। **दर्शः**=अमावास्या।
6. 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3-3-10) इति क्रियार्थक्रियायां तुमुन्।
7. स्त्रियाम्, सम्पदादित्वात् (वा. 3-3-94) भावे क्विप्। 'क्तिन्नपीष्यते' (वा. 3-3-94) इत्युक्त्या **दृष्टि**रित्यपि साधुः।
8. 'क्तिच्क्तौ च संज्ञायाम्' (3-3-174) इति संज्ञायां क्तिच्। **दृष्टिः**=नेत्रम्।
9. यद्यपि, '**पश्यार्थै**श्चानालोचने' (8-1-25) इत्यत्र निर्देशबलात् दर्शनम् (=**पश्यः**, भावे शप्रत्ययोऽयम्। ल्युडपवादोऽयमिति प्रतीयते, तथाऽपि, '**अदर्शनम्** लोपः' (1-1-60) इति ल्युडन्तस्यापि सूत्रकारनिर्देशात् ल्युडपि भवति।

A. 'प्राहतनादित्यकरोपमस्तः पुरीं **ददृश्वान्** गजतावृतां सः॥' वा. वि. 2. 23.
B. 'संकथेच्छुरभिधातुमनीशा सम्मुखी न च बभूव **दिदृक्षुः**।' शि. व. 10. 41.
C. '**सन्दिदर्शयिषुः** साम निजुह्नूषुः क्षपाटताम्।' भ. का. 5. 64.
D. 'अदृश्यतादर्शतलामलेषु च्छायेव या स्वर्जलधेर्जलेषु॥' शि. व. 3. 35.
E. 'वयमद्यैव गच्छामो रामं **द्रष्टुं** त्वरान्विताः।' भ. का. 7. 29.



दृष्ट्वा, दर्शयित्वा, दिदृक्षित्वा, दरीदृशित्वा ;

सन्दृश्य, प्रदर्श्य, प्रदिदृक्ष्य, प्रदरीदृश्य ;

[1]कन्यादर्शं [वरयति], [A]मांसशोणितसन्दर्शं, विप्रदर्शम् ;

दर्शम् २, दृष्ट्वा २, } दर्शम् २, दर्शयित्वा २, } दिदृक्षम् २, दिदृक्षित्वा २, } दरीदृशम् २ ; दरीदृशित्वा २ ; }

[2]पशुः.

## (866) "दृह वृद्धौ" (I-भ्वादिः-733. अक. सेट्. पर.)

दर्हकः-र्हिका, दर्हकः-र्हिका, दिदर्हिषकः-षिका, [3]दरीदृहकः-हिका ;

दर्हिता-त्री, दर्हयिता-त्री, दिदर्हिषिता-त्री, दरीदृहिता-त्री ;

दर्हन्-न्ती, दर्हयन्-न्ती, दिदर्हिषन्-न्ती ; —

दर्हिष्यन्-न्ती-ती, दर्हयिष्यन्-न्ती-ती, दिदर्हिषिष्यन्-न्ती-ती ; —

—दर्ह्यमाणः, दर्हयिष्यमाणः, — दरीदृह्यमाणः, दरीदृहिष्यमाणः ;

[4]प्रदृक्-प्रदृग्-प्रदृहौ-प्रदृहः ; — — —

दृहितम्-तः-तवान्, [5]दृढः, दर्हितः, दिदर्हिषितः, दरीदृहितः-तवान् ;

दृहः, संदर्ही, दर्हः, दिदर्हिषुः, दरीदर्हः ;

दर्हितव्यम्, दर्हयितव्यम्, दिदर्हिषितव्यम्, दरीदृहितव्यम् ;

दर्हणीयम्, दर्हणीयम्, दिदर्हिषणीयम्, दरीदृहणीयम् ;

[6]दृह्यम्, दर्ह्यम्, दिदर्हिष्यम्, दरीदृह्यम् ;

---

1. कर्मण्युपपदे 'कर्मणि **दृशि**विदोः साकल्ये' (3-4-29) इति णमुल्। यां यां कन्यां पश्यति तास्सर्वा अपि वरयतीति भावः।
2. 'अर्जि**दृशि**—' [द. उ. 1. 112] इति कुप्रत्यये, यथाक्रमं पश्वादेशे च रूपम्। **पशुः**=मन्त्रबाह्यो जनः।
3. यङन्तात् ण्वुलि, 'रीगृदुपधस्य च' (7-4-90) इति रीगागमः। एवं यङन्ते सर्वत्र ज्ञेयम्।
4. क्विपि, 'दादेर्धातोर्घः' (8-2-32) इति घत्वे, जश्त्वचर्त्वयो रूपम्।
5. '**दृढः** स्थूलबलयोः' (7-2-20) इति, निष्ठायामिडभावहकारलोपढत्वानां निपातनात् स्थूले बले च वाच्ये रूपसिद्धिः। एतच्च '**दृहिः** प्रकृत्यन्तरमस्ति' इति **भाष्यकार**वचनात् (1-1-4) ज्ञायते। **वार्तिककार**मते तु **दृहि** इति इदितो धातोरेवैतन्निपातनम्, न त्वस्येति ज्ञायते।
6. 'ऋदुपधाच्च—' (3-1-110) इति क्यप्।

A. '**मांसशोणितसन्दर्शं** तुण्डघातमयुध्यत॥' भ. का. 5. 101.

| | | | |
|---|---|---|---|
| ईषद्दर्हः-दुर्दर्हः-सुदर्हः ; — | — | — | |
| दृह्यमाणः, | दर्ह्यमाणः, | दिदर्हिष्यमाणः, | दरीदृह्यमाणः ; |
| दर्हः, | दर्हः, | दिदर्हिषः, | दरीदृहः ; |
| दर्हितुम्, | दर्हयितुम्, | दिदर्हिषितुम्, | दरीदृहितुम् ; |
| [1]दृग्धिः, | दर्हणा, | दिदर्हिषा, | दरीदृहा ; |
| दर्हणम्, | दर्हणम्, | दिदर्हिषणम्, | दरीदृहणम् ; |
| दर्हित्वा, | दर्हयित्वा, | दिदर्हिषित्वा, | दरीदृहित्वा ; |
| प्रदृह्य, | प्रदर्ह्य, | प्रदिदर्हिष्य, | प्रदरीदृह्य ; |
| दर्हम् २, दर्हित्वा २, | दर्हम् २, दर्हयित्वा २, | दिदर्हिषम् २, दिदर्हिषित्वा २, | दरीदृहम् २ ; दरीदृहित्वा २. |

(867) "**दृहि वृद्धौ**" (I-भ्वादिः-734. अक. सेट्. पर.)

दृंहकः-हिका, दृंहकः-हिका-दिदृंहिषकः-षिका, दरीदृंहकः-हिका ; इत्यानीतराणि सर्वाण्यपि रूपाणि दृहधातुवत् (866) ज्ञेयानि ।

[2]दृढः, [3]दृंहा इति निष्ठायां, स्त्रियां च रूपे अस्य धातोः भवतः। नुम् सर्वत्र भवतीति च विशेषः। [A]दृंहितः ।

(868) "**दॄ विदारणे**" (IX-क्र्यादिः-1493. सक. सेट्. पर.) **प्वादिः** ।

'भये च' इति **कविकल्पद्रुमे** । अर्थविशेषे **घटादिः** । [अ]

'दरेद् दृणाति द्रियते क्रमाद् भीदारणादरे ।' (श्लो. 36) इति **देवः** ।

---

1. क्तिनि, घत्वधत्वयो रूपम् ।
2. '**दृढः** स्थूलबलयोः' (7-2-20) इत्यनेन स्थूले बले च वाच्ये, धातोरस्य क्तप्रत्ययस्येडभावः नकारहकारलोपः, निष्ठातकारस्य ढत्वं च निपात्यते । अन्यत्र **दृंहितम्-दृंहितवान्** इत्येव रूपे ।
3. स्त्रियाम्, 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः ।

[अ] 'दॄ भये' इति क्र्यादिषु पठितो धातुः, अस्यैव मित्त्वार्थमर्थविशेषे घटादित्वम् इति बहूनां मतम्। **क्षीरस्वाम्यादय**स्तु भ्वादिषु स्वतन्त्रं धातुममुं मन्यन्ते। **देवो**ऽपि तेषामनुकूलः । **सिद्धान्तकौमुद्या**द्यनुसारेणास्माभिः अर्थविशेषे घटादित्वमङ्गीकृत्य विलिखितम् ।

A. 'तच्छ्रुत्वा **परिदृंहिता**दरमसौ नन्दो बृहद्भोजनैः—।' धा. का. 1. 92.



[1]दारकः-रिका, दारकः-[2]दरकः-[A]रिका, [3]दिदरिषकः-दिदरीषकः-दिदीर्षकः-र्षिका, [4]देदिरकः-रिका ;

[5]दरिता-दरीता-त्री, दारयिता-दरयिता-त्री, दिदरिषिता-दिदरीषिता-दिदीर्षिता-त्री, देदिरिता-त्री ;

[6]दृणन्-ती, दारयन्-दरयन्-न्ती, दिदरिषन्-दिदरीषन्-दिदीर्षन्-न्ती ; — दरिष्यन्-दरीष्यन्-न्ती-ती, दारयिष्यन्-दरयिष्यन्-न्ती-ती, दिदरिषिष्यन्-दिदरीषिष्यन्-दिदीर्षिष्यन्-न्ती-ती ; —

[7]व्यतिदृणानः, दारयमाणः-दरयमाणः, व्यतिदिदरिषमाणः-व्यतिदिदरीषमाणः-व्यतिदिदीर्षमाणः, देदीर्यमाणः ;

व्यतिदरिष्यमाणः-व्यतिदरीष्यमाणः, दारयिष्यमाणः-दरयिष्यमाणः, व्यतिदिदरि[री]षिष्यमाणः, व्यतिदिदीर्षिष्यमाणः, देदिरिष्यमाणः ;

[8]प्रदीः-प्रदिरौ-प्रदिरः, [9]दृदृत् ; — —

---

1. 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा. 7-1-102) इति वचनात् इत्वं बाधित्वाऽत्र वृद्धिः । एवं गुणवृद्धियोग्यस्थलेषु ज्ञेयम् ।
2. 'दॄ भये' इति घटादिषु पाठात् मित्त्वम् । तेन ण्यन्ते, 'मितां ह्रस्वः' (6-4-92) इत्युपधाया ह्रस्वः । एवं घटादिषु पाठे ण्यन्ते सर्वत्र ज्ञेयम् ।
3. 'इट् सनि वा' (7-2-41) इतीड्विकल्पः । इट्पक्षे, '**वॄतो** वा' (7-2-38) इति दीर्घविकल्पः । तेन सन्नन्ते सर्वत्र रूपत्रयं बोध्यम् ।
4. यङन्तात् ण्वुलि, 'ॠत इद् धातोः' (7-1-100) इति इत्वे रपरत्वे, अभ्यासे गुणे च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
5. तृचि, इटो दीर्घविकल्पाद्रूपद्वयम् । एवं तव्यदादिष्वपि ज्ञेयम् ।
6. शतरि, 'क्र्यादिभ्यः—' (3-1-81) इति श्नाप्रत्यये, '**प्वादीनां** ह्रस्वः' (7-3-80) इत्यङ्गस्य ह्रस्वे, 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे णत्वे च रूपम् । एवं शानजन्तेऽपि प्रक्रिया ज्ञेया ।
7. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
8. क्विपि, इत्वे रपरत्वे च, '**र्वो**रुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे विसर्गे च रूपम् ।
9. भयार्थादस्मात्, तच्छीलादिषु कर्तृषु '**दृणाते**र्ह्रस्वश्च' (वा. 3-2-178) इति क्विपि, अङ्गस्य द्वित्वे ह्रस्वे च, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुकि च रूपम् ।

A. 'प्र [अ] ह्वल्यचित्तां स्मरयत्यसौ मां नन्दात्मजः **सन्दरकः** खलानाम् ।' धा. का. 2. 11.

[1]दीर्णम्-दीर्णः-दीर्णवान्, [A]दारितः-दरितः, दिदरिषितः-दिदरीषितः-दिदीर्षितः, देदिरितः-तवान्;
[2]दरः-दरी, [3]दाराः, [4]पुरन्दरः,[B] [5]भगन्दरः, विदारी, दारः-दरः, दिदरिषुः-दिदरीषुः-दिदीर्षुः, देदिरः;
दरितव्यम्-दरीतव्यम्, दारयितव्यम्-दरयितव्यम्, दिदरिषितव्यम्-दिदरीषितव्यम्-दिदीर्षितव्यम्, देदिरितव्यम्;
दरणीयम्, दारणीयम्-दरणीयम्, दिदरिषणीयम्-दिदरीषणीयम्-दिदीर्षणीयम्, देदिरणीयम्;
दार्यम्, दार्यम्-दर्यम्, दिदरिष्यम्-दिदरीष्यम्-दिदीर्ष्यम्, देदीर्यम्;
ईषद्दरः-दुर्दरः-सुदरः; — — —
दीर्यमाणः, दार्यमाणः-दर्यमाणः, दिदरिष्यमाणः-दिदरीष्यमाणः-दिदीर्ष्यमाणः, देदीर्यमाणः;
दरः, दारः-दरः, दिदरिषः-दिदरीषः-दिदीर्षः, देदिरः;
दरितुम्-दरीतुम, दारयितुम्, दरयितुम्, दिदरिषितुम्-दिदरीषितुम-दिदीर्षितुम, देदिरितुम्;

---

1. निष्ठायाम्, इत्वे रपरत्वे दीर्घे, च 'रदाभ्याम्—' (8-2-42) इति निष्ठानत्वे णत्वे च, रूपम्।
2. पचादिषु पाठात् अच्। स्त्रियाम् गौरादिपाठात् (4-1-41) ङीष् इति **माधवः**। पचादिषु '**दरट्**' इति पाठात् टित्त्वेन, 'टिड्ढा—' (4-1-15) इति ङीप् इति **क्षीरस्वामी**।
3. '**दार**जारौ कर्तरि णिलुक् च' (वा. 3-3-20) इति कर्तरि घञ्। दारयन्ति इति **दाराः**=पत्नी। बहुवचनं तु लोकाद्भवति।
4. '**पूः**सर्वयो**र्दारि**सहोः' (3-2-41) इति ण्यन्तात् खच्। 'खित्यनव्ययस्य' (6-3-66) इति वर्तमाने, 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुम्। 'खचि ह्रस्वः' (6-4-94) इति वा, 'मितां ह्रस्वः' (6-4-92) इति वा ह्रस्वः। 'वाचंयम**पुरन्दरौ** च' (6-3-69) इत्यनेन निपातनादमन्तत्वम्। पुरं दारयतीति **पुरन्दरः**=इन्द्रः।
5. '**भगे** च **दारे**रिति वक्तव्यम्' (वा. 3-2-41) इति खचि, मुमि च रूपम्। **भगन्दरः**= व्याधिविशेषः।

A. 'क्रव्यात्पूगैः पुष्कराण्यानकानां प्रत्याशाभिर्मेदसो **दारितानि**।' शि. व. 18. 78.
B. 'पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धृताः
शीतांशोर्द्युतयः **पुरन्दर**पुरीसीम्नामुपस्कुर्वते।' अनर्घराघवे 2. 73.



[1]दीर्णिः, दारणा-दरणा, दिदरिषा-दिदरीषा-दिदीर्षा, देदिरा;
दरणम्, दारणम्-दरणम्, दिदरिषणम्-दिदरीषणम्-दिदीर्षणम्, देदिरणम्;
[2]दीर्त्वा, दारयित्वा-दरयित्वा, दिदरिषित्वा-दिदरीषित्वा-दिदीर्षित्वा, देदिरित्वा;
विदीर्य, विदार्य-[3] विदरय्य, विदिदरिष्य-विदिदरीष्य-विदिदीर्ष्य, विदेदीर्य;
[4]उरोविदारं[A] [प्रतिचस्करे नखैः।]

दारम् २, } दारम् २- [5]दरम् २, दारम् २, } दिदरिषम् २-दिदरीषम् २-
दीर्त्वा २, } दारयित्वा २-दरयित्वा २, } दिदरिषित्वा २-दिदरीषित्वा २-
दिदीर्षम् २, } देदिरम् २; }
दिदीर्षित्वा २, } देदिरित्वा २. }

[6]दृतिः, [7]दारु, [8]दर्दरीकम्, [9]दारुणः, [10]दरत्, [11]दृषत्, [12]दर्दुरः, [13]उदरम्.

---

1. 'ॠल्वादिभ्यः—' (वा. 8-2-44) इति क्तिनस्तकारस्य नत्वे णत्वे च रूपम्।:
2. 'श्र्युकः क्किति' (7-2-11) इति क्त्वाया इण्निषेधः।
3. भयार्थे ण्यन्तात् ल्यपि, उपधाह्रस्वे, 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
4. 'परिक्लिश्यमाने च' (3-4-55) इति णमुल्।
5. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति ण्यन्ताण्णमुलि दीर्घविकल्पः।
6. '**दृणातेः** किद्ध्रस्वश्च' [द. उ.1-76] इति तिप्रत्यये रूपम्। ह्रस्वश्च। **दृतिः**= भस्त्रा।
7. 'दॄसनिजनि—' [द. उ. 1.88] इति ञुण्प्रत्यये वृद्धौ च रूपम्। **दारु**= काष्ठम्।
8. 'फर्फरीकादयश्च' [द. उ. 3.38] इत्यत्र पाठात् साधुः। **दर्दरीकम्** = वाद्यविशेषः।
9. 'कॄवॄतॄ**दारिभ्य** उनन्' [द. उ. 5.52] इत्युनन्प्रत्ययः। **दारुणः**=घोरः।
10. 'श्रॄदॄभसोऽदिः' [द. उ. 6.42] इत्यदिप्रत्ययः। **दरत्**=भीरुः।
11. '**दृणातेः** षुग्घ्रस्वश्च' [द. उ. 6. 45] इत्यदिप्रत्यये षुगागमह्रस्वौ भवतः **दृषत्**=शिला।
12. 'मुकुर**दर्दुरौ**' [द. उ. 8.23] इत्युरच्प्रत्ययो दुगागमः गुणश्च निपात्यते **दर्दुरः**=मण्डूकः।
13. 'उदि **दृणा**तेरलचौ पूर्वपदान्त्यलोपश्च' [द. उ. 8-97] इति अल् अच् वा प्रत्ययः, उपसर्गान्त्यलोपश्च। **उदरम्**=जठरम्।

A. 'स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः॥' शि. व. 1.47.

(869) **"देङ् रक्षणे"** (I-भ्वादिः-962. सक. अनि. आत्म.)

'दाञो दत्ते ददातीति दाणो यच्छति दो द्यति ।
दाति दायति दाप्दैपोर्दयते रक्षणे ङितः ॥' (श्लो. 4) इति **देवः** ।

दायकः-यिका, दापकः-पिका, दित्सकः-त्सिका, देदीयकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकदानार्थकदाण्धातुवत् (831) ज्ञेयानि। [1]प्रणिदयमानः, प्रणिदास्यमानः इति शानजन्ते ज्ञेयानि ।

(870) **"देवृ देवने"** (I-भ्वादिः-500. अक. सेट्. आत्म.)

'अर्दने देवयेत् दीव्येत् क्रीडादौ परिकूजने ॥
देवयेतेदितो दिन्वेद् देवेर्देवेत देवने ।' (श्लो. 160-61) इति **देवः** ।

देवकः-विका, देवकः-विका, दिदेविषकः-षिका, देदेवकः-विका; इत्यादीनि सर्वाणि रूपाणि भौवादिककेपतिवत् (261) ज्ञेयानि। [A]देवनम् । [2]आदेवकः, [3]परिदेवी[B], [4]दयूः-दय्वौ-दय्वः, [5]देवरः, [6]देवलः, देवनः युजन्तोऽयम् ।

(871) **"दैप् शोधने"** (I-भ्वादिः-924. सक. अनि. पर.)

'दाति दायति दाप्दैपोः दयते रक्षणे ङितः ॥' (श्लो. 4) इति **देवः** ।

दायकः-यिका, दापकः-पिका, दिदासकः-सिका, दादायकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि आदादिकदाप्धातुवत् (833) ज्ञेयानि ।

---

1. शानचि, आत्वाभावे, अयादेशे, 'नेर्गदनदपतपदघु—' (8-4-17) इत्यादिना णत्वे, च रूपम् ।
2. '**देवि**कुशोश्चोपसर्गे' (3-2-147) इति तच्छीलादिषु कर्तृषु वुन्प्रत्ययः ।
3. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृज**परिदेवि**—' (3-2-142) इति तच्छीलादिषु कर्तृषु घिनुण्प्रत्ययः ।
4. क्विपि, वकारस्य ऊठि, अयादेशे, रूपम् ।
5. 'अर्तिकमिभ्रमि**देवि**—' [द. उ. 8-62] इति अरन्प्रत्ययः। **देवरः**=पति-भ्राता ।
6. 'वृषादिभ्यश्चित्' [द. उ. 8-109] इति कलप्रत्ययः । **देवलः**=ऋषिः ।

A. 'कलोरुकल्लोलकलिन्दजाजले बालैस्तयूभिस्सह देवनोत्सुकम् ॥' धा. का. 1.64.
B. 'श्रुत्वा विस्फूर्जथुप्रख्यं निनादं **परिदेविनी** ।' भ. का. 5. 53.



[1]प्रणिदायन्-प्रनिदायन्-न्ती, इति शतरि रूपमिति विशेषः । [A]अवदातः ।

(872) **"दो अवखण्डने"** (IV-दिवादिः-1148. सक. अनि. पर.)

दायकः-यिका, दापकः-पिका, दित्सकः-त्सिका, देदीयकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकदाण्धातुवत् (831) बोध्यानि । [2]प्रणिद्यन्-द्यती, [3]दितम्-दितः-दितवान्, दितिः, दित्वा, [4]प्रदाय, [5]जनदः,[B] इत्यादीनि रूपाण्यस्य भवन्तीति विशेषः ।

(873) **"द्यु अभिगमने"** (II-अदादिः-1040. सक. अनि. पर.)

द्यावकः-विका, द्यावकः-विका, दुद्यूषकः-षिका, देद्यूयकः-यिका; इति सर्वाण्यपि रूपाणि भौवादिकदुधातुवत् (847) ज्ञेयानि ।

[C]द्युवन्-द्युवती इति शतरि रूपमिति विशेषः । "केचिदस्य सेट्त्वमिच्छन्ति। इति **धातुपारायणे**। तत् 'उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः।' इत्युकारान्तसेट्परिगणने पाठाभावादिच्छामात्रम् ।" इति **माधवधातुवृत्तिः** ।

(874) **"द्युत दीप्तौ"** (I-भ्वादिः-741. अक. सेट्. आत्म.)

प्रायेणायं विपूर्वकः ।

---

1- शतरि, आयादेशे, 'शेषे विभाषा—' (8-4-18) इति प्रपूर्वकात् नेः णत्वविकल्पे च रूपमेवम् ।
2. शतरि, '**दिवादिभ्यः**—' (3-1-69) इति श्यन्प्रत्यये, 'ओतः श्यनि' (7-3-71) इत्योकारलोपः। घुसंज्ञकत्वात् नेर्णत्वम् ।
3. '**द्यति**स्यतिमास्थामित् ति किति' (7-4-40) इतीत्वम्, तकारादौ किति प्रत्यये परतः सर्वत्र ज्ञेयम् । निष्ठायामजन्तोपसर्गात् परत्र तु यथासम्भवं **अत्तः** इत्यादिकानि रूपाणि भवन्त्येव ।
4. 'न ल्यपि' (6-4-69) इति ईत्वनिषेधः। 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परिभाषा 55) इति न्यायेन इत्वमपि न भवति ।
5. क्विबन्तमेतत्। क्विपि सर्वलोपः ।

A. '**स्नातावदातः** स पिबंस्तदाभां जिघ्रन् सुगन्धं विधमन् अघानि ।'
धा. का. 2. 33.
B. 'धर्मविसाय**जनदाः** खलु योऽजनिष्ट दीप्तोष्मपूर्णभुजतूर्णविघूर्णवैरी ॥' धा. का. 2.59.
C. 'गुहाया निरगाद् वाली सिंहो मृगमिव **द्युवन्** ।' भ. का. 6. 119.

द्योतकः-तिका, द्योतकः-तिका, [1]दिद्युतिषकः-दिद्योतिषकः-षिका, [2]देद्युतकः-तिका ;

द्योतिता-त्री, द्योतयिता-त्री, दिद्युतिषिता-दिद्योतिषिता-त्री, देद्युतिता-त्री ;

— द्योतयन्-न्ती, द्योतयिष्यन्-न्ती-ती ; —

द्योतमानः, [A]द्योतयमानः, दिद्युतिषमाणः-दिद्योतिषमाणः, देद्युत्यमानः ;

द्योतिष्यमाणः, द्योतयिष्यमाणः, दिद्युतिषिष्यमाणः-दिद्योतिषिष्यमाणः, देद्युतिष्यमाणः ;

[3]दिद्युत्-दिद्युतौ-दिद्युतः ; — —

[4]द्युतितम्-[B]द्योतितम्-तः, द्योतितः, दिद्युतिषितः-दिद्योतिषितः, देद्युतितः-तवान् ;

[5]द्योतः, [6]खद्योतः, [7]प्रद्योतनः,[C] [8]उद्द्योती, [9]विदिद्युतिवान्, द्योतः, दिद्युतिषुः- [D]दिद्योतिषुः, देद्योतः ;

---

1. सन्नन्ताण्ण्वुलि, 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सेटः सनः क्त्वायाश्च कित्त्वविकल्पनात्, कित्त्वपक्षे गुणप्रतिषेधः, कित्त्वाभावपक्षे गुण इति रूपद्वयम्। 'द्युतिस्वाप्योः सम्प्रसारणम्' (7-4-67) इति अभ्यासे हलादिशेषं बाधित्वा यकारस्य सम्प्रसारणम् इकारः। सन्नन्ते सर्वत्रैषा प्रक्रिया ज्ञेया। क्त्वायामप्येवमेव कित्त्वविकल्पः।
2. यङन्तात् ण्वुलि, '**द्युति**स्वाप्योः—' (7-4-67) इति प्रथमं हलादिशेषं बाधित्वा सम्प्रसारणे, अनन्तरम्, 'गुणो यङ्लुकोः' (7-4-82) इति गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।
3. कर्तरि, क्विपि, '**द्युति**गमिजुहोतीनां द्वे च' (वा. 3-2-178) इति द्वित्वे, अभ्यासे सम्प्रसारणे, रूपमेवम्।
4. '**उदुपधाद्भावादि**कर्मणोरन्यतरस्याम्' (1-2-21) इति निष्ठायाः कित्त्वविकल्पः। एतच्च भावे आदिकर्मणि च या निष्ठा, तत्रैवेति। तेन रूपद्वयम्।
5. इगुपधलक्षणं कप्रत्ययं बाधित्वा पचादिषु (3-1-134) पाठात् कर्तर्यच्प्रत्ययः।
6. खं द्योतयतीति **खद्योतः**=क्रिमिविशेषः। अन्तर्भावितण्यन्तादस्मात् 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्यये रूपम्।
7. तच्छीलादिषु कर्तृषु '**अनुदात्त**तश्च हलादेः' (3-2-149) इति युच्।
8. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
9. लिटः क्वसौ, '**वस्वेका**जाद्घसाम्' (7-2-67) इतीडागमे अभ्यासे सम्प्रसारणे च रूपम्।

A. 'दिशो **द्योतयमानाभिः** दिव्यनारीभिराकुलम्।' भ. का. 8. 46.
B. 'श्रिया समग्रं **द्युतितं** मदेनेव प्रलोठितम्॥' भ. का. 7. 104.
C. '**प्रद्योतन**स्योदयमाप्य गोपाः श्वेतांशुकोन्मेदुरचारुवेषाः।' धा. का. 2. 1.
D. 'मेरोर्जेतुमिवाभोगमुच्चै**र्दिद्योतिषुं** मुहुः॥' भ. का. 7. 107.



द्योतितव्यम्, द्योतयितव्यम्, दिद्युतिषितव्यम्-दिद्योतिषितव्यम्, देद्युतितव्यम् ;

द्योतनीयम्, द्योतनीयम्, दिद्युतिषणीयम्-दिद्योतिषणीयम्, देद्युतनीयम् ;

द्योत्यम्, द्योत्यम्, दिद्युतिष्यम्-दिद्योतिष्यम्, देद्युत्यम् ;

ईषद्द्योतः-दुर्द्योतः-सुद्योतः ; — —

द्युत्यमानः, द्योत्यमानः, दिद्युतिष्यमाणः-दिद्योतिष्यमाणः, देद्युत्यमानः ;

प्रद्योतः, द्योतः, दिद्युतिषः-दिद्योतिषः, देद्युतः ;

द्योतितुम्, द्योतयितुम्, दिद्युतिषितुम्-दिद्योतिषितुम्, देद्युतितुम् ;

[1]विद्युत्, [2]द्युतिः, द्योतना, दिद्युतिषा-दिद्योतिषा, देद्युता ;

द्योतनम्, द्योतनम्, दिद्युतिषणम्-दिद्योतिषणम्, देद्युतनम् ;

[A]द्युतित्वा-द्योतित्वा, द्योतयित्वा, दिद्युतिषित्वा-दिद्योतिषित्वा, देद्युतित्वा ;

प्रद्युत्य, प्रद्योत्य, प्रदिद्युतिष्य-प्रदिद्योतिष्य, प्रदेद्युत्य ;

द्योतम् २, द्युतित्वा २-द्योतित्वा २, } द्योतम् २, द्योतयित्वा २, } दिद्युतिषम् २-दिद्योतिषम् २, दिद्युतिषित्वा २-दिद्योतिषित्वा २, } देद्युतम् २ ; देद्युतित्वा २; }

[3]ज्योतिः.

## (875) "द्यै न्यक्करणे" (I-भ्वादिः-905. सक. अनि- पर.)

'न्यङ्गविधाने' इति क्षीरस्वामी। न्यङ्गम्=कुत्सिताङ्गम्।

द्यायकः-यिका, द्यापकः-पिका, दिद्यासकः-सिका, दाद्यायकः-यिका ;

---

1. स्त्रियाम्, भावादौ, 'सम्पदादिभ्यः—' (वा. 3-3-94) इति क्विप्। क्तिनोऽपवादः।
2. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति इक्प्रत्ययः।
3. '**द्युते**रिसिन् आदेश्च जः' [द. उ. 9-32] इतीसिन्प्रत्यये, आदेश्च जकारादेशः। **ज्योतिः**=ग्रहनक्षत्रादिः। **केचित्तु "अमरटीकायाम्, क्षीरस्वामिना** "ज्योतते **ज्योतिः**।" इत्युक्तम्। वस्तुतस्तु **द्युति**रिव **ज्युति**रपि स्वतन्त्रो धातुः। तस्य **कात्यायनश्रौतसूत्रे** 'तृणेनाव**ज्योत्या**सिच्याप: पुनर**वज्योत्य** निधार्यं त्रिरुद्वासयत्युदक्।' (4-14-5) इति ल्यबन्तः प्रयोगोऽप्युपलभ्यते।" इत्याहुः। '**अवज्योतनम्** दृष्टार्थम्' इति **कर्कभाष्ये**ऽपि ल्युडन्तः प्रयोगोऽप्युपलभ्यते।

A. '**द्युतित्वा** शशिना नक्तं रश्मिभिः परिवर्धितम्।' भ. का. 7.107.

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककायतिवत् (263) ज्ञेयानि। निष्ठायाम्-[1]ध्यानम्[A]-ध्यानः-ध्यानवान् इति रूपाणीति विशेषः ।

(876) "**द्रम गतौ**" (I-भ्वादिः-466. सक. सेट्. पर.)

द्रमकः-मिका, द्रमकः-मिका, दिद्रमिषकः-षिका, [2]दंद्रमिषकः-दन्द्रमकः-मिका ;
द्रमिता-त्री, द्रमयिता-त्री, दिद्रमिषिता-त्री, दन्द्रमिता-त्री ;
[B]द्रमन्-न्ती, द्रमयन्-न्ती, दिद्रमिषन्-न्ती ; —

इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक**क्राम्यति**वत् (283) ज्ञेयानि। द्रमितम्, द्रमित्वा, इति निष्ठायाम् , क्त्वायां चास्य रूपे इति विशेषः। [3]दन्द्रमणः,[C] [4]द्रमिडः ।

(877) "**द्रा कुत्सायां गतौ**" (II-अदादिः-1054. अक. अनि. पर.)

कुत्सितगतिः=पलायनम्, निन्द्रा च। स्वापे निपूर्वकोऽयम्।
'द्रै स्वप्ने द्रायति द्राति कुत्सिते गमने लुकि॥' (श्लो. 6) इति **देवः**।
द्रायकः-यिका, द्रापकः-पिका, दिद्रासकः-सिका, दाद्रायकः-यिका ;
इत्यादीनि सर्वाण्यपि रूपाणि आदादिक**दाति**वत् (833) ज्ञेयानि ।

---

1. 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वम् ।
2. 'नित्यं कौटिल्ये गतौ' (3-1-23) इति गत्यर्थकादस्माद् यङ्। अभ्यासे, 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति नुगागमः। 'स च पदान्तवद् वाच्यः' (वा. 7-4-85) इति नुगागमस्य पदान्तवद्भावेन 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः। तेनात्र यङन्तेषु सर्वत्र रूपद्वयं ज्ञेयम् ।
3. तच्छीलादिषु कर्तृषु, 'जुचङ्क्रम्य**दन्द्रम्य**—' (3-2-150) इत्यादिना यङन्तात् युचि अनादेशे, णत्वे च रूपमेवम्।
4. 'अमन्ताड्डः' [द. उ. 5-7] इति डप्रत्यये, 'आर्धधातुकस्येड्वलादेः' (7-2-35) इतीडागमः। 'नेड् वशि कृति' (7-2-8) इतीण्निषेधस्तु बाहुलकादत्र न प्रवर्तते ।

A. 'ध्यन् दृशा ग्लानरुचिं स कृष्णं ग्लानिं त्यजन् **ध्यान**मले जलान्ते।' धा. का. 2.30.
B. 'वनाद् वनं सानुममन् **द्रमन्** गृहं व्याधोत्करोऽद्दम्मतिमीमिताशयः।' धा. का. 1.60.
C. 'पश्य **दन्द्रमणान्** हंसान् अरविन्दसमुत्सुकान्॥' भ. का. 7.15.



[1]निद्रालुः[A]-तन्द्रालुः[B], [2]तन्द्रा, [3]द्राणम्-द्राणः-द्राणवान् , [4]प्रणिद्राता, इत्यादीन्यस्य रूपाणि यथायथं भवन्तीति विशेषः ।

(878) "**द्राक्षि घोरवासिते च**" (I-भ्वादिः-670. अक. सेट्. पर.)

'**घोरनिवाशिते**' इति **क्षीरस्वामी**। चकारात् **काङ्क्षायाम्** इति **धा. का. व्याख्याने** (1-85)

द्राङ्क्षकः-क्षिका, द्राङ्क्षकः-क्षिका, दिद्रांक्षिषकः-षिका, दाद्रांक्षकः-क्षिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**काङ्क्षति**वत् (183) ज्ञेयानि । क्तिनि [5]द्राक्षा[C] इति विशेषः ।

(879) "**द्राखृ शोषणालमर्थयोः**"
(I-भ्वादिः-124. सक. सेट्. पर.)

द्राखकः-खिका, द्राखकः-खिका, दिद्राखिषकः-षिका, दाद्राखकः-खिका ;
द्राखिता-त्री, द्राखयिता-त्री, दिद्राखिषिता-त्री, दाद्राखिता-त्री ;
द्राखन्-न्ती, द्राखयन्-न्ती, दिद्राखिषन्-न्ती ; —
द्राखिष्यन्-न्ती-ती, द्राखयिष्यन्-न्ती-ती, दिद्राखिषिष्यन्-न्ती-ती ; —
—द्राखयमाणः, द्राखयिष्यमाणः, —दाद्राख्यमानः, दाद्राखिष्यमाणः ;
विद्राख्-विद्राक्-विद्राखौ-विद्राखः ; —

---

1. तच्छीलादिषु कर्तृषु, 'स्पृहिगृहिपतिदयिनिद्रा**तन्द्रा**श्रद्धाभ्य आलुच्' (3-2-158) इत्यनेन निपूर्वकात् तत्पूर्वकाच्चास्मात् आलुच्प्रत्ययः। तदो दकारस्य प्रत्ययसन्नियोगेन नकारादेशोऽपि सूत्रकारनिर्देशाद् भवति ।
2. 'घञर्थे कविधानम्' (वा. 3-3-58) इति कप्रत्यये, 'स्पृहिगृहिपतिदयि**निद्रा-तन्द्रा**—' (3-2-158) इति सूत्रे निर्देशबलात् तदो दकारस्य नकारे, अदन्तत्वेन टापि रूपमेवम् ।
3. 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वे णत्वे च रूपम् ।
4. तृचि, प्रपूर्वकात् नेः, 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति**द्राति**—' (8-4-17) इति णत्वम् ।
5. यवादौ (8-2-9) **द्राक्षा** इति निपातनान्नलोपः ।

A. 'स्पृहयालुं कपिं स्त्रीभ्यो **निद्रालु**मदयालुवत् ।' भ. का. 7.21.
B. 'तं पश्यन् नकुलं राजा **तन्द्रालु**र्दङ्निमेषणे ।' च. भा. 6.15.
C. '**द्राक्षां** जनो वाञ्छति नो फलानि ध्राङ्क्षद्द्रुध्वाङ्क्षविचूषितानि ॥' धा. का. 1.85.

| | | | |
|---|---|---|---|
| [A]द्राखितम्-तः, | द्राखितः, | दिद्राखिषितः, | दाद्राखितः-तवान् ; |
| द्राखः, | द्राखः, | दिद्राखिषुः, | दाद्राखः ; |
| द्राखितव्यम्, | द्राखयितव्यम्, | दिद्राखिषितव्यम्, | दाद्राखितव्यम् ; |
| [1]द्राखणीयम्, | द्राखणीयम्, | दिद्राखिषणीयम्, | दाद्राखणीयम् ; |
| द्राख्यम्, | द्राख्यम्, | दिद्राखिष्यम्, | दाद्राख्यम् ; |
| ईषद्द्राखः-दुर्द्राखः-सुद्राखः ; | | — | — |
| द्राख्यमाणः, | द्राख्यमाणः, | दिद्राखिष्यमाणः, | दाद्राख्यमाणः, |
| द्राखः, | द्राखः, | दिद्राखिषः, | दाद्राखः ; |
| द्राखितुम्, | द्राखयितुम्, | दिद्राखिषितुम्, | दाद्राखितुम् ; |
| [2]द्राखा, | द्राखणा, | दिद्राखिषा, | दाद्राखा ; |
| द्राखणम्, | द्राखणम्, | दिद्राखिषणम्, | दाद्राखणम् ; |
| द्राखित्वा, | द्राखयित्वा, | दिद्राखिषित्वा, | दाद्राखित्वा ; |
| प्रद्राख्य, | प्रद्राख्य, | प्रदिद्राखिष्य, | प्रदाद्राख्य ; |
| द्राखम् २, द्राखित्वा २, | द्राखम् २, द्राखयित्वा २, | दिद्राखिषम् २, दिद्राखिषित्वा २, | दाद्राखम् २ ; दाद्राखित्वा २. |

## (880) " द्राघृ सामर्थ्ये आयामे च "

(I-भ्वादिः-114. अक. सेट्. आत्म.)

" आयामः=दैर्ध्यक्रियेति **कौशिकः** । कदर्थनम् इति **स्वामी** ।" इति **मा. धा. वृत्तिः** । 'ध्राघृ' इत्यपि **केचित्** पठन्ति ।

द्राघकः-घिका, द्राघकः-घिका, दिद्राघिषकः-षिका, दाद्राघकः-घिका ; इत्यादीनि सर्वाण्यपि रूपाणि पूर्वोक्त**द्राखितिवत्** (879) ज्ञेयानि । अस्य धातोरात्मनेपदित्वात्, द्राघमाणः, दिद्राघिषमाणः, द्राघिष्यमाणः, दिद्राघिषिष्यमाणः ; इति शानचि विशेषः । [B]प्रद्राघितः ।

---

1. 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (8-4-2) इति णत्वम् । एवं ल्युडादिष्वपि ज्ञेयम् ।
2. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः ।

A. 'अराखितत्वगिभरलाखितच्छदैः **प्रद्राखिता**ध्राखिफलैश्च शाखिभिः ।' धा. का. 1.18.

B. 'निकाममुल्लाघतनोः समत्यगात् **प्रद्राघिना** श्लाघ्यगुणस्य वर्तनी ॥' धा.का. 1.16.



## (881) " द्राडृ विशरणे " (I-भ्वादिः. 287. अक. सेट्. आत्म.)

द्राडकः-डिका, द्राडकः-डिका, दिद्राडिषकः-षिका, दाद्राडकः-डिका ; इत्यादीनि सर्वाणि रूपाणि **द्राखितिवत्** (879) बोध्यानि । [1]विद्राली[A] इति णिनिप्रत्यये रूपमिति विशेषः ।

## (882) " द्राहृ निद्राक्षये " (I-भ्वादिः-646. अक. सेट्. आत्म.)

' निक्षेपे ' इति **क्षीरस्वामि**प्रभृतयः ।

द्राहकः-हिका, द्राहकः-हिका, दिद्राहिषकः-षिका, दाद्राहकः-हिका ; द्राहमानः, द्राहयमाणः, दिद्राहिषमाणः, दाद्राह्यमाणः, इत्यादीनि सर्वाण्यपि रूपाणि **द्राखितिवत्**, (879) ज्ञेयानि । क्विपि, [2]प्रद्राक्-प्रद्राग्, इति, रूपमिति विशेषः । [B]द्राहितः ।

## (883) " द्रु गतौ " (I-भ्वादिः-945. सक, अनि. पर.) [अ]

द्रावकः-विका, द्रावकः-विका, [3]दुद्रूषकः-षिका, [4]दिद्रावयिषकः-षिका, दुद्रावयिषकः-षिका, [5]दोद्रूयकः-यिका ;

द्रोता-त्री, द्रावयिता-त्री, दुद्रूषिता-त्री, दिद्रावयिषिता-त्री, दुद्रावयिषिता-त्री, दोद्रूयिता-त्री ;

---

1. 'सुप्यजातौ–' (3-2-78) इति णिनिः । 'डलयोरुक्तिभेदस्तु डकारो नाक्षरान्तरम् ।' इत्युक्त्या डस्य लः । अत एव **विद्राली** इति रूपम् ।
2. 'दादेर्धातोर्घः' (8-2-32) इति घत्वे जश्त्वचर्त्वयोश्च रूपम् ।
3. सन्नन्ताण्ण्वुलि, 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
4. ण्यन्तात् सनि, 'स्रवतिशृणोति**द्रवति**प्रवतिप्लवतिच्यवतीनां वा' (7-4-81) इत्यनेनाभ्यासस्य इकारविकल्पः । एवं ण्यन्तात् सनि उत्तरत्र सर्वत्र ज्ञेयम् ।
5. यङन्तात् ण्वुलि उत्तरखण्डे 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । अभ्यासे 'गुणो यङ्लुकोः' (7-4-82) इति गुणः । एवं यङन्ते सर्वत्र ज्ञेयम् ।

A. 'सुपाक**विद्रालि**फलालिभिर्द्रुमैः स्निग्धानविध्राडितचारुशालिकान् ॥' धा. का. 1. 38.

B. '**द्राहिनः** शुभपथप्रकाशने सस्वजेऽथ तमनूद्यवैभवः ।' धा. का. 1.82.

अ. अन्यथा उपसर्गयोगात् "**द्रवति** घृतम्" इत्यत्र **अकर्मकः** । 'रक्षांसि भीतानि दिशो **द्रवन्ति**' इत्यत्र (गीता 10,) **सकर्मकः** ।

द्रवन्-न्ती, [1]द्रावयन्-न्ती, दुद्रूषन्-न्ती, दिद्रावयिषन्-न्ती, दुद्रावयिषन्-न्ती ; —
द्रोष्यन्-न्ती-ती, द्रावयिष्यन्-न्ती-ती, दुद्रूषिष्यन्, दिद्रावयिषिष्न् दुद्रावयिषिष्यन्-न्ती-ती ; —
— — — — दोद्रूयमाणः, दोद्रूयिष्यमाणः ;
[2]प्रद्रुत्-प्रद्रुतौ-प्रद्रुतः ; — — —
[A]द्रुतम्-तः-तवान्, द्रावितम्, दुद्रूषितः, दिद्रावयिषितः-दुद्रावयिषितः, दोद्रूयितः-तवान् ;
द्रवः, [3]मितद्रुः, [मित्रद्रुः], हरिद्रुः, शतद्रुः, [4]प्रद्रावी, [5]द्रवणः, द्रावः,[B] दुद्रूषुः, दिद्रावयिषुः-दुद्रावयिषुः, दोद्रुवः ;
द्रोतव्यम्, द्रावयितव्यम्, दुद्रूषितव्यम्, दिद्रावयिषितव्यम्-दुद्रावयिषितव्यम्, दोद्रूयितव्यम् ;
[6]द्रवणीयम्, द्रावणीयम्, दुद्रूषणीयम्, दिद्रावयिषणीयम् दुद्रावयिषणीयम्, दोद्रूयणीयम् ;
[7]द्रव्यम्, [8]अवश्यद्राव्यम्, द्राव्यम्, दुद्रूष्यम्, दिद्रावयिष्यम्-दुद्रावयिष्यम्, दोद्रूय्यम् ;

---

1. ण्यन्तात्, 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (1-3-86) इति परस्मैपदमेव' नात्मनेपदम् ।
2. क्विपि, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुगागमः ।
3. कर्मण्युपपदे, 'डुप्रकरणे—**मितद्र्वादिभ्य** उपसंख्यानम्' (वा. 3-2-180) इति डुप्रत्ययः। मितं द्रावयतीति मितद्रुः। एवं **हरिद्रुः शतद्रुः** इत्यत्रापि डुप्रत्ययो ज्ञेयः। **मित्रद्रुः शुतुद्रुः** इति **प्रक्रियासर्वस्वे** पाठः ।
4. तच्छीलादिषु कर्तृषु 'प्रे लपसृद्रु—' (3-2-145) इति घिनुण् प्रत्ययः ।
5. धातोरनेकार्थत्वेनाकर्मकत्वे, चलनार्थकत्वात्, 'चलनशब्दार्थात्—' (3-2-148) इति ताच्छीलिके युचि, अनादेशे रूपम् ।
6. ल्युटि, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (8-4-2) इति णत्वम् ।
7. 'अचो यत्' (3-1-97) इति यति, गुणे, अवादेशः। स च 'वान्तो यि प्रत्यये' (6-1-79) इति वान्तो अवादेशः ।
8. '**ओरावश्यके**' (3-1-125) इति ण्यत्। वान्तोऽवादेशः ।

A. '**द्रुतं द्रुतं** वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम् ।' भ. का. 10.11.

B. 'उन्नायानधिगच्छन्तः **प्रद्रावैः** वसुधाभृताम् ।' भ. का. 7.37.



ईषद्द्रवः-दुर्द्रवः-सुद्रवः ; — — —
द्रूयमाणः, द्राव्यमाणः, दुद्रूषमाणः, दिद्रावयिषमाणः-दुद्रावयिषमाणः, दोद्रूय्यमाणः ;
[1]द्रवः, विद्रवः, उपद्रवः, [2]प्रद्रावः, [3]सन्द्रावः, [4]उद्द्रावः, द्रावः, दुद्रूषः, दिद्रावयिषः-दुद्रावयिषः, दोद्रूयः ;
द्रोतुम्, द्रावयितुम्, दुद्रूषितुम्, दिद्रावयिषितुम्-दुद्रावयिषितुम्, दोद्रूयितुम् ;
द्रुतिः, द्रावणा, दुद्रूषा, दिद्रावयिषा-दुद्रावयिषा, दोद्रूया ;
द्रवणम्, [5]सान्द्राविणम्, द्रावणम्, दुद्रूषणम्, दिद्रावयिषणम्-दुद्रावयिषणम्, दोद्रूयणम् ;
द्रुत्वा, द्रावयित्वा, दुद्रूषित्वा, दिद्रावयिषित्वा-दुद्रावयिषित्वा, दोद्रूयित्वा ;
प्रद्रुत्य, प्रद्राव्य, प्रदुद्रूष्य, प्रदिद्रावयिष्य-प्रदुद्रावयिष्य, प्रदोद्रूय्य ;
द्रावम् २, द्रुत्वा २, } द्रावम् २, द्रावयित्वा २, } दुद्रूषम् २, दुद्रूषित्वा २, } दिद्रावयिषम् २-दिद्रावयिषित्वा २-दुद्रावयिषम् २, दुद्रावयिषित्वा २, } दोद्रूयम् २ ; दोद्रूयित्वा २ ; }

[6]द्रविणम्, [7]द्रोणः, [8]द्रूः.

## (884) "द्रुण हिंसागतिकौटिल्येषु"

(VI-तुदादिः-1337. सक. सेट्. पर.)

---

1. 'ॠदोरप्' (3-3-57) इति घञपवादोऽप्प्रत्ययः ।
2. '**प्रे द्रु**स्तुस्रुवः' (3-3-27) इति प्रपूर्वकाद् घञ्।
3. '**समि** युद्रुदुवः' (3-3-23) इति सम्पूर्वकादस्माद् घञ्।
4. '**उदि**श्रयतियौतिपूद्रुवः' (3-3-49) इति घञ्।
5. 'अभिविधौ भाव इनुण्' (3-3-44) इति इनुण्प्रत्यये, 'अण् इनुणः' (5-4-15) इति नित्यमिनुणन्तादण्प्रत्ययः। अभिविध्यर्थे तु धातोरस्मात् पुनर्भावे इति वर्तनाद् घञ् न भवति ।
6. '**द्रु**दक्षिभ्यामिनन्' (द. उ. 5-16) इति इनन्प्रत्ययः। **द्रविणम्**=धनम् ।
7. 'कृवृजॄसिद्रु—' [द. उ. 5.42.] इति नप्रत्ययः। **द्रोणः**=मानभाण्डम् ।
8. 'क्विब्वचिप्रच्छिश्रिद्रु—' [द. उ. 10.2.] इति क्विप्प्रत्यये दीर्घश्च भवति । **द्रूः**=शल्यकः हिरण्यम् ।

द्रोणकः-णिका, द्रोणकः-णिका, दुद्रुणिषकः-दुद्रोणिषकः-षिका, दोद्रुणकः-णिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**घोणति**वत् (466) ज्ञेयानि। अस्य धातोः परस्मैपदित्वात् तुदादित्वाच्च शतरि द्रुणन्-न्ती इति रूपमिति विशेषः। द्रुणः=खर्जूरः। इगुपधलक्षणः कप्रत्ययः। गौरादिषु (4-1-41) पाठात् ङीषि द्रुणी=कच्छपी। पचादिषु पाठात् कर्तर्यच्प्रत्यये द्रोणः। [A]विद्रोणनम्। 'परिमाणाख्यायां सर्वेभ्यः' (3-3-20)इति घञि द्रोणः=परिमाणविशेषः।

## (885) "द्रुह जिघांसायाम्"

(IV-दिवादिः-1197. सक. वेट्. पर. रधादिः।)

द्रोहकः-हिका, द्रोहकः-हिका, [1]दुद्रुहिषकः-दुद्रोहिषकः-दुध्रुक्षकः-क्षिका, दोद्रुहकः-हिका;

[2]द्रोहिता-त्री-द्रोग्धा-ग्ध्री-द्रोढा-ढ्री, द्रोहयिता-त्री, दुद्रुहिषिता-दुद्रोहिषिता-दुध्रुक्षिता-त्री, दोद्रुहिता-त्री;

[देवदत्ताय] द्रुह्यन्[3]-न्ती, [देवदत्तं] [4]अभिद्रुह्यन्-न्ती, द्रोहयन्-न्ती, दुद्रुहिषन्-दुद्रोहिषन्-दुध्रुक्षन्-न्ती; —

1. सन्नन्तात् ण्वुलि, '**रधादिभ्यश्च**' (7-2-45) इतीड्विकल्पः। इट्पक्षे, 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति कित्त्वविकल्पः। इडभावपक्षे 'वा **द्रुह**मुहष्णुहष्णिहाम्' (8-2-33) इति घत्वविकल्पः। तत्र घत्वे, सकारपरत्वेन 'एकाचो बशो भष्—' (8-2-37) इति भष्भावे, 'षढोः कः सि' (8-2-41) इति कत्वे **दुध्रुक्षकः** इति रूपं तुल्यमेव। एवं सन्नन्ते सर्वत्र रूपत्रयं ज्ञेयम्।

2. तृचि इट्पक्षे **द्रोहिता** इति रूपम्। इडभावपक्षे घत्वे, **द्रोग्धा** इति रूपम्। ढत्वपक्षे तु धत्वष्टुत्वयोः कृतयोः, 'ढो ढे लोपः' (8-3-13) इति ढलोपे, 'ढ्रलोपे पूर्वस्य—' (6-3-111) इति दीर्घं बाधित्वा परत्वात् गुणे कृते **द्रोढा** इति रूपम्। एवं तव्यदादिष्वपि रूपत्रयस्योपपत्तिर्ज्ञेया।

3. शतरि, '**दिवादिभ्यः**—' (3-1-69) इति श्यन्प्रत्यये, 'क्रुधद्रुहेर्ष्या—' (1-4-37) इति यं प्रति कोपः तस्य संप्रदानसंज्ञा।

4. 'क्रुधद्रु**हो**रुपसृष्टयोः—' (1-4-38) इति सोपसृष्टादस्मात् परत्वेन विद्यमानात् कर्मसंज्ञायां द्वितीया भवति।

A. '**विद्रोणने**ष्वघुणिता मदघूर्णदक्षा युद्धे सुरानपि खरोत्कुरिताः खरन्तः॥' धा. का. 2.76.



द्रोहिष्यन्-[1]ध्रोक्ष्यन्-न्ती-ती, द्रोहयिष्यन्-न्ती-ती, दुद्रुहिषिष्यन्-दुद्रोहिषिष्यन्-दुध्रुक्षिष्यन्-न्ती-ती; —

— द्रोहयमाणः, द्रोहयिष्यमाणः, — दोद्रुह्यमाणः, दोद्रुहिष्यमाणः;

[2]मित्रध्रुक्-मित्रध्रुग्-मित्रध्रुट्-मित्रध्रुड्-द्रुहौ-द्रुहः; —

यज्ञध्रुक्-सीताध्रुक्, प्रध्रुक्-प्रध्रुट्, [A]जनध्रुक्-द्रुहौ-द्रुहः;

[3]द्रुग्धम्-द्रुग्धः-द्रुग्धवान्, द्रूढम्-द्रूढः-द्रूढवान्, द्रोहितः, दुद्रुहिषितः-दुद्रोहिषितः-दुध्रुक्षितः, दोद्रुहितः-तवान्;

द्रुहः, [4]द्रोही, [B]मित्रद्रोही[5], धनद्रोही, द्रोहः, दुद्रुहिषुः-दुद्रोहिषुः-दुध्रुक्षुः, दोद्रुहः;

द्रोहितव्यम्-द्रोग्धव्यम्-द्रोढव्यम्, द्रोहयितव्यम्, दुद्रुहिषितव्यम्-दुद्रोहिषितव्यम्-दुध्रुक्षितव्यम्, दोद्रुहितव्यम्;

द्रोहणीयम्, द्रोहणीयम्, दुद्रुहिषणीयम्-दुद्रोहिषणीयम्-दुध्रुक्षणीयम्, दोद्रुहणीयम्;

द्रोह्यम्, द्रोह्यम्, दुद्रुहिष्यम्-दुद्रोहिष्यम्-दुध्रुक्ष्यम्, दोद्रुह्यम्;

ईषद्द्रोहः-दुर्द्रोहः-सुद्रोहः; — —

द्रुह्यमाणः, द्रोह्यमाणः, दुद्रुहिष्यमाणः-दुद्रोहिष्यमाणः-दुध्रुक्ष्यमाणः, दोद्रुह्यमाणः;

द्रोहः, द्रोहः, दुद्रुहिषः-दुद्रोहिषः-दुध्रुक्षः, दोद्रुहः;

1. स्यप्रत्यये इडभावपक्षे, घत्वपक्षे, ढत्वपक्षेऽपि रूपं तुल्यमेव।

2. 'सत्सूद्विषद्रुहदुह—' (3-2-61) इत्यादिना सुप्युपपदे, उपसर्गे च क्विप्। पदान्तत्वे यथासम्भवं घत्वे ढत्वे च रूपद्वयम्।

3. वलादेरार्धधातुकस्य रधादित्वेनेड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्निषेधः। घत्वपक्षे **द्रुग्धः** इति, ढत्वपक्षे **द्रूढः** इति च रूपमिति विशेषः। ढत्वपक्षे 'ढ्रलोपे पूर्वस्य—' (6-3-111) इति दीर्घोऽत्र भवतीति विशेषः। एवं क्तिन्यपि ज्ञेयम्।

4. तच्छीलादिषु कर्तृषु, 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुह—' (3-2-142) इत्यादिना घिनुणि रूपम्।

5. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिप्रत्ययः।

A. 'रद्धारये सोऽयमनश्वराय तृप्यन्मना **हत जनद्रुहे**ऽस्मै।' धा. का. 2.64.

B. '**द्रोहि** खद्योतसम्पर्कि नयनामोषि दुःसहम्॥' भ. का. 7. 6.

द्रोहितुम्-द्रोग्धुम्-द्रोढुम्, द्रोहयितुम्, दुद्रुहिषितुम्-दुद्रोहिषितुम्-दुध्रुक्षितुम्, दोद्रुहितुम्;

द्रुग्धिः-द्रूढिः, द्रोहणा, दुद्रुहिषा-दुद्रोहिषा-दुध्रुक्षा, दोद्रुहा;

द्रोहणम्, द्रोहणम्, दुद्रुहिषणम्-दुद्रोहिषणम-दुध्रुक्षणम्, दोद्रुहणम्;

[1]द्रुहित्वा-द्रोहित्वा, द्रुग्ध्वा-द्रूढ्वा, द्रोहयित्वा, दुद्रुहिषित्वा-दुद्रोहिषित्वा-दुध्रुक्षित्वा, दोद्रुहित्वा;

प्रद्रुह्य, प्रद्रोह्य, प्रदुद्रुहिष्य-प्रदुद्रोहिष्य-प्रदुध्रुक्ष्य, प्रदोद्रुह्य;

द्रोहम् २, द्रुहित्वा २-द्रोहित्वा २-द्रुग्ध्वा २-द्रूढ्वा २, } द्रोहम् २, द्रोहयित्वा २, } दुद्रुहिषम् २-दुद्रुहिषित्वा २-दुद्रोहिषम् २-दुध्रुक्षम् २, दुद्रोहिषित्वा २-दुध्रुक्षित्वा २, } दोद्रुहम् २; दोद्रुहित्वा २. }

(886) "द्रूञ् हिंसायाम्"

(IX-क्र्यादिः-1481. सक. सेट्. उभ.)

द्रावकः-विका, द्रावकः-विका, दुद्रूषकः-षिका, दोद्रूयकः-यिका;
इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिकक्नूञ्धातुवत् (266) ज्ञेयानि।
क्विपि-[A]अरिद्रूः।

(887) "द्रेकृ शब्दनोत्साहयोः" (I-भ्वादिः-78. अक. सेट्. आत्म.)
'उत्साहः=वृद्धिरौद्धत्यञ्च। 'शब्दोत्साहे' इति **केचित्**। यदाह **काश्यपः**-
'द्रेकते=शब्देनोत्साहं करोति।' इति **मा. धा. वृत्तिः**।

द्रेककः-किका, द्रेककः-किका, दिद्रेकिषकः-षिका, देद्रेककः-किका;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगेपतिवत् (429) ज्ञेयानि। घञि
[B]द्रेकः-उद्द्रेकः।

---

1. क्त्वायाम्, इड्विकल्पपक्षे, कित्वविकल्पे च रूपद्वयम्, इडभावपक्षे, घत्वविकल्पनात्, घत्वे, ढत्वे च रूपद्वयम् इत्याहत्य च रूपचतुष्टयं ज्ञेयम्।

A. 'मोदस्कुतोऽथ कबरीं प्रयुनन् स रामः क्नूनन् मृदङ्गमिह रङ्गमगादरिद्रूः॥' धा. का. 3.5.

B. 'तमुत्तमश्लोकमवेक्ष्य तत्स्तुतिद्रेकैरुपध्रेकयिताऽस्मि दिक्तटम्॥' धा. का. 1.11.



(888) "द्रै स्वप्ने" (I-भ्वादिः-906. अक. अनि. पर.)

"द्रै स्वप्ने द्रायति, द्राति कुत्सिते गमने लुकि॥" (श्लो. 6) इति **देवः**।
द्रायकः-यिका, द्रापकः-पिका, दिद्रासकः-सिका, दाद्रायकः-यिका;
इत्यादीनि समस्तान्यपि रूपाणि आदादिकदाधातुवत् (833) ज्ञेयानि।
शतरि [1]निद्रायन्[A]-न्ती, इति रूपमिति विशेषः। [2]निद्रा, [3]निद्रालुः,
तन्द्रालुः, [4]निद्रः इति रूपाण्यस्य भवन्तीति विशेषः।

(889) "द्विष अप्रीतौ" (II-अदादिः-1013. सक. अनि. उभ.)

द्वेषकः-षिका, द्वेषकः-षिका, [5]दिद्विक्षकः-क्षिका देद्विषकः-षिका;
द्वेष्टा[6]-ष्ट्री, द्वेषयिता-त्री, दिद्विक्षिता-त्री, देद्विषिता-त्री;
[7]द्विषन् [शत्रुं, शत्रोर्वा]-ती, द्वेषयन्-न्ती, दिद्विक्षन्-न्ती; —
[8]द्वेक्ष्यन्-न्ती-ती, द्वेषयिष्यन्-न्ती-ती, दिद्विक्षिष्यन्-न्ती-ती; —
द्विषाणः, द्वेषयमाणः, दिद्विक्षमाणः, देद्विष्यमाणः;
द्वेक्ष्यमाणः, द्वेषयिष्यमाणः, दिद्विक्षिष्यमाणः, देद्विषिष्यमाणः;

---

1. शतरि, आयादेशे रूपम्। स्त्रियां नुम्।
2. निपूर्वकादस्मात् 'आतश्चोपसर्गे' (3-3-106) इत्यङ्।
3. निपूर्वकात्, तत्पूर्वकादस्मात् 'स्पृहिगृहिपतिदयिनिद्रातन्द्रा—' (3-2-158) इत्यादिना तच्छीलादिषु कर्तृषु आलुच्प्रत्ययः। तच्छब्दे दकारस्य नकारः, सूत्रे **तन्द्रा** इति निर्देशात्।
4. निद्रातीति **निद्रः**। कर्तरि, 'आतश्चोपसर्गे' (3-1-136) इति कप्रत्ययः।
5. सन्नन्तात्ण्वुलि, 'इको झल्' (1-2-9) इति सनः कित्वे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, सकारस्य मूर्धन्ये च रूपमेवम्। एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया।
6. तृचि, गुणे, 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारे च रूपम्। एवं तव्यदादिष्वपि ज्ञेयम्।
7. 'द्विषः शतुर्वा' (वा. 2-3-69) इति शतरि कर्मणि षष्ठीविकल्पः।
8. स्यप्रत्यये, षकारस्य ककारे, प्रत्ययसकारस्य मूर्धन्ये च रूपमेवम्।

A. '**निद्राय**दिन्दीवरभाजि मज्जन्घ्राणधीस्तत्र च तं ददर्श॥' धा. का. 2. 30.

[1]विप्रद्विट्, मित्रद्विट्, [A]मधुद्विट्, प्रद्विट्, [2]द्विट्, ब्रह्मद्विट्-द्विषौ-द्विषः ;
द्विष्टम्-द्विष्टः-ष्टवान्, द्वेषितः, दिद्विक्षितः, देद्विषितः-तवान् ;
द्विषः, [3]द्वेषी, मित्रद्वेषी, ब्रह्मद्वेषी, [4]द्वेषणः, [5]द्विषन्[B], दिद्विक्षुः, देद्विषः ;
द्वेष्टव्यम्, द्वेषयितव्यम्, दिद्विक्षितव्यम्, देद्विषितव्यम् ;
द्वेषणीयम्, द्वेषणीयम्, दिद्विक्षणीयम्, देद्विषणीयम् ;
द्वेष्यम्, द्वेष्यम्, दिद्विक्ष्यम्, देद्विक्ष्यम् ;
ईषद्द्वेषः-दुर्द्वेषः-सुद्वेषः ; — — —
द्विष्यमाणः, द्वेष्यमाणः, दिद्विक्ष्यमाणः, देद्विष्यमाणः ;
द्वेषः, द्वेषः, दिद्विक्षः, देद्विषः,
द्वेष्टुम्, द्वेषयितुम्, दिद्विक्षितुम्, देद्विषितुम् ;
द्विष्टिः, द्वेषणा, दिद्विक्षा, देद्विषा ;
द्वेषणम्, द्वेषणम्, दिद्विक्षणम्, देद्विषणम् ;
द्विष्ट्वा, द्वेषयित्वा, दिद्विक्षित्वा, देद्विषित्वा ;
प्रद्विष्य, प्रद्वेष्य, प्रदिद्विक्ष्य, प्रदेद्विष्य ;
द्वेषम् २, द्विष्ट्वा २, } द्वेषम् २, द्वेषयित्वा २, } दिद्विक्षम् २, दिद्विक्षित्वा २, } देद्विषम् २ ; देद्विषित्वा २. }

## (890) "द्वृ संवरणे" (I-भ्वादिः-934. सक. अनि. पर.)

'वृ वरणे' इत्येके ।

1. 'सत्सूद्विष—' (3-2-61) इति सोपपदात् सोपसर्गाच्च धातोरस्य क्विप्प्रत्यये, षकारस्य जश्त्वेन डकारे चर्त्वे च रूपम् ।
2. 'अन्येभ्योऽपि दृश्यते' (3-2-178) इति कर्तरि क्विप् तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु भवति ।
3. तच्छीलादिषु कर्तृषु 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहमुहदुषद्विष—' (3-2-142) इत्यादिना घिनुण् ।
4. नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः ।
5. 'द्विषोऽमित्रे' (3-2-131) इति अमित्रे वाच्ये शतैव भवति ।

A. 'प्रसाधितस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।' शि. व. 3.12.
B. 'अदन् मधुघ्नो द्विषते विसृज्य श्ववल्कजं विश्वमुदं दुहानः ।' धा. का. 2.44.



द्वारकः-रिका, द्वारकः-रिका, [1]दुद्रूर्षकः-र्षिका, [2]दाद्वरकः-रिका ;
द्वर्ता-त्री, द्वारयिता-त्री, दुद्रूर्षिता-त्री, दाद्वरिता-त्री ;
द्वरन्-न्ती, द्वारयन्-न्ती, दुद्रूर्षन्-न्ती ; —
[3]द्वरिष्यन्-न्ती-ती, द्वारयिष्यन्-न्ती-ती ; दुद्रूर्षिष्यन्-न्ती-ती ; —
— द्वारयमाणः, द्वारयिष्यमाणः, — दाद्वर्यमाणः, दाद्वरिष्यमाणः ;
[4]प्रद्वृत्-प्रद्वृतौ-प्रद्वृतः, [5]द्वाः-द्वारौ-द्वारः ; — —
द्वृतम्-तः-तवान्, द्वारितः, दुद्रूर्षितः, दाद्वरितः-तवान् ;
द्वरः, द्वारः, दुद्रूर्षुः, दाद्वरः ;
द्वर्तव्यम्, द्वारयितव्यम्, दुद्रूर्षितव्यम्, दाद्वरितव्यम् ;
द्वरणीयम्, द्वारणीयम्, दुद्रूर्षणीयम्, दाद्वरणीयम् ;
[6]द्वार्यम्, द्वार्यम्, दुद्रूर्ष्यम्, दाद्वर्यम् ;
ईषद्द्वरः-दुर्द्वरः-सुद्वरः ; — — —
[7]द्वर्यमाणः, द्वार्यमाणः, दुद्रूर्ष्यमाणः दाद्वर्यमाणः ;
[A]द्वारः, द्वारः, दुद्रूर्षः, दाद्वरः ;
द्वर्तुम्, द्वारयितुम्, दुद्रूर्षितुम्, दाद्वरितुम् ;
द्वृतिः, द्वारणा, दुद्रूर्षा, दाद्वरा ;
द्वरणम्, द्वारणम्, दुद्रूर्षणम्, दाद्वरणम् ;
द्वृत्वा, द्वारयित्वा, दुद्रूर्षित्वा, दाद्वरित्वा ;
उद्द्वृत्य, प्रद्वार्य, प्रदुद्रूर्ष्य, प्रदाद्वर्य ;

1. सन्नन्ताण्ण्वुलि, 'इको झल्' (1-2-9) इति सनः कित्त्वे 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'उदोष्ठ्यपूर्वस्य' (7-1-102) इत्युत्वे रपरत्वे, 'राल्लोपः' (6 4-21) इति वकारस्य लोपे, 'हलि च' (8-2-77) इति दीर्घे च रूपमेवम् । सन्नन्ते सर्वत्रैवमेव प्रक्रिया ज्ञेया ।
2. 'यङि च' (7-4-30) इति संयोगादित्वाद् गुणे, अभ्यासे, 'दीर्घोऽकितः' (7-4-83) इति दीर्घे च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
3. 'ऋद्धनोः स्ये' (7-2-70) इतीडागमः ।
4. शुद्धाद्धातोः क्विपि, तुगागमे च रूपमेवम् ।
5. ण्यन्तात् क्विपि, रेफस्य विसर्गे च रूपम् ।
6. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यति रूपम् ।
7. 'गुणोऽर्तिसंयोगाद्योः' (7-4-29) इति यकि गुणः ।

A. 'स्मार्यं शुभद्वारमुपासरामि त्वत्पादमृच्छामि न मोहगर्तम् ।' धा. का. 2.34.

द्वारम् २, द्वारम् २, दुदूर्षम् २, दाद्वरम् २ ;
द्वृत्वा २, द्वारयित्वा २, दुदूर्षित्वा २, दाद्वरित्वा २.

(891) "धक्क नाशने" (X-चुरादिः-1594. सक. सेट्. उभ.)

धक्कक:-क्किका, दिधक्कयिषक:-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककुट्टयतिवत् (207) ज्ञेयानि । युचि [A]धक्कनम् इति ।

(892) "धण शब्दे" (I-भ्वादिः-453. अक. सेट्. पर.)

'ध्वण' इत्यस्य पाठभेदोऽयम् ।

धाणक:-णिका, धाणक:-णिका, दिधणिषक:-षिका, दन्धणक:-दंधणक:-णिका ; इत्यादीनि सर्वाणि रूपाणि कणतिवत् (157) बोध्यानि ।

(893) "धन धान्ये"

(III-जुहोत्यादिः-1104. अक. सेट्. पर.) छान्दसः ।

'धान्ये=धान्यार्जने, इत्यर्थः' इति सि. कौमुदी ।

धानक:-निका, धानक:-निका, दिधनिषक:-षिका, दन्धनक:, दंधनक:-निका ; इत्यादीनि सर्वाण्यपि रूपाणि जननार्थकजनधातुवत् (582) बोध्यानि । [1]धनूः, [2]धनुः इति रूपाणि विशेषः । [B]प्रधनम् ।

(894) "धवि गत्यर्थः" (I-भ्वादिः-597. अक. सेट्. पर.)

धन्वक:-न्विका, धन्वक:-न्विका, दिधन्विषक:-षिका, दाधन्वक:-न्विका ; इत्यादीनि सर्वाण्यपि रूपाणि कन्दतिवत् (163) ऊह्यानि । [3]धन्वा[C] इति विशेषः ।

---

1. 'कृषिचमितनिधनि—' (द. उ. 1-164) इति ऊप्रत्ययो भवति । धनूः= धान्यनिचयः, पृथिवी इत्यर्थः ।
2. 'अर्तिपृवपियजिधनि—' (द. उ. 9.39) इति उसिप्रत्यये एवं रूपम् । दधन्तीति धनुः=शरासनम् ।
3. 'कनिन्युवृषितक्षिराजिधन्वि—' (द. उ. 6. 51) इति कनिन्प्रत्यये एवं रूपम् । धन्वा=कुत्सितो देशः, मरुप्रदेशः ।

A. 'संबुस्तिते गिरिमखे परिचोद्य गोपान्
प्रानक्कयद्धरिमखं मदधक्कनार्थी ॥' धा. का. 3.20.

B. 'घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥' धा. का. 2.55.

C. 'जिन्वन्तमुर्वीं निजरिण्वनैः सतां रण्वन्तमन्तर्भवधन्वपादपम् ।' धा. का. 1.76.



(895) "डु धाञ् धारणपोषणयोः"

(III-जुहोत्यादिः-1092- सक. अनि. उभ.) [अ]

'धेटो धयति पानार्थे, धाञो धत्ते दधात्यपि ।' (श्लो. 6) इति देवः ।

| | | | |
|---|---|---|---|
| [1]धायक:-यिका, | [2]धापक:-पिका, | [3]धित्सक:-त्सिका, | [4]देधीयक:-यिका ; |
| धाता-धात्री, | धापयिता-त्री, | धित्सिता-त्री, | देधीयिता-त्री ; |
| [5]प्रणिदधत्-दधती, | धापयन्-न्ती, | धित्सन्-न्ती ; | — |
| धास्यन्-न्ती-ती, | धापयिष्यन्-न्ती-ती, | धित्सिष्यन्-न्ती-ती ; | — |
| [A]प्रणिदधानः, | धापयमानः, | धित्समानः, | देधीयमानः ; |
| धास्यमानः, | धापयिष्यमाणः, | धित्सिष्यमाणः, | देधीयिष्यमाणः ; |
| रत्नधाः-धौ-धाः ; | — | — | — |
| [6]हितम्-[B]प्रणिहितः-हितवान्, | धापितः, | धित्सितः, | देधीयितः-तवान् ; |

---

[अ] 'डु धाञ् दानधारणयोः' इति क्षीरस्वामी । निरुक्ते (7-15) "रत्नधातमम्=रमणीयानां धनानां दातृतमम् ।" इति विवरणमप्यत्रैवानुकूलतया दृश्यते । मैत्रेयरक्षितप्रभृतिभिरस्य धातोर्दानार्थत्वमप्यङ्गीकृतम् ।

1. ण्वुलि, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं घञि णमुल्प्रभृतिष्वपि ज्ञेयम् ।
2. ण्यन्तात् ण्वुलि, आदन्तलक्षणः पुगागमः । ण्यन्ते सर्वत्र एवमेवेति ज्ञेयम् ।
3. 'दाधा घ्वदाप्' (1-1-20) इति घुसंज्ञायाम् 'सनि मीमाघु—' (7-4-54) इत्यादिना सन्नन्ते आकारस्य इस् । 'सः स्यार्धधातुके' (7-4-49) इति सकारस्य तकारे, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः । 'इको झल्' (1-2-9) इति सनः कित्वान्न गुणः । एवं सन्नन्ते सर्वत्र प्रक्रिया ज्ञेया ।
4. यङन्ताण्ण्वुलि, 'घुमास्था—' (6-4-66) इत्यादिना ईत्वे, द्विर्वचनादिकम् । अभ्यासे गुणः । यङन्ते सर्वत्रैवमेव ।
5. शतरि, 'जुहोत्यादिभ्यः—' (2-4-75) इति शपः श्लुः । 'श्लौ' (6-1-10) इति द्विर्वचनम् । 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः । 'नेर्गदनदपतपदघुमा—' (8-4-17) इत्यादिना उपसर्गस्थान्निमित्तात् परस्य नेः णत्वम् । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः ।
6. निष्ठायाम्, 'दधातेर्हिः' (7-4-42) इति प्रकृतेः हिः आदेशः । एवं तकारादौ किति प्रत्यये सर्वत्र (क्त्वा, क्तिन्प्रभृतिषु) ज्ञेयम् ।

A. 'अस्नावि भूमिपतिभिः क्षणवीतनिद्रैरश्नन् पुरो हरितकं मुदमादधानः ।'
शि. व. 5.58.

B. 'ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं बिभीषणः ॥' भ. का. 9.99.

[1]प्रधः, [2]दधः[A], [3]धायः. [4]किष्किन्धा[B], [5]धामा, [6]धीवा-धीवरी, बहुधीवरी, [7]शिरोधिः-विधिः, प्रणिधिः, वालधिः[C]-उपाधिः, [8]भूतधात्री, [9]श्रद्धालुः,[D] [10]विधेयः, [11]विधाता, धापः, धित्सुः, [12]दाधाः ;

---

1. ‘**आत**श्चोपसर्गे’ (3-1-136) इति कर्तरि कप्रत्ययः ।
2. ‘ददाति**दधात्यो**र्विभाषा’ (3-1-139) इति शप्रत्यये, शित्वात् शपि, तस्य श्लौ, द्विर्वचने, शप्रत्ययस्य सार्वधातुकत्वेन ‘**श्नाऽभ्यस्तयोः**—’ (6-4-112) इत्याकारलोपे च **दधः** इति रूपम् ।
3. **दधाते**रस्य शप्रत्ययस्य विभाषितत्वात् पक्षे, ‘श्याऽऽद्व्यध—’ (3-1-141) इत्यादिना कर्तरि णप्रत्यये, युगागमे च **धायः** इति रूपम् ।
4. किं किं दधातीत्यर्थे ‘**आतो**ऽनुपसर्गे कः’ (3-2-3) इति कर्मण्युपपदे कर्तरि कप्रत्यये, ‘पारस्करप्रभृतीनि च’ (6-1-157) इति सुडागमे, किमो मकारस्य लोपः षत्वं च भवति ।
5. ‘अन्येभ्योऽपि दृश्यन्ते’ (3-2-75) इति निरुपपदादस्मात् मनिन्प्रत्यये रूपम् ।
6. ‘अन्येभ्योऽपि दृश्यन्ते’ (3-2-75) इति निरुपपदादस्मात् क्वनिप्प्रत्यये, ईत्वे, रूपम् । स्त्रियाम्, ‘वनो र च’ (4-1.7) इति ङीब्रेफौ । **बहुधीवा बहुधीवरी** इत्यत्र तु ‘अनो बहुव्रीहेः’ (4-1-12) इति निषेधात् ङीबभावः, ‘डाबुभाभ्यामन्यतरस्याम्’ (4-1-13) इति पाक्षिकः ङीप् रेफः डाप् च भवति ।
7. शिरो धत्ते इति **शिरोधिः**=ग्रीवा । बाहुलकात् कर्तरि किप्रत्यये, ‘**आतो** लोप इटि च’ (6-4-64) इत्याकारलोपः। **केचित्तु** शिरो धीयते अस्यामिति विगृह्य ‘कर्मण्यधिकरणे च’ (3-3 93) इति किप्रत्यये निष्पादयन्ति । **विधिः, प्रणिधिः** इत्यादिषु तु कर्तर्येव किप्रत्ययः बाहुलकात्।
8. भूतानि धत्ते इति **भूतधात्री**=पृथिवी । बाहुलकात् कर्तरि ष्ट्रन्प्रत्यये, स्त्रियां षित्वात् ङीष् ।
9. तच्छीलादिषु कर्तृषु ‘स्पृहिगृहिपतिदयिनिद्रातन्द्रा**श्रद्धाभ्य** आलुच्’ (3-2-158) इत्यालुच्प्रत्ययः ।
10. ‘अर्हे कृत्यतृचश्च’ (3-3-169) इति कर्तरि यत्प्रत्ययः । ‘ईद्यति’ (6-4-65) इति धातोरीत्वे गुणः ।
11. विदधातीति **विधाता**=ब्रह्मा । ‘तृन्’ (3-2-135) ताच्छीलिकस्तृन्प्रत्ययः ।
12. यङन्तात् पचाद्यचि यङो लुकि ईत्वाभावे, अभ्यासे ‘दीर्घोऽकितः’ (7-4-83) इति दीर्घः ।

A. ‘नभस्स्पृगूर्मिस्तितरीषतोऽस्य हरे **दधस्यै**कपदीमदात् सः ॥’ वा. वि. 3.38.
B. ‘**किष्किन्धा**द्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥’ भ. का. 6.121.
C. ‘आनिन्यिरे श्रेणिकृतास्तथाऽन्यैः परस्परं **वालधि**संनिबद्धाः ॥’ भ. का. 11.42.
D. ‘**श्रद्धालु**र्भ्रातुरङ्गानि चन्दनेष्वप्यरोचकी ॥’ अनर्घराघवे.7. 143.



धातव्यम्, धापयितव्यम्, धित्सितव्यम्, देधीयितव्यम्;
प्रणिधानीयम्, धापनीयम्, धित्सनीयम्, देधीयनीयम्;
धेयम्, [1]धाय्या[A] [ऋक्] धाप्यम्, धित्स्यम्, देधीय्यम्;
ईषद्धानम्-दुर्धानम्-सुधानम् ; — — —
[2]धीयमानः, धाप्यमानः, धित्स्यमानः, देधीय्यमानः ;
[3]धात्री, [4]उपधिः-निधिः, [5]अन्तर्धिः- [6]उदधिः सन्धिः- [7]सुषन्धिः-दुष्षन्धिः, [8]दधि ;

---

1. सामिधेनीरूपऋग्विशेषवाचित्वे सति, ‘पाय्यसान्नाय्यनिकाय्य**धाय्या** मानहविर्निवाससामिधेनीषु’ (3-1-129) इत्यनेन ण्यत् आयादेशश्च निपात्येते । ‘**धाय्ये**ति न सर्वा सामिधेन्युच्यते, किं तर्हि ? काचिदेव । रूढिशब्दो ह्ययम् । तथा च असामिधेन्यामपि दृश्यते—‘**धाय्याः** शंसत्यग्निर्नेता त्वं सोमक्रतुभिः ।’ इति काशिकाऽत्रानुसन्धेया । ‘सामिधेन्यभिधास्वृक्षु काचिद्धाय्येति कथ्यते । शस्त्रादिष्वपि **धाय्या**ऽस्ति तेनैतदुपलक्षणम् ॥’ इति **प्रक्रियासर्वस्व** श्लोकोऽप्यत्रानुसन्धेयः ।
2. यगन्ताच्छानचि, ‘घुमास्था—’ (6-4-66) इतीत्वम् ।
3. धीयते=धार्यते शिरसीति **धात्री**=आमलकी । ‘**धः** कर्मणि ष्ट्रन्’ (3-2-181) इति ष्ट्रन्प्रत्ययः । षित्वात् स्त्रियां ङीष् ।
4. ‘उपसर्गे **घोः** किः’ (3-3-92) इति किप्रत्यये आकारलोपे च रूपम् । एवं **निधि**रित्यादिष्वपि ज्ञेयम् ।
5. ‘**अन्त**श्शब्दस्य अङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्’ (वा. 1-4-65) इत्युपसर्गसंज्ञायां किप्रत्यये रूपम् । एवं **अन्तर्धा अन्तर्णिधानम्** इत्यत्रापि अङ्विधौ णत्वविधौ चोपसर्गत्वं ज्ञेय**मन्त**श्शब्दस्य ।
6. उदकं धीयतेऽत्रेति **उदधिः**=समुद्रः । ‘कर्मण्यधिकरणे च’ (3-3-93) इति अधिकरणे किप्रत्ययः । ‘**उदकस्योदः** संज्ञायाम्’ (6-3-57) इति **उदक**शब्दस्य **उद**भावः । असंज्ञायां तु ‘पेषंवासवाहन**धिषु** च’ (6-3-58) इति उदभावः—इति विशेषः ।
7. सुषामादित्वात् (8-3-98) **सुषन्धिः दुष्षन्धिः** इत्यत्र षत्वम् ।
8. ‘भाषायां **धाञ्**—’ (वा. 3-2-171) इत्यादिना किः किन् वा प्रत्ययः । तस्य लिड्वद्भावातिदेशात् द्विर्वचनादिकं भवति ।

A. ‘मदनानलबोधने भवेत् खग, **धाय्या** धिगधैर्यधारिणः ॥’ नैषधे. 2.59.

धायः, [1]हित्रिमम् [A] धापः, धित्सः, देधीयः ;
धातुम्, धापयितुम्, धित्सितुम्, देधीयितुम् ;-
हितिः, [2]अभिधा- [3]श्रद्धा, [B]उपधा, धापना, धित्सा, देधीया ;
प्रणिधानम्-अपिधानम्- [4]पिधानम्, धापनम्, धित्सनम्, देधीयनम् ;
हित्वा, धापयित्वा, धित्सित्वा, देधीयित्वा ;
[5]प्रधाय-निधाय, प्रधाप्य, प्रधित्स्य, प्रदेधीय्य ;
[6]घृतनिधायं निहितं [जलम्], [7]गोत्राभिधायम्, [C]
धायम् २, हित्वा २, } धापम् २, धापयित्वा २, } धित्सम् २, धित्सित्वा २, } देधीयम् २ ; देधीयित्वा २ ; }
[8]धातुः, [9]कर्कन्धुः-शकन्धूः-दिधिषूः, [10]धानकः, [11]निधनम्-धनम्,

---

1. 'ड्वितः क्त्रिः' (3-3-88) इति क्त्रिप्रत्यये, तेन निर्वृत्तम् इत्यर्थे, 'क्त्रेर्मम्नित्यम्' (4-4-20) इति मप्प्रत्यये, हिभावे च रूपमेवम् ।
2. 'आतश्चोपसर्गे' (3-3-106) इत्यङ् ।
3. 'श्रदन्तरोरुपसर्गवद्वृत्तिः' (वा. 1-4-59) इति वचनादुपसर्गभावेऽङ् ।
4. अपिपूर्वकात् धाञो ल्युटि 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इति वचनात् अपिघटिताकारस्य लोपे पिधानम् इति भवति । अन्येषां मते तु अपिधानम् इत्येव ।
5. 'न ल्यपि' (6-4-69) इतीत्वनिषेधः । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' (परिभाषा 53) इति न्यायात् पूर्वमेव ल्यपः प्रवृत्त्या तादिकितोऽभावात् न प्रकृतहिरादेशः ।
6. 'उपमाने कर्मणि च' (3-4-45) इति णमुलि युगागमे, अस्य कषादित्वात् 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इति पूर्वप्रयुक्तधातोरनुप्रयोगः ।
7. 'द्वितीयायां च' (3-4-53) इति णमुल् । अत्र सूत्रे पूर्वसूत्रात् 'परीप्सायाम्' इति नानुवर्तते इति पदमञ्जर्यां स्पष्टम् ।
8. औणादिके [द. उ. 1-122] तुन्प्रत्यये रूपम् । दधात्यर्थम्, धीयतेऽस्मिन्नर्थ इति वा धातुः=शब्दप्रकृतिः, पर्वतनिस्रावो वा ।
9. कर्कं दधातीति कर्कन्धूः=बदरीवृक्षः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' [द. उ. 1.176] इति कूप्रत्ययान्तो निपातितः । एवं शकन्धूरपि । धातव्याऽसौ इति दिधिषूः । अस्यैव धातोः कूप्रत्यये द्विर्वचनम्, षुगागम इत्वं च निपात्यन्ते ।
10. औणादिके [द. उ. 3-27] आनकप्रत्यये रूपम् । धानकः=सुवर्णपरिमाणम् ।
11. निपूर्वकादस्मात् औणादिके [द. उ. 5.26] क्युप्रत्यये रूपम् । निधनम्=विनाशः । बाहुलकाद् धनमित्यपि क्युप्रत्यय एव बोध्यः ।

A. 'निष्ठां गते दत्त्रिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः ।' भ. का. 1.13.
B. 'चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः ।' भ. का. 7.74.
दित्वा करणं सशब्दं गोत्राभिघायं सरितं समेत्य ।' भ. का. 3.50.



[1]धानाः, [2]धान्यम्, [3]धीरः, [4]वेधाः, [5]वयोधाः-पुरोधाः.

## (896) "धावु गतिशुद्ध्योः"

(I-भ्वादिः-601. सक. सेट्. उभ.)

'शुद्धौ' इति क्षीरस्वामी । 'जवे च' इति द्रुमे । उपपूर्वकात् स्तुत्यर्थता ।

धावकः-विका, धावकः-विका, दिधाविषकः-षिका, [6]दाधावकः-विका ;
धाविता-त्री, धावयिता-त्री, दिधाविषिता-त्री, दाधाविता-त्री ;
धावन्-न्ती, धावयन्-न्ती, दिधाविषन्-न्ती ; —
धाविष्यन्-न्ती-ती, धावयिष्यन्-न्ती-ती, दिधाविषिष्यन्-न्ती-ती ; —
धावमानः, धावयमानः, दिधाविषमाणः, दाधाव्यमानः ;
धाविष्यमाणः, धावयिष्यमाणः, दिधाविषिष्यमाणः, दाधाविष्यमाणः ;
[7]धौः-धावौ-धावः ; — — —

---

1. 'धाप्—' [द. उ. 5-39] इति नप्रत्यये रूपम् । धीयन्ते यासां विकारैः प्राणिन इति धानाः=यवविकाराः ।
2. 'दधातेर्यन् नुट् च' [द. उ. 8.19] इति यन्प्रत्यये नुडागमो विधीयते ।
3. 'सुसूधा—' [द. उ. 8-42] इति क्रन्प्रत्यये ईत्वे च रूपम् । दधाति आपत्सु चित्तमिति धीरः=सत्त्ववान् ।
4. 'विधाञो वेध च' [द. उ. 9-84] इति विपूर्वाद्धाञोऽसिप्रत्ययः, वेध इति इत्ययं चादेशः । विदधाति प्रजाः इति वेधाः=ब्रह्मा ।
5. 'वयसि धाञः', 'पयसि च' 'पुरसि च' [द. उ. 9-89-90-91] इत्येभिः असिप्रत्ययो विधीयते । डिच्चायम्, तेन टेर्लोपः । वयोधाः=प्राणी चन्द्रश्च । पयोधाः=समुद्रः । पुरोधाः=उपाध्यायः ।
6. यङन्ताण्वुलि, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासे दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
7. क्विपि, 'च्छ्वोः शूडनुनासिके च' (6-4-19) इत्यूठ् वकारस्य । 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धौ रूपमेवम् ।

[1]धौतम्-तः-तवान्, [A]उपधावितम्-तः-तवान्, धावितः, दिधाविषितः, दाधावितः-तवान् ;

धावः, प्रधावी, धावः, दिधाविषुः, दाधावः ;

धावितव्यम्, धावयितव्यम्, दिधाविषितव्यम्, दाधावितव्यम् ;

धावनीयम्, धावनीयम्, दिधाविषणीयम्, दाधावनीयम् ;

धाव्यम्, धाव्यम्, दिधाविष्यम्, दाधाव्यम् ;

ईषद्धावः-दुर्धावः-सुधावः ; — —

धाव्यमानः, धाव्यमानः, दिधाविष्यमाणः, दाधाव्यमानः ;

धावः, धावः, दिधाविषः, दाधावः ;

धावितुम्, धावयितुम्, दिधाविषितुम्, दाधावितुम् ;

[2]धावा, धावना, दिधाविषा, दाधावा ;

[3]प्रणिधावनम्-प्रनिधावनम्, धावनम्, दिधाविषणम्, दाधावनम् ;

[4]धावित्वा-धौत्वा, धावयित्वा, दिधाविषित्वा, दाधावित्वा ;

प्रधाव्य, प्रधाव्य, प्रदिधाविष्य, प्रदाधाव्य ;

धावम् २, धावित्वा २, धौत्वा २, } धावम् २, धावयित्वा २, } दिधाविषम् २, दिधाविषित्वा २, } दाधावम् २ ; दाधावित्वा २.

(897) " धि धारणे " (VI-तुदादिः-1406. अक. अनि. पर.)

'- गतौ' इति द्रुमे ।

---

1. क्त्वायामिड्विकल्पनात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति इण्निषेधे ऊठि, वृद्धौ च **धौतम्** इति रूपम् । 'यस्य विभाषा' (7-2-15) इति इण्निषेधस्यानित्यत्वपक्षे इटि **धावितम्** इत्याद्यपि भवति । तस्य सूत्रस्यानित्यत्वं तु क्रुन्तत्यादेः दीदित्करणात्, 'द्वितीया श्रितातीत**पतित**—' (2-1-24) इत्यत्र **पतित**ग्रहणाच्च ज्ञाप्यते ।

2. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः ।

3. उपसर्गस्थान्निमित्तात् परस्य नेः 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः ।

4. '**उदितो** वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इडभावपक्षे ऊडादिकं भवति ।

A. 'कृण्वन्तमाश्चर्यगतीरमूतिदं जगन्त्यवन्तं त्रिदशोप**धावितम्** ॥' धा. का. 1.76.



धायकः-यिका, धायकः-यिका, दिधीषकः-षिका, देधीयकः-यिका ;

इत्यादीनि सर्वाण्यपि रूपाणि ज्ञानार्थकक्षिधातुवत् (189) ज्ञेयानि । शतरि [1]धियन्-धियती-न्ती, इति रूपम् इति विशेषः । [A]आधितः ।

(898) " धिक्ष सन्दीपनक्लेशनजीवनेषु

(I-भ्वादिः-603. सक. सेट्. आत्म.)

[B]धिक्षकः-क्षिका, धिक्षकः-क्षिका, [2]दिधिक्षिषकः-षिका, देधिक्षकः-क्षिका ;

धिक्षिता-त्री, धिक्षयिता-त्री, दिधिक्षिषिता-त्री, देधिक्षिता-त्री ;

— धिक्षयन्-न्ती, धिक्षयिष्यन्-न्ती-ती ; —

धिक्षमाणः, धिक्षयमाणः, दिधिक्षिषमाणः, देधिक्षमाणः ;

धिक्षिष्यमाणः, धिक्षयिष्यमाणः, दिधिक्षिषिष्यमाणः, देधिक्षिष्यमाणः ;

[3]धिट्-धिड्-धिक्षौ-धिक्षः, [4]धिक्-धिक्षौ-धिक्षः ; —

धिक्षितम्-तः, धिक्षितः, दिधिक्षिषितः, देधिक्षितः-तवान् ;

धिक्षः, [5]धिक्षणः, [6]प्रधिक्षी, धिक्षः, दिधिक्षिषुः, देधिक्षः ;

धिक्षितव्यम्, धिक्षयितव्यम्, दिधिक्षिषितव्यम्, देधिक्षितव्यम् ;

धिक्षणीयम्, धिक्षणीयम्, दिधिक्षिषणीयम्, देधिक्षणीयम् ;

---

1. '**तुदादिभ्यः**—' (3-1-77) इति शप्रत्यये, तस्य सार्वधातुकत्वेन ङिद्वद्भावादङ्गस्य गुणनिषेधे, 'अचि श्नुधातुभ्रुवाम्—' (6-4-77) इति इयङादेशे च रूपम् ।

2. सन्नन्ताण्वुलि, 'स्कोः संयोगाद्योरन्ते च' (8-2-29) इति ककारलोपे, 'षढोः कः सि' (8-2-41) इति षकारस्य ककारे, सनः सकारस्य षत्वे च रूपमेवम् । संयोगादिलोपस्यासिद्धत्वात् लघूपधगुणो न । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

3. क्विपि, संयोगादिलोपे, षकारस्य 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे, तस्य चर्त्वविकल्पे च रूपम् ।

4. ण्यन्तात् क्विपि, णिलोपे, संयोगान्तलोपे च रूपमेवम् ।

5. '**अनुदात्तेत**श्च हलादेः' (3-2-149) इति तच्छीलादिषु कर्तृषु युच् ।

6. ताच्छीलिको णिनिप्रत्ययः ।

A. 'व्यापारेऽत्र तदाऽमरानपि रियन् आशाः पियन्ना**धित**-क्रौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद् गरम् ।' धा. का. 2.83.

B. 'संधुक्षमाणमरि**धिक्षक**मूष्मजालं संवृक्ष्य वेदमतशिक्षकभिक्षुगम्यम् ।' धा. का. 1.77.

| | | | |
|---|---|---|---|
| धिक्ष्यम्, | धिक्ष्यम्, | दिधिक्षिष्यम्, | देधिक्ष्यम् ; |
| ईषद्धिक्षः-दुर्धिक्षः-सुधिक्षः ; | | — | — |
| धिक्ष्यमाणः, | धिक्ष्यमाणः, | दिधिक्षिष्यमाणः, | देधिक्ष्यमाणः ; |
| धिक्षः, | धिक्षः, | दिधिक्षिषः, | देधिक्षः ; |
| धिक्षितुम्, | धिक्षयितुम्, | दिधिक्षिषितुम्, | देधिक्षितुम् ; |
| धिक्षा, | धिक्षणा, | दिधिक्षिषा, | देधिक्षा ; |
| धिक्षणम्, | धिक्षणम्, | दिधिक्षिषणम्, | देधिक्षणम् ; |
| धिक्षित्वा, | धिक्षयित्वा, | दिधिक्षिषित्वा, | देधिक्षित्वा ; |
| प्रधिक्ष्य, | प्रधिक्ष्य, | प्रदिधिक्षिष्य, | प्रदेधिक्ष्य ; |
| धिक्षम् २, धिक्षित्वा २, | धिक्षम् २, धिक्षयित्वा २, | दिधिक्षिषम् २, दिधिक्षिषित्वा २, | देधिक्षम् २ ; देधिक्षित्वा २. |

## (899) "धिवि प्रीणने" (I-भ्वादिः-593. सक. सेट्. पर.)

धिन्वकः न्विका, धिन्वकः-न्विका, दिधिन्विषकः-षिका, देधिन्वकः-न्विका ; इत्यादीनि सर्वाण्यपि रूपाणि जिन्वतिवत् (604) ज्ञेयानि। शतरि [1]धिन्वन्-ती इति रूपम्। [A]धिन्वितम्।

## (900) "धिष शब्दे" (III-जुहोत्यादिः-1103.अक.सेट्.पर.) छान्दसः।

धेषकः-षिका, धेषकः-षिका, दिधिषिषकः-दिधेषिषकः-षिका, देधिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि किटतिवत (190) ज्ञेयानि। क्विपि धिट्-धिड् धिषौ-धिषः इति रूपम्। शतरि [2]दिधिषत्-दिधिषती इति

1. शतरि, इदित्त्वान्नुमि, धिन्व् इति स्थिते, 'धिन्विकृण्व्योर च' (3-1-80) इति शपोऽपवादतया उप्रत्यये, तत्सन्नियोगेन धातुवकारस्याकारादेशे च कृते, उप्रत्ययस्य 'धातोः—' (3-1-22) इति विहितत्वात्, तिङ्शिद्भ्यो भिन्नत्वाच्चार्धधातुकत्वेन, 'अतो लोपः' (6-4-48) इति अकारस्य लोपे, यणादेशे, उगित्त्वान्नुमि च धिन्वन् इति रूपम्।
2. शतरि, शपि, तस्य, 'जुहोत्यादिभ्यः—' (2-4-74) इति श्लौ, 'श्लौ' (6-1-10) इति द्विर्वचने, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधे च रूपमेवम्।

A. 'हिन्वन्तमाभीरकुलं विलासिनीर्दिन्वन्तमाधिन्वितदेवमण्डलम् ॥' धा.का.1.75



रूपम्। [1]धिषणा, [2]धिष्ण्यम्।

## (901) "धीङ् आधारे"

(IV-दिवादिः-1136. अक. अनि. आत्म.) स्वादिः।

| | | | |
|---|---|---|---|
| धायकः-यिका, | धायकः-यिका, | [3]दिधीषकः-षिका, | देधीयकः-यिका ; |
| धेता-त्री, | धाययिता-त्री, | दिधीषिता-त्री, | देधीयिता-त्री ; |
| — | धाययन्-न्ती, | धाययिष्यन्-न्ती-ती ; | — |
| [4]धीयमानः, | धाययमानः, | दिधीषमाणः, | देधीयमानः ; |
| धेष्यमाणः, | धाययिष्यमाणः, | दिधीषिष्यमाणः, | देधीयिष्यमाणः ; |
| प्रधीः-प्रध्यौ-प्रध्यः ; | | — | — |
| [5]धीनम्[A]-धीनः-धीनवान्, | अधीनः, धायितः, | दिधीषितः, | देधीयितः-तवान् ; |
| धयः, | धायः, | दिधीषुः, | [6]देध्यः ; |
| धेतव्यम्, | धाययितव्यम्, | दिधीषितव्यम्, | देधीयितव्यम् ; |
| धयनीयम्, | धायनीयम्, | दिधीषणीयम्, | देधीयनीयम् ; |
| धेयम्, | धाय्यम्, | दिधीष्यम्, | देधीय्यम् ; |
| ईषद्धयः-दुर्धयः-सुधयः ; | | — | — |

1. ण्यन्तात् 'ण्यासश्रन्थो युच्' (3-3-107) इति युचि, अनादेशे, बाहुलकाद् गुणाभावे च रूपम्।
2. औणादिके [द. उ. 10.17] यक्प्रत्यये नुमागमे च रूपम्। दिधेष्टीति धिष्ण्यम् = गृहम्, ज्योतिश्च।
3. सन्नन्ताण्ण्वुलि, 'इको झल्' (1-2-9) इति झलादेः सनः कित्त्वाद् गुणनिषेधे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। 'पर्जन्यवल्लक्षण प्रवर्तते' (परिभाषा 121) इति न्यायात् दीर्घे स्वतो विद्यमानेऽपि पुनर्दीर्घः। एवं सन्नन्ते सर्वत्र बोध्यम्।
4. शानचि, 'दिवादिभ्यः—' (3-1-69) इति श्यनि, रूपम्।
5. 'स्वादय ओदितः' (ग. सू. दिवादौ) इति वचनात् ओदित्त्वमस्य धातोर्ज्ञेयम्। तेन, 'ओदितश्च' (8-2-45) इति निष्ठानत्वे रूपमेवम्। अधीनः इत्यत्र न धीनः अधीनः इति व्युत्पत्तिः। 'वाक्यं वक्तर्यधीनं हि', 'अस्मात्स्वधीनं किमु निःस्पृहाणाम्' (किरातार्जुनीये 3-9) इत्यादिषु अधीनशब्दः परतन्त्रवचनः, अव्युत्पन्नः।
6. यङन्तात् पचाद्यचि, यङो लुकि, यणादेशः।

A. 'किं सूयसे गिरमदून नितान्तदीनामुड्डीनकाकसम भूपतिधीनमेतत्।' धा. का. 2.58.

| | | | |
|---|---|---|---|
| धीयमानः, | धाय्यमानः, | दिधीष्यमाणः, | देधीय्यमानः ; |
| धयः, | धायः, | दिधीषः, | देधीयः ; |
| धेतुम्, | धाययितुम्, | दिधीषितुम्, | देधीयितुम् ; |
| धीतिः, | धायना, | दिधीषा, | देधीया ; |
| धयनम्, | धायनम्, | दिधीषणम्, | देधीयनम् ; |
| धीत्वा, | धाययित्वा, | दिधीषित्वा, | देधीयित्वा ; |
| प्रधीय, | प्रधाय्य, | प्रदिधीष्य, | प्रदेधीय्य ; |
| धायम् २, } धीत्वा २, } | धायम् २, } धाययित्वा २, } | दिधीषम् २, } दिधीषित्वा २, } | देधीयम् २ ; } देधीयित्वा २. } |

## (902) " धुक्ष सन्दीपनक्लेशनजीवनेषु "

(I-भ्वादिः-602. सक. सेट्. आत्म.)

धुक्षकः-क्षिका, धुक्षकः-क्षिका, दुधुक्षिषकः-षिका, दोधुक्षकः-क्षिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक**धिक्षति**वत् (898) ज्ञेयानि । [A]सन्धुक्षमाणः ।

## (903) " धुञ् कम्पने " (V-स्वादिः-1255. सक. अनि. उभ.) [अ]

' धूनयति धवति धवते धुनोति धुनुते धुनाति च धुनीते ।
धूनोति धूनुते स्युः पदानि कम्पे, विधूनने धुवति ॥ '

(श्लो. 26) इति **देवः** ।

धावकः-विका, धावकः-विका, [1]दुधूषकः-षिका, [2]धूयकः-यिका ;

1. सन्नन्ताण्वुलि, झलादेः सनः कित्वात्, गुणनिषेधः, ' अज्झनगमाम्—' (6-4-16) इति दीर्घः । एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या ।
2. यङन्ताण्वुलि, ' अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । अभ्यासे गुणः । यङन्ते सर्वत्रैवैव प्रक्रिया ।

[अ] ' **धूञ् कम्पने** ' इति अत्रैव (स्वादावेव) दीर्घान्तं **क्षीरस्वामि**प्रभृतयः पठन्ति । तस्य च ण्यन्ते नुगागमे **धूनयती**त्यादिरूपं प्रदर्शयन्ति । स च दीर्घान्तो धातुः सेट् । ' ऊर्ध्वं **धूनोति** वायुर्विधृतशवशिरःश्रेणिकुञ्जेषु—' (मालतीमाधवे 5-4) इति, ' **धूनोति** चम्पकवनानि—' (कविरहस्ये) इति च प्रयोगदर्शनात् सोऽप्यस्तीति ज्ञायते । अत्र ह्रस्वान्तपाठमादृत्य रूपाणि विलिखितानि । दीर्घान्तस्य तु यथाक्रममुत्तरत्र लेखनमादृतम् ।

A. ' **सन्धुक्षमाण**मरिधिक्षकमूष्मजालं संवृक्ष्य वेदमतशिक्षकभिक्षुगम्यम् ।' धा. का. 1. 77.



| | | | |
|---|---|---|---|
| धोता-त्री, | धावयिता-त्री, | दुधूषिता-त्री, | दोधूयिता-त्री ; |
| [1]धुन्वन्-[A]ती, | धावयन्-न्ती, | दुधूषन्-न्ती ; | — |
| धोष्यन्-न्ती-ती, | धावयिष्यन्-न्ती-ती, | दुधूषिष्यन्-न्ती-ती ; | |
| धुन्वानः, | धावयमानः, | दुधूषमाणः, | दोधूयमानः ; |
| धोष्यमाणः, | धावयिष्यमाणः, | दुधूषिष्यमाणः, | दोधूयिष्यमाणः ; |
| [2]विधुत्-विधुतौ-विधुतः ; | | — | — |
| [B]धुतम्-धुतः-धुतवान्, | धावितः, | दुधूषितः, | दोधूयितः-तवान् ; |
| धवः, [3]धवनः, प्रधावी, | धावः, | दुधूषुः, | [4]दोधुः ; |
| धोतव्यम्, | धावयितव्यम्, | दुधूषितव्यम्, | दोधूयितव्यम् ; |
| धवनीयम्, | धावनीयम्, | दुधूषणीयम्, | दोधूयनीयम् ; |
| [5]धव्यम्, अवश्यधाव्यम्, | धाव्यम्, | दुधूष्यम्, | दोधूय्यम् ; |
| [6]धूयमानः, | धाव्यमानः, | दुधूष्यमाणः, | दोधूय्यमानः ; |
| [7]धवः, | धावः, | दुधूषः, | दोधूयः ; |
| धोतुम्, | धावयितुम्, | दुधूषितुम्, | दोधूयितुम् ; |
| विधुतिः, [8]धुनिः, | धावना, | दुधूषा, | दोधूया ; |
| धवनम्, | धावनम्, | दुधूषणम्, | दोधूयनम् ; |
| धुत्वा, | धावयित्वा, | दुधूषित्वा, | दोधूयित्वा ; |
| विधुत्य, | विधाव्य, | विदुधूष्य, | विदोधूय्य ; |

1. शतरि, ' **स्वादिभ्यः—**' (3-1-73) इति श्नुप्रत्यये, यणादेशे च रूपम् ।
2. क्विपि, ' ह्रस्वस्य पिति कृति—' (6-1-71) इति तुगागमः । ल्यप्यप्येवं ज्ञेयम् ।
3. ' **चलन**शब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिको युच् । अकर्मकत्वमपि धातोरस्य विवक्षाभेदेन भवति ।
4. यङन्तात् पचाद्यचि यङो लुकि, यणादेशे रूपमेवम् ।
5. ' अचो यत् ' (3-1-97) इति यत्प्रत्यये गुणः, अवादेशश्च । आवश्यकार्थे तु ' ओरावश्यके ' (3-1-125) इति ण्यत्प्रत्यये आवादेशः ।
6. यगन्ताच्छानशि, ' अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
7. ' ऋदोरप् ' (3-3-57) इति भावेऽप्प्रत्ययः । घञोऽपवादः ।
8. क्तिनि, बाहुलकात् निप्रत्ययः, ' **ग्लानिः, म्लानिः** ' इतिवत् । **धुनिः** = नदी ।

A. ' हेम्नः स्थलीषु परितः परिवृत्य वाजी
**धुन्वन्** वपुः प्रविततायतकेशपङ्क्तिः ।' शि. व. 5.55.

B. ' कुब्जा कृतारिबलमैक्षत तृण्वती सा
पात्रं समीर**धुत**सौरभधूतभृङ्गम् ॥' धा. का. 2.68.

धावम् २, } धावम् २, } दुधूषम् २, } दोधूयम् २ ; }
धुत्वा २, } धावयित्वा २, } दुधूषित्वा २, } दोधूयित्वा २. }

(904) " **धुर्वी हिंसार्थः** " (I-भ्वादिः-573. अक. सेट्. पर.)

धूर्वकः-र्विका, धूर्वकः-र्विका, दुधूर्विषकः-षिका, दोधूर्वकः-र्विका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकतूर्वतिवत् (756) ज्ञेयानि । [1]धूः-धुरौ-धुरः । [2]धूर्तः । [A]धूर्वितुम् ।

(905) " **धू विधूनने** " (VI-तुदादिः-1398. सक. सेट्. पर.) **कुटादिः**।

'धूनयति धवति धवते, धुनोति धुनुते धुनाति च धुनीते ।
धूनोति धूनुते स्युः पदानि कम्पे, विधूनने धुवति ॥' (श्लो. 26) इति **देवः**।

धावकः-विका, धावकः-विका, दुधूषकः-षिका, दोधूयकः-यिका ; धुविता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककुटतिवत् (238) ज्ञेयानि । धुवन्-ती, [ण्यन्तात् शतैव—[3]धावयन्-न्ती,] [4]धुवनः, [5]धुवित्रम्, [6]धुवकः-धुवका, [B]धूतः इति रूपाण्यस्य भवन्ति, इति विशेषः ।

---

1. '**भ्राजभासधुर्वि**—' (3-2-177) इत्यादिना ताच्छीलिके क्विप्प्रत्यये, '**राल्लोपः**' (6-4-21) इति वकारलोपे, '**र्वोरुपधाया दीर्घ इकः**' (8-2-67) इति दीर्घे च रूपम् ।
2. औणादिके [द. उ. 6.7] तन्प्रत्यये उकारदीर्घे '**लोपो व्योः**—' (6-1-66) इति वकारलोपे च रूपम् । धूर्तः = शठः ।
3. '**निगरणचलनार्थेभ्यः**—' (1-3-87) इति ण्यन्तान्नित्यं शतैव ।
4. '**चलनशब्दार्थादकर्मकात्**—' (3-2-148) इति ताच्छीलिको युच् । अकर्मकत्वमस्य धातोर्विवक्षायां भवति ।
5. '**अर्तिलूधूसूखनसहचर इत्रः**' (3-2-184) इति करणे इत्रप्रत्ययः । इत्रप्रत्ययस्य ङिद्वद्भावेन गुणनिषेधात्, उवङादेशे **धुवित्रम्** इति भवति । **केचित्तु** गुणे **धवित्र**मित्युदाहरन्ति । 'प्राणा वै **धवित्राणि**' इति प्रयोगे छान्दसत्वाद् गुणः इति **हरदत्तः** ।
6. '**आशिषि च**' (3-1-150) इति वुन् । क्षिपकादिषु (वा. 7-3-45) पाठात् **धुवका** इत्यत्र '**प्रत्ययस्थात्**—' (7-3-44) इति इत्वं न ।

A. 'दुर्दूर्विधून् **धूर्वितु**मेव गूर्वणं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥' धा. का 1-73.

B. 'नूत्वा किं भयधूतविद्रुतगुवल्लोकं तदा तद्धुव-
त्कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥' धा. का. 2.82.

# शोधनिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 501 | 17 | चायका | चायकः |
| 503 | Foot-note A | कश्चित् | कच्चित् |
| 506 | 19 | Aचेटिः | चेटिः |
| " | A Foot-note to go on next page. | | |
| 511 | 11-12 मध्ये, " प्रचित्रयिष्य, प्रचिचित्रयिष्य;" इति योज्यम् । | | |
| 513 | 10 | शथिल्ये | शैथिल्ये |
| 519 | 14 | पदीत्वेन | पदित्वेन |
| 525 | 1 | चूर्णक | चूर्णकः |
| 526 | 13 | चुचुषिषित्वा | चुचूषिषित्वा |
| 528 | 23 | "चर्षमाणः....चिवर्षिषमाणः चरी .." इति पाठ्यम् । | |
| 536 | 10 | छद्यम्....चाछद्यम्, | छाद्यम्....चाच्छद्यम्, |
| 537 | 11 | अपचारणे | अपवारणे |
| " | 22 | ...ष्ट्रन्प्रत्यये | इति ष्ट्रन्प्रत्यये |
| 546 | 9 | यिका | सिका |
| 553 | 8 | " धाञ्कृञ्सृजनिगमिभ्यः" इति पाठ्यम् । | |
| " | 23 | विभाया | विभाषा |
| 554 | 22 | ...चतिजनि.... | ....चतियतिजनि.... |
| 555 | 24 | कुकुन् | क्वुन् |
| 557 | 7 | जिजपिषुः | जिजपिषः |
| 559 | 26 | झमज्जेम | झमञ्जेम |
| 573 | 6 | जिजेजिपिता | जिजेषिषिता |
| 574 | 12 | जेजीवमम् | जेजीवनम् |
| 587 | 29 | 8 | A |
| 596 | 16 | णिति | ञ्णिति |
| 597 | 28 | "...म्लाज्याह्याभ्यो ..95)" इति पाठ्यम् | |
| 613 | 11 पङ्क्तिः तृतीयपङ्क्तेः पूर्वं पाठ्या । | | |
| 629 | 20 | ...गासे | मासे |
| 635 | 25 | यण्, णत्वञ्च पौर्वापर्येण अवगन्तव्यम् । | |
| 640 | 24 | " ह्रस्वश्च " इति मास्तु । | |
| 641 | 23 | ....स्थाकारस्य | ...स्थाद्याकारस्य |
| 657 | 23 | (6-4-52) | (6-4-51) |
| 666 | 27 | क्रधा | क्रुधा |
| 667 | 24 | व्यथतीति | व्यथत इति |
| 674 | 14 | प्रतोतूर्व्यं | प्रतोतूर्व्य |
| 678 | 6 | × | iv |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 678 | 29 | जनदः | जनदाः |
| 680 | 21 | र्णिकः, | र्णिका, |
| 682 | 5 | तृर्णित्वा | तर्णित्वा |
| 684 | 30 | 3 | 4 |
| 689 | 7 | तरीतृपः | तरीतर्पः |
| 691 | 29 | तोफा | तोपा |
| 692 | 2 | तरीतृपः | तरीतर्पः |
| 704 | 16 | त्रसयेत् | त्रंसयेत् |
| 707 | 1 | त्रुप | त्रैङ् |
| 709 | 18 | तित्वचिष | तित्वचिष्य |
| 710 | 26 | ... ुक्त .... | ... मुक्त .... |
| 712 | 2 | त्वरम् २,) | त्वारम् २,) |
| 712 | 25 | अभ्यास्य | अभ्यासस्य |
| 713 | 8 | त्सरकः | त्सारकः |
| 716 | 9 | 9 देभि .... | 6 देभि .... |
| 726 | 27 | णावुप | इति णावुप |
| 738 | 25 | नुम्विक | इति नुम्विक |
| 741 | 25 | नीदि | नीर्दि |
| 743 | 34 | दुयषुः | दुद्यूषुः |
| 747 | 4 | प्रादेशः | प्रदेशः प्रादेशः |
| 749 | 4 | सकर्मकाकर्म .... | सकर्मकत्वाकर्म ... |
| 750 | 28 | कत्रर्थे | कर्त्रर्थे |
| 756 | 7 | तेनाक्राम | तेनातिक्राम |
| 757 | 7 | भङ्क | भङ्गः |
| ,, | 13 | माण ; | माणः ; |
| 761 | 8 | तवात | तवान् |
| 761 | 27 | प्रस्ययः | प्रत्ययः |
| 762 | 7 | हम्फ | हन्फ |
| 763 | 11 | ....भिषक | ....भिषकः |
| 766 | 28 | प्रांह्वतना | प्राह्वेतना |
| 771 | 19 | किद्ह्व | क्दिभ्र |
| 774 | 30 | जाद्धसाम् | जाद्धसांम् |
| 777 | 10 | णामलमर्थं | णालमर्थं |
| 786 | 18 | दृ संवरणे | दृञ् संवरणे |
| 790 | 16 | बहुधीवा बहु | बहुधीवा । बहु |
| 792 | 18 | अधिघानम् | अपिधानम् |

—∘∘❖∘∘—